१२. जगत्पिता दाशरथिर्भवन्नथो
कुलेऽमलेऽस्मिन्विमलाशयो हरिः ।
बभार हारन्निजराजबीजिनाम्
स नायकत्वं जगदेकनायकः ॥

१३. जगौ यदीयम् ननु रामनाम
तद्द्विधामुनीनाञ्जपतां तदन्वहम् ।
मुमुक्षतां तारकामन्त्र मुख्यता-
मनङ्गसूक्तत्वमथो वृषस्यताम् ॥

इदानीम् भगवत्पूर्णावतारम् रामचन्द्रम् वर्णितु मारभते ॥

१२. जगत्पितेति ॥ अथो अथानन्तरम् इक्ष्वाकुप्रभृति पञ्चपञ्चाशत्पूरुषानन्तर मित्यर्थः । यद्वा इतः प्रभृति कार्त्स्न्येंन वंशवर्णनात् । कार्त्स्न्यार्थक स्तदारम्भार्थकोवा । अथो शब्दः । मङ्गलानन्तरारम्भ प्रश्न कार्त्स्न्येष्वथो अथ इत्यमरः । जगत्पिता जगज्जनकः । अत एव निखिलस्य ब्रह्माण्डस्य एकनायकः मुख्यप्रभुः । एके मुख्यान्य केवला इति । अधिभूर्नायको नेताप्रभुः परिबृढोऽधिप इति चामरः । विमलाशयः अवतारा- न्तरापेक्षया निष्कपटाभिप्रायः । हरिः श्रीमन्नारायण एव नतु तदन्य इत्यर्थः । दशरथस्यापत्यं पुमान् दाश- रथिः । अत इञ् । दशरथपुत्रात्मना जातस्सन्नित्यर्थः । स राम इत्यर्थः । अमले अशुद्धिरहिते । अस्मिन् कुले सूर्यवंशे । हारो मुक्तावली स इवाचरन्तो हारन्तः । आचार क्विबन्ता द्धारशब्दाच्छ तृप्रत्ययः । ते च ते निज राजबीजिनः स्वकीयराजकुलोत्पन्नाश्च राजबीजी राजवंश्य इत्यमरः । तेषां हारायमाण स्ववंशीय- राजन्यानां मध्ये नायकत्वं हारमध्य मणित्वम् नेतृत्वञ्च बभार धृतवान् । तेषां सनायकत्वम् नायक सहि- तत्वम् वा पुपोषेत्यर्थः । नायको नेतरिश्रेष्ठे हारमध्य मणावपीति विश्वः । इहाचार क्विपा निजराज बीजि- नाम् हारसादृश्य प्रतीतेः नायकत्वमित्यत्रापि नायक इव नायक इति हारमध्यमणिसादृश्यस्य नेतरि कल्पितु मुचितत्वा दुपमालङ्कारः । एवम् योजगत्पिता स दाशरथि रिति अखिलैकनायकोऽपि तदेक देश नायक इति च विरोध इत्यपि द्रष्टव्यम् ॥

किन्नामार्यमित्याकाङ्क्षायां नाम्नः प्रकाशनमुखेन तन्माहात्म्यं दर्शयति ॥

१३. जगाविति । तत् वेदागमप्रसिद्धम् यदीयम् यस्यदाशरथेः सम्बन्धि । रामनाम रमन्ते योगिनोऽस्मिन्निति अन्वर्थं न्नामधेयम् द्विधा द्विप्रकारीभूय मुमुक्षताम् मोक्तुमिच्छताम् । मुच्ऌमोक्षण इति धातोः सनन्ताच्छतृ प्रत्ययः । अतएव अन्वहम् प्रतिदिनम् तन्नाम जपताम् रामरामेति जल्पतां मुनीनां मननशीलामुनयः तेषां । तारयतीति तारकम् तच्चमन्त्राणां मुख्यञ्चेति कर्मधारयः । तस्य भावः तत्ता ताम् । जगौ प्राप । इणोलिटि गाडा देशः । गत्यर्थ धातूना म्प्राप्त्यर्थता प्रसिद्धा तारकमन्त्रो बभूवेत्यर्थः । अथोप- क्षान्नरे । वृषस्यतां वृषस्यन्तीति वृषस्यन्त स्तेषाम् । कामुकीत्वमापन्नाना मित्यर्थः । अश्ववृषयो मैथुनेच्छाया मिति क्वचिपरे वृषशब्दादसुगागमः । ततः शतृप्रत्ययः ननु मैथुनार्थम् वृषमिच्छतीति वृषस्यति गौरिति व्याकरणे प्रयोगदर्शनात् । तथा मनुष्यविषये कथम् सङ्गच्छत इति चेत् । अत्राश्ववृषरूपप्रकृत्यर्थपरित्यागेन

१४. जगत्त्रया नन्दनिधानमन्दिरम्
स रामचन्द्रोऽखिललोकवन्दितः ।
अमन्दसौन्दर्य तरङ्गतुन्दिल-
स्समुद्रतां सान्द्रगुणैरविन्दत ॥

१५. क्रमात्कलाभिस्सकलाभि रात्मनो-
भिराम रूपोऽयमखण्डतां दधत् ।
सलक्षणः सन्नकलङ्कितद्युति-
स्समाश्रयत्कौशिक शंसितां दिशम् ॥

---

मैथुनेच्छैवार्थं इति गृहाण । अत एव वृषस्यन्ती तु कामुकीति कोशः । स्वरसतः सङ्गच्छते तथाच लक्ष्मणम् सावृषस्यन्तीत्यादि प्रयोगो भट्टिकाव्यादौ दृश्यते । अथवा वृषं नरमिच्छन्त्यात्मनो मैथुनार्थमिति तथा । वृषो नरो वृषः काल इत्यनेर्थमञ्जरी । तथा भूतानाम् मुनीनां अनङ्गसूक्तत्वम् अनङ्गस्य कन्दर्पस्य सूक्तम् स्तोत्रमन्त्रादि तत्त्वम् । तद्भावमित्यर्थः जगौ ननु इत्यवधारणे । कामार्थौहिकामसूक्तम् जपन्ति । तथा च नैषध चरिते कामसूक्तजपव्रतीति प्रयोगः । रामचन्द्रस्य रूपलावण्यमोहिता मुनयोऽपि तत्सम्भोगार्थिन आत्मनः स्त्रीत्वलिप्सवो बभूवुरिति पुराणादि प्रसिद्धम् । तथा च रत्नाकरे । यत्सौन्दर्यमुदीक्ष्य जीर्णमुनयो वाताम्बुपर्णाशना धैर्यं नार्य इवापसार्य सहसासन्त्यज्य लज्जामपि । सम्भोगाङ्क्षिल बभ्रुरित्यभिदधे पौराणिकैस्तत्कथा रामस्यकनु कामरूपविभवः स्त्रीमात्रनेत्रप्रिय इति ॥

इतः प्रभृति विंशतिभि श्श्लोकै स्तमेव चन्द्रेण संश्लिष्य विशिनष्टि ॥

१४. जगदिति । जगताम् त्रयम् जगत्त्रयम् । तस्य लोकत्रयस्यापि आनन्दानाम् । निधीयन्ते अस्मिन्निति निधानम् । तच्च मन्दिरञ्चेति कर्मधारयः । परवल्लिङ्गं द्वन्द्व तत्पुरुषयो रिति परवल्लिङ्गता । वेदाः प्रमाणमिति वल्लिङ्गभेदो बोध्यः । सर्वेषा मानन्ददायकत्वा न्निखिलजगदानन्द भाण्डागार स्वरूप इत्यर्थः । यद्वा जगत्त्रयानन्द एव निधानम्, पद्मशङ्खादि रूपोनिधिः । तस्य मन्दिरमाश्रयभूतः । एतेन समुद्र सारूप्यमपि घटते । अत एव निखिललोकवन्दितः सकलभुवनाभिष्टुतः । स राम श्चन्द्र इव रामचन्द्रः । तथा प्रसिद्धनामा दाशरथि रित्यर्थः । अमन्द मनल्पम् । लोकाति शायीति यावत् । यत् सौन्दर्यम् । तदेव तरङ्गोलहरी सामान्यम् । तेन तुन्दिलः पिचण्डिलः पुष्ट इति यावत् । तथाभूतःसन् सान्द्रानिरन्तरा ये गुणा दयादाक्षिण्यादयः । अन्यत्र ह्लादकत्वादयः । तैः समुद्रताम् गुणै र्दुरवगाहत्वात् समुद्रभावम् अविन्दत प्राप्तवान् । गुणसमुद्रोऽभूदित्यर्थः । अत्र रामचन्द्रपदेन रमणीयचन्द्ररूपार्थोऽपि व्यज्यते । तस्य उत्तरत्रापि श्लेषेणवर्णितत्वात् । अत्ररूपकश्लेषोपमादयोऽलङ्कारा वेदितव्याः । तत्र प्रकृतस्य रामचन्द्रस्य अप्रकृतस्य चन्द्रस्य च श्लेषात् प्रकृता प्रकृतश्लेषः । परेतु प्रकृतयोरेव श्लिष्टत्वे श्लेषालङ्कारः । एकस्या प्रकृतत्वे तस्य व्यङ्ग्यत्वेन प्रकृतोपयोगाय रामचन्द्र इत्यादौ रामचन्द्र इव रामचन्द्र इति सादृश्यकल्पना व्यङ्ग्योपमेति प्राहुः ॥

१५. क्रमादिति । अभिरामरूप मनोज्ञरूपः अयं रामः क्रमात् कालक्रमेण,शिक्षाभ्यध्ययन क्रमेण वाः सकलाभिस्समग्राभिः कलाभिः । गीतनृत्यादिभिश्चतुष्षष्टीप्रकाराभिरित्यर्थः । कलानृत्यादिकाज्ञेया इति कोशात्

१६. स वायसोद्वेगमयं हि कौशिकम्
सहैत्य घस्राधिकजातसाध्वसम् ।
अमोघकृत्यं निशितं नभश्चर-
म्पलाशनेष्वाकलयन्नतोषयत् ॥

आत्मनः स्वस्य अखण्डताम् परिपूर्णताम् दधत् दधानः सकल शास्त्रसम्पन्न इत्यर्थः । यद्वा आत्मनः । परमात्मनः । 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनी 'ति कोशात् । सकलाभिः कलाभिः सर्वैरप्यंशैः अखण्डताम् दधत् परिपूर्णतम इत्यर्थः । तस्य परिपूर्णतमत्वे प्रमाणम् यथा । 'सर्वेचांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् । परिपूर्णतमो रामो ब्रह्मशापात्स्वविस्मृत ' इति ब्रह्मवैवर्तपुराणम् । तथा सलक्षणः लक्ष्मणेन निजकनिष्ठभ्रात्रा सहितस्सन्नित्यर्थः । कौशिकेन विश्वामित्रेण शंसिताम् कथितां प्रदर्शितामिति यावत् । दिशम् दिङ्मार्गम् समाश्रयत् सम्यगाश्रितवान् । स्वयागरक्षार्थम् विश्वामित्रेण येन मार्गेण नीतस्तेन मार्गेण गतवानित्यर्थः । अथ सर्वशास्त्रसम्पन्नोऽपि विश्वामित्रेण शंसितबलातिबलादि विद्यासरणिञ्च प्राप्तवानित्यर्थः । गृहाण द्वे इमे विद्ये बलामतिबलां तथेति विश्वामित्रेण तन्नामकास्त्र विद्याद्वयम् रामाय दत्तमिति रामायणम् ।

अथ चन्द्रपक्षे-अभिरामरूपोयम् चन्द्रः क्रमात् शुक्लप्रतिपदादितिथिषु कलावृद्धिक्रमात् सकलाभिः कलाभिः स्वषोडशांशरूपैः ' कलातुषोडशोभाग ' इत्यमरः । आत्मनो निजशरीरस्य अखण्डतां परिपूर्णताम् दधत् दधानः अतएव सलक्षणस्सन् लक्ष्मणेन कलङ्केनसहितस्सन्नपीत्यर्थः । 'कलङ्काङ्कौ लाञ्छनञ्चचिह्नं लक्ष्म च लक्षण मि'त्यमरः । अकलङ्किता कलङ्करहिताद्युतिर्ज्योत्स्नारूपा कान्तिर्यस्य सतथाभूतस्सन् सकलकलापूर्णत्वेनाक्षीणकान्तिरित्यर्थः । कौशिकशंसिताम् कौशिकेन शक्रेण शंसिता आत्मीयत्वेन कथिता । कौशिकः शंसितो यस्याम् सा वा ताम् दिशम् । पूर्वदिशमित्यर्थः । समाश्रयत् । पूर्वदिश्युदीयायेत्यर्थः । पूर्णचन्द्रकर्तृकपूर्वदिक्कर्मकसमाश्रयणमिव रामकर्तृकविश्वामित्रदर्शितदिङ्मार्ग कर्मकातीत कालीन समाश्रयणमिति वाक्यार्थः । एव मुत्तरत्रापि यथायथं सर्वत्र समर्थनीयम् ॥

ननु कौशिकेन साकङ्गत्वा किं कृतवानित्यत आह

१६. सवायेति । अयं रामः सवाय सवो यागस्तस्मै तत्कर्तुं मित्यर्थः । क्रियार्थोपपदेत्यादिना चतुर्थी । सोद्वेगम् उद्वेगेन सहितम् त्वरायुक्तमिति यावत् । तथाघस्राधिकजातसाध्वसम् । घस्रा हिंस्राः ' घस्रस्तु दिवसे हिंस्रे ' इति कोशात् । तेभ्यो यागविघातुक राक्षसेभ्य इत्यर्थः । अधिकं जातं साध्वसं भयं यस्य तम् । ' भीतिर्भीस्साध्वसम्भयमि'त्यमरः । तथा भूतम् कौशिकं विश्वामित्रं सहैत्य सहायीभूय । निशितं घर्षितं अतएव अमोघम् सफलं कृत्यंलक्ष्यवेधनरूपं यस्य तं नभश्चरम् नभसि चरतीति नभश्चरो बाणः ' पृषत्कबाणविशिखा अजिह्मगखगाशुगा ' इत्यादि बाणपर्यायेषु खगादिशब्दानां पठितत्वात् । तं पलाशनेषु पलम् मांसमशनं भोजनं येषां ते पलाशनाः क्रव्यादाः राक्षसा इति यावत् । तेषु आकलयन् प्रयुञ्जानस्सन् । कलिधातोरनेकार्थताकलिवली कामधेनु रित्युक्तेः । अतोषयत् । बाणप्रयोगैराक्षसान् हत्वा यागसंरक्षणेन विश्वामित्रं सन्तोषितवानित्यर्थः ॥

१७. यदीयपादम्परिरभ्य जीवन-
स्थितिं समाश्रित्य शिलाविलासिनी ।
स चापभङ्गोल्लसदङ्गसङ्गति-
ङ्करप्रसारैर्जनकस्य सेवितः ॥

अन्यत्र सोयं चन्द्रः वायसोद्वेगं वायसेभ्यः काकेभ्य उद्वेगः क्लेशो भयं वा यस्य तम् । 'उद्वेगः स्तिमिते क्लेशे भये मन्थरगामिनी'ति शब्दार्णवः । अत एव घस्रे दिवसे अधिकजातमाध्वसं अत्यन्तदिवाभीत मित्यर्थः। उलूकानां दिवान्धत्वात् काकानां तत्र प्रबलत्वाच्चेति भावः । तथा भूतं कौशिकं कौशिकनामानं तं प्रसिद्धं नभश्चरं पक्षिणं उलूकमित्यर्थः । 'कौशिको नकुले व्यालग्राहे गुग्गुलु शक्रयोः । कोशज्ञो लूकयोश्चस्याद्विश्वा-मित्रमुनावपी'ति विश्वः । निशिरात्रौ सहैत्य तत्सहायोभूत्वा । निशि पेचकानाम्प्राबल्यादिति भावः । पला-शनेषु पलप्रधानान्यशनानि पलाशनानि तेषु मांसभोजनेषु विषये : अमोघकृत्यम् अमोघं सफलं कृत्यं कार्यं यस्य तं तथाभूतमाकलयन् विदधत् सन् अतोषयत् आनन्दयामास । निशा सञ्चारिणां मांसाशिना मुलू-कानां दिवा वायसभयक्रान्तानाञ्च । स्वयं निशाकरत्वेन सहायीभूय तान् मांसाशनादिस्वकर्मसाधनक्षमान् कृत्वापरितोषयति स्मेति समुदितोर्थः ॥

विश्वामित्रयागसंरक्षणानन्तर मिमिथिलाम्पुरीङ्गतस्य रामस्य तन्मध्येकृत्यानि दर्शयति ॥

१७. यदीयेत्यादि । शिलापाषाणरूपा अहल्यायदीयपादं यस्यायं यदीयः । वृद्धाच्छ इति छप्रत्ययः । स चासौ पादश्च तम् जनकपुरीगमनसमये मार्गेयस्य रामचन्द्रस्य सम्बन्धिनं पादपद्म मित्यर्थः। परिरभ्य आलिङ्गय जीवनस्य स्थिति रवस्थानम् ताम् पुनः प्राणधारणा सङ्गतिमित्यर्थः। समाश्रित्य प्राप्य विलासिनी पुनः स्वभर्तृसमागमादिना विलासवती स्त्रीरूपिणीत्यर्थः । आसीदितिशेषः । सत्ययुगेच्छद्मगौतमरूपिणेन्द्रेण सतीत्वपरिभ्रष्टा हल्या स्वभर्तृ गौतमशापेन पाषाणदेहा बभूव। पुनः त्रेतायुगे श्रीरामचन्द्रस्य पादस्पर्शात् शापाद्विनिर्मुक्तासती पुनः पूर्वरूपा मानवी बभूवेति रामायणम् । स रामः जनकस्य तन्नाम्नो महर्षेः करप्र-सारैः हस्तयोः प्रसारणक्रियाभिः चापस्य शिवधनुषो भङ्गेन भञ्जनेन हेतुना उल्लसत् हर्षोच्छूनमित्यर्थः । यद-ङ्गम् निजशरीरम् तस्य सङ्गतिम् संश्लेषम् । जनककरप्रसारणकरणकलिङ्गनमित्यर्थः । सेवितः प्राप्तवान् । गत्यर्थे कर्मकत्वात्कर्तरि क्तः ! ग्लहीकृत सीताविवाहार्थम् शुल्करूपेण स्थितस्य शिवधनुषो भञ्जना जनकेना-लिङ्गनादिना सम्मानितो बभूवेत्यर्थः ॥

अन्यत्र । शिला चन्द्रकान्तशिला यदीयपादम् यस्य चन्द्रस्य सम्बन्धिनम् रश्मिम् । 'पादारश्म्य-ङ्घ्रितुर्यांशा ' इत्यमरः । परिरभ्य संश्लिष्य चन्द्रिका सम्पर्कं लब्ध्वेति यावत् । जीवनस्य जलस्य स्थितिमिव स्थितिम् प्रतिष्ठाम् । 'जीवनं भुवनं वनमि'ति जलपर्याये अमरः । द्रवभावमित्यर्थः । समाश्रित्य लब्ध्वा विलासिनी विलसितुम् क्रीडितुम शीलम् यस्या सा । तथा भूता जलवत् स्राविणी बभूवेत्यर्थः । चन्द्र-किरण संयोगेन चन्द्रकान्तशिला द्रवी भवतीति प्रसिद्धिः । सेवितः पूजितः सर्वैरित्यर्थः । स च चन्द्रः कर प्रसारैः निजकिरण प्रसारणैः । जनकस्य निजतातस्य समुद्रस्येत्यर्थः । भङ्गैस्तरङ्गैः रुल्लसन्ति उद्गच्छन्ति यानि अङ्गानि जलमयावयवाः तेषां सङ्गतिम् संश्लेषम् आप प्राप्तवान् । चन्द्रोदये हि समुद्र उत्तरङ्गो भवतीति प्रसिद्धिः ॥

धनुर्भङ्गानन्तरं सीतां परिणीतवानित्याह ॥

१८. रसोदया कैरवहासशोभिनी
कुमुद्वती पूज्यतया च भाविनी ।
पतिं यमासाद्य जगत्प्रसादना-
द्वितीयमूर्तिं म्मुदमाददे तदा ॥

१९. अलेख नक्षत्रपराभवज्वलत्
प्रभाभिराप्लावितदिक्चयश्चयः ।
स्वमार्गगम्भार्गव मात्मतेजसा
समाप्नुवन् ग्लापयति स्म केवलम् ॥

१८. रसोदयेति। तदा शिवधनु र्भङ्गोत्तरकाले कैरवस्येव हासेन शोभत इति कैरवहास शोभिनी कुमुदहास प्रकाशिनी स्वाभिमतवरलाभादिति भावः। कुमुद्वती कुशपत्नी कुशनाम्नो रामसुतस्य पत्नी नाम कुमुद्वतीति पुराणादि प्रसिद्धम्। तत्पूज्यतया तत्पूजार्हतया तच्छ्वश्रूतया वा । उपलक्ष्यमाणा इत्थम्भूतलक्षणे तृतीया। पूज्यौ श्वशुर पूजार्हौ वित्यमरः। भाविनी भवित्री भविष्यदर्थे णिनिः। तथा स्वरूपा रसोदया रसायाः पृथिव्या उदय आविर्भावो यस्याः सा। भूनन्दिनी सीतेत्यर्थः। 'रसा विश्वम्भरा स्थिरे' त्यमरः। जगतां भुवनाना म्प्रसादने प्रसन्नताकरणे विषये प्रसादयतीति प्रसादना प्रसन्नता कर्त्री वा। भावे कर्तरि वा ल्युट्। अद्वितीया केवला मूर्तिः शरीरम् यस्य तम् तथाभूतम् यम् रामचन्द्रमित्यर्थः। पतिमासाद्य निजभर्तारम् कृत्वा प्राप्य मुदम्प्रीति माददे गृहीतवती। प्रीता बभूवेत्यर्थः॥

अन्यत्र। चन्द्रोदयसमये रसाज्जला दुदयो यस्यास्सा एव रसोदया अनुरागादिमती स्वभर्तुश्चन्द्रस्योदय दर्शनादिति भावः। 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः। शृङ्गारादौ द्रवे वीर्ये देह धात्वम्बु पारदे' इति विश्वः। कैरवस्य हास एव हास स्तेन शोभिनी। पूज्यतया समस्तस्याह्लादकत्व सौरभत्वादि गुणैः पूजनीयतया भाविनी स्थितिमती। भावः सत्ता सोऽस्या अस्तीति। मत्वर्थीय इनिः। तथा भूता कुमुद्वती कैरविणी जगत्प्रसादनाद्वितीयमूर्तिम्। जगदाह्लादकैकविग्रहं यम् चन्द्रम् पतिम् निजवल्लभमासाद्य मुद माददे प्रोल्लसिता बभूवेत्यर्थः। कुमुद्वतीत्यत्र कौ पृथिव्याम् मुत् प्रीति र्विद्यते यस्यास्सेति। काचन नायिका च स्त्रीलिङ्गाक्षिप्ता व्यज्यते इत्यवधार्यम्॥

सीतापरिणयानन्तरम्प्रत्यावृत्तस्य रामस्य पथि परशुराम विजयं दर्शयति॥

१९. अलेखेत्यादि। यश्च रामः नास्ति लेखनम् सङ्ख्या बोधकाक्षर विन्यासोऽङ्कविन्यासो वा। येषां ते अलेखना असङ्ख्याता ये क्षत्राः क्षत्रियाः तेषां पराभवेन पराजयेन हेतुना तेषां पराभवो याभ्यस्ताः तथाभूता इति वा ज्वलन्त्यो याः प्रभास्तेजोविशेषा स्ताभिः आप्लावितो व्याप्तो दिक्चयो दिक् समूहो येन तं तथाभूतं स्वमार्गगं स्वकीय गमनमार्गं प्रविष्टं भार्गवं भृगुवंशे भवो भार्गवः तं । परशुराममित्यर्थः। आत्मतेजसा निजतेजोविशेषेण समाप्नुवन् प्राप्तं कुर्वन्निव व्याप्नुवन्। केवलं सर्वतो भावेन ग्लापयति स्म तत्तेजोपहारेण ग्लानीचकारेत्यर्थः॥

२०. नतत्वभाजो ननुपक्षपातिता-
भृतोविमातुस्समयस्य निश्चयात् ।
तनूजलक्ष्म्या नियमात्कृतोच्छ्रिते
र्विमान नानास्य बभूव कर्हिचित् ॥

अन्यत्र। अलेखानि अपरिमितानि यानि नक्षत्राणि तारकाः तेषां पराभवो निस्तेजस्कतया पराजयो याभ्य स्तथाभूताभि र्ज्वलत् प्रभाभि र्दीप्यमान कान्तिभि राप्लावितो दिक्चयो येन तं। स्वमार्गगं निजकक्षा वृत्त भ्रमणशालिनं भार्गवं शुक्रं। ताराग्रहविशेषमित्यर्थः। शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविरित्यमरः। स्वतेजसा ज्योत्स्ना रूपेण समाप्नुवन् आच्छादयन् केवलं ग्लापयति स्म। नितरां ग्लानी चकारेत्यर्थः॥

२०. अथ स्वगृहमागतस्य समयान्तरे पितुः सत्यरक्षार्थं वनगमनं सूचयन्नाह॥

न तत्वेति। तत्त्वं भजतीति तत्त्वभाक्। न तत्त्वभागिति निषेधार्थनकारेण साकं सुप् सुपेति समासः। नैकधेत्यादिवत्। तस्याः मन्थरा वचनादीनां यथार्थानभिज्ञाया इत्यर्थः। ननु इति अवधारणे। अत एव पक्षे अन्याय्य सहाय्ये पातोऽभिनिवेशः पक्षपातः स्नेहसम्बन्धाद्यनुरोधत एकस्मिन्नेव वर्गे आनु-कूल्यप्रयोगचिकीर्षेति यावत्। तद्वत्तापक्षपातिता तां बिभर्तीति पक्षपातिता भृत्। क्विपि ह्रस्वस्यपिति कृति तुक्। तस्याः स्वपुत्र भरतैक सहायिन्या इत्यर्थः। ततश्च समयस्य। समयोऽथीन शपथज्ञान विश्वासहेतुपु इति विश्वः। शनैश्चरयुद्धे स्वसारथ्येन प्रीतस्य भर्तुर्दशरथस्य यदा यद्वरिष्यसि तदा तद्दास्यामीति सत्यप्रति-ज्ञारूपस्येत्यर्थः। निश्चयात् निश्चयं कृत्वा। ल्यब्लोपेपञ्चमी। तत्समयस्यायमेव समय इति निश्चित्येत्यर्थः। नियमात्। नियममनुसृत्य चतुर्दशवत्सरं रामोवनं गमिष्यति भरतो राजा भविष्यतीति प्रतिज्ञानिश्चयं कृत्वेत्यर्थः। अत्रापि पूर्ववत् पञ्चमी। नियमो यन्त्रणा याञ्चा प्रतिज्ञानिश्चये व्रते इति मेदिनी। तनूजस्य निजा-ङ्गजन्मनो भरतस्य लक्ष्म्या राजलक्ष्म्याः कृता उच्छ्रितिः प्रवृद्धिर्यया तस्याः। सापेक्ष्यत्वेऽपि गमकत्वात्स-मासः। उच्छ्रिति स्त्रिषु सञ्जाते समुन्नद्धप्रवृद्धयोरिति मेदिनी। तथाभूताया विमातुः कनिष्ठमातुः कैकेय्याः सकाशादित्यर्थः। अस्य रामचन्द्रस्य विमानना अवमानना कर्हिचित् कदाचिदपि न बभूव। विमातुरनु-मत्येव वनं जगामेत्यर्थः॥

अन्यत्र। न तत्वं कुटिलत्वं। 'नतं कुटिलनम्रयोरि'ति कोशात्। तत् भजतीति तथा भूतस्य। पक्षे एकस्मिन् पक्षे कृष्णपक्षे इत्यर्थः। पातः पतनं। क्षयित्वेन न्यूनत्वमिति यावत्। तद्वत्ताम् बिभर्तीति पक्ष-पातिताभृत् तस्य। तथा नियमात् शुक्लपक्षे कलावृद्धि नियममनुसृत्य तनूज लक्ष्म्याः शरीरजन्यशोभायाः कृतेच्छ्रितेः प्रवर्द्धकस्य। अत्रापि पूर्ववत् समासः। अतएव निश्चयात्। कलाह्रास वृद्धिनिर्णयवशात्। समयस्य कालस्य विमातुः विशेषेण परिच्छेदकस्य। रूः कलापच योपचयैः तिथिपक्षमासादिभेदेन काल-परिच्छेदकस्येत्यर्थः। विपूर्वकात् माङ्माने इति धातोः कर्तरि तृन् प्रत्ययः। तथा भूतस्यास्य चन्द्रस्य। कदाचित् विमानना नासीदित्यर्थः। कुटिलत्वे पक्षे क्षयित्वेपि क्षयवृद्धिवशात् कालज्ञापकतया लोकोपकार-कत्वादितिभावः॥

२१. अथापि शीतोज्ज्वललक्ष्णत्विषा
विशेषपक्षश्रियमाकलय्य सः ।
वनोल्वणाभः खरदूषणार्दनो
व्यधत्त रात्रिञ्चरदर्पवर्धनम् ॥

२२. कुरङ्ग रङ्गस्फुरदङ्गचारुता-
नुकृष्टचित्तापतिमुत्सृजन्त्यहो ।
गुरोस्समस्तस्य हृतापि पूजिता
प्रियाहितेन द्विषतादिवौकसः ॥

२१. वनं गतस्य रामस्य कृत्यमाह

२१. अथेति । अथापि वनगमनस्वीकारानन्तरमपि स रामः शीता जनकजा । शीता दशाननरिपोः सहधर्मिणी चेति तालव्यादौ धरणिः । उच्चैर्ज्वलतीति उज्ज्वलस्तेजोविभवशाली यो लक्ष्मणो निजानुजश्च तयोस्त्विषा रुचा विशेषेण विभेदेन बाहुल्येनवा । पक्षश्रियं पार्श्वशोभाम् । 'पक्षो मासार्धके पार्श्वे' इति मेदिनी । आकलय्य सम्पाद्य । वने अरण्ये । उल्बणा प्रव्यक्ता आभा यस्य सः । स्फुटम् प्रव्यक्त मुल्बण मित्यमरः । तथा खरदूषणौ राक्षसविशेषौ अर्दयतीति खरदूषणार्दनः । खरदूषणादेर्हन्तासन् । रात्रिञ्चराणां राक्षसानां दर्पवर्धनं गर्वच्छेदनं व्यधत्त चक्रे । 'वर्धनं च्छेदने वृद्धावि 'त्यमरः ॥

अन्यच्च । वनैः सलिलैः । वनं सलिलकानने इत्यमरः । उल्बणा आभा यस्य सः । अविन्धनत्वादित्यर्थः । अतएव खरं तीक्ष्णगुणः तिग्मं तीक्ष्णं खरं तद्वदित्यमरः । तदेव दूषणं दोषः तत् उष्णदोषमित्यर्थः । अर्दयति विनाशयतीति । तथाभूतः स चन्द्रः शीता शीतगुणविशिष्टा उज्ज्वललक्षणा विकाशिलक्षणा विशदलक्षणा वा । 'उज्ज्वलस्तु विकाशिनि । शृङ्गारे विशदे दीप्ते' इति हैमः । तथा भूता या त्विट् कान्तिस्तया विशेषेण पक्षयोः शुक्लकृष्णरूपयोः श्रियं शोभां आकलय्य रात्रिञ्चराणां रात्रौ चरन्तीति रात्रिञ्चराः चरेष्टः रात्रेः कृतिविभाषेति मुम् । तेषां निशाविहारशालिनां जीवजातानामित्यर्थः । दर्पो गर्वो हर्षो वा । तथा पाणिनि स्मरणात् । उत्सृङ्खलत्वं दर्पइति नीलकण्ठः । तस्य वर्धनं वृद्धिं व्यधत्त ॥

खरदूषणवधानन्तरं मायामृगदर्शनं सीताहरणं चेत्याह ॥

२२. कुरङ्गेति । कुरङ्गस्य मायामृगस्य मायया मारीचधृतसुवर्णमृगरूपस्येत्यर्थः । रङ्गेषु क्रीडनेषु स्फुरत् प्रकाशमानम् यदङ्गं सुवर्णमयावयवघटितशरीरं तस्य चारुतया मनोहारित्वेन अनुकृष्टं आकृष्टं चित्तम् यस्याः सा तथा । अतएव पतिं निजभर्तारं राममित्यर्थः । उत्सृजन्ती तन्मृगाहरणार्थं प्रेषयन्ती एवम्भूता समस्तस्य गुरोर्जगत्पितूरामचन्द्रस्येत्यर्थः । प्रियासीतेत्यर्थः । पूजिता समस्तस्य मानिताऽपि । हीत्यवधारणे । तेन प्रसिद्धेन दिवौकसः देवान् द्वेष्टीति द्विषन् तेन सुरद्विषा रावणेनेत्यर्थः । हृता विमानमारोप्य लङ्कां नीतेत्यर्थः । अहो इत्याश्चर्ये एतत्सर्वमेवाश्चर्यजनकमिति भावः ॥

२३. अथो रथाङ्गाह्वयदम्पती विप-
द्विधानहेतुर्निशि सङ्गभङ्गतः ।
सपद्मिनी भर्तृसमुद्भवश्रियं
विलोप्यताराररमणं व्यकल्पयत् ॥

अन्यत्र । कुरङ्गस्य मृगस्य रङ्गो यस्मिन् । एतेन पशोरप्याकर्षकत्वेन सर्वोत्कृष्टसौन्दर्यशालित्वं व्यज्यते । तेन न व्यर्थविशेषणता । तथाभूतस्य स्फुरदङ्गस्य चारुतया अनुकृष्टचित्ता । अत एव पतिं स्वभर्तारं बृहस्पतिमित्यर्थः । उत्सृजन्ती परित्यजन्ती । समस्तस्य स्वपर समुदायस्य देवसङ्घस्येत्यर्थः । गुरोः निषेकादि-कृदध्यापकस्यैव बृहस्पतेः । 'उपाध्यायोऽध्यापकोऽथ सनिषेकादिकृद्गुरुः । गीर्पति धिषणो गुरु' रिति चामरः । प्रियाभार्या तारेति यावत् । दिवौकसः द्विषता देवद्वेषं कुर्वता तेन चन्द्रेण हृतापि सम्भुक्तापि पूजिता हि लोकपूजितैवासीदित्यर्थः । अहो महानुभावानां चरितं लोकातिगमिति भावः ॥

अथ सीताहरणानन्तरं किं कृतवान्रामः तदेवाह ॥

२३. अथो इति । अथो सीताहरणानन्तरम् स रामः निशि रात्रौ सङ्गस्य मिथुनीभावस्य भङ्गतः रथाङ्गाह्वय दम्पतीनां सङ्गभङ्गं विधायेत्यर्थः । ल्यब्लोपे पञ्चमी । स्वस्य सीतासङ्गभङ्गा द्वा तद्द्वेषुर्यादिति भावः । रथाङ्गाह्वय दम्पतीनां चक्रवाकमिथुनानां विपद्विधाने रात्रिविच्छेदरूपविपत्त्युत्पादने विषये हेतुः कारणं । सीताविरहव्यामोहितेन तत्सन्देशं पृच्छता रामेण उत्तरमप्रयच्छन्तो मैथुनासक्ता'श्चक्रवाका रात्रौ सङ्गभङ्गाय शप्ता इति रामायणम् । तथाभूतः सन् । रमयतीति रमत इति वा रमणः । नन्द्यादित्वाल्ल्युः । ताराया मर्कटी विशेषाया रमण स्तारारमणो वाली वालिनाम्नो मर्कटराजस्य पत्नीनाम तारेति प्रसिद्धम् । तं विलोप्य शरप्रयोगेण विनाश्य पद्मिनीनां नलिनीनां भर्ता सूर्यः तस्मात्समुद्भवो जन्म यस्य स सुग्रीव इत्यर्थः । सतु सूर्यरेतसा जातो वालिनः कनिष्ठभ्रातेति पुराणम् । तस्य श्रियं सम्पदं राजलक्ष्मीमित्यर्थः । व्यकल्पयत् विशेषेण कल्पितवान् । वालिनं हत्वा सुग्रीवे वानरसाम्राज्यलक्ष्मीं समर्पयामासेत्यर्थः ॥

अन्यत्र । अथो । अथानन्तरं कार्त्स्न्येन । निशि सङ्गभङ्गतः वियोगाद्धेतोः । सङ्गभङ्गं प्राप्यस्थिताना-मिति वार्थः । रथाङ्गाह्वयदम्पतीनां विपद्विधाने हेतुः निशिचक्रवाकानां सङ्गभङ्गादस्य च निशाकरत्वा-दुद्दीपन विभावत्वा च्च । तद्विपद्विधानहेतु त्व मित्यवगन्तव्यम् । स चन्द्रः पद्मिनीनां नलिनीनां भर्तृसमु-द्भवा निजभर्त्रा सूर्येण हेतुना जाता या श्रीः शोभा तां । विलोप्य । पद्मानाम्मुद्रणेन ता म्लानीकृत्य ताराभि रश्मि न्यादि सप्तविंशतिभिः । अन्याभिरपि तारकाभिः रमणं क्रीडाम् । व्यकल्पयत् । तस्य तारापतित्वा-दिति भावः ॥

२४. स च प्रियाया श्चरितेषु मुह्यतो
निधेरसानां नियते र्निबन्धनात् ।
प्रभूतिमानस्य ननु प्रभञ्जना-
द्वियोगिनः कामसहायता ङ्गतः ॥

२५. दशास्यगोत्रावलयोद्गतत्विषो
मरुन्महासम्मदद्दानरंहसः ।
अविद्धधाराः शरधिम् पदायकिम्
महारथस्य व्यदधन्न वाजिनः ॥

अथ रामस्य हनुमत्साहाय्यं दर्शयति ॥

२४. सेति ॥ प्रभञ्जनात् पवनात् । 'पवन पवमान प्रभञ्जना' इत्यमरः । प्रभूतिमान् पवनाज्जात इत्यर्थः । स प्रसिद्धो हनूमानित्यर्थः । वियोगिनः सीता विरहिणः । अत एव प्रियायाः सीताया श्चरितेषु । तथाऽशोकवनिकास्थिति रूपादिषु स्वसन्देशेषु मुह्यतः मोहम् गच्छतः अस्य रामचन्द्रस्य । रसानाम् जलानाम् निधेः समुद्रस्य नियते र्नियमात् । 'नियति र्नियमे दैवे' इति विश्वः । निबन्धनात् नियमपूर्वकम् सेतुबन्धनम् कृत्वेत्यर्थः । नन्विति प्रश्ने । काम् असहायतामसाहाय्यं गतः प्राप्तः नकामपीत्यर्थः । सीतासन्देशाहरण सेतुबन्धनादिना सर्वमेव साहायकम् कृतवानित्यर्थः । एतेन रामस्य हनूमद्दूत करणम् । सीतासन्देशप्राप्तिः सेतुबन्धश्चेत्यादि कर्माण्युक्तानीति ॥

अन्यत्व ॥ स च चन्द्रोऽपि नियते र्दैवस्य निबन्धनात् । प्रतिबन्धाद्धेतोः प्रवासादा गन्तुमसामर्थ्यादिति भावः । रसानाम् निधेः स्थानभूतायाः अनुरागादि गुणयुक्ताया इत्यर्थः । प्रियाया निजवल्लभायाः चरितेषु दुःसह विरहवेदनाम प्राप्य शयनासनादिषु विषये । मुह्यतः तत्स्मृत्वा मोहम् गच्छतः वियोगिनः विरहिणः पुरुषस्य प्रकर्षेण भूति र्भवनम् यस्य तथा भूतम् यन्मानम् प्रभूतमभिमानमित्यर्थः । यद्वा प्रकृष्टा भूतिः । सम्पत्तिः सेवयन्मानम् । तस्य मानधनेति प्रयोगदर्शनात् संपत्तिवद्गृहीतस्य मानस्येत्यर्थः । प्रभञ्जनादामर्दनात् सर्वस्यापि तथा विधस्य वियोगिनो मानभङ्गम् कृत्वेत्यर्थः । कामस्य कन्दर्पस्य सहायताम् गतः कामसहायो बभूवेत्यर्थः । चन्द्र चन्दनरोलम्ब रुताद्युद्दीपनम् मतमिति स्वस्य कामोद्दीपकत्वादिति भावः ॥

सेतु बन्धानन्तरम् लङ्काम् गत्वा रामेण राक्षसकुलम् निहतमिति ध्वनयन्नाह ॥

२५. दशास्येत्यादि ॥ रमन्ते लोका अस्मिन्निति रथः । हनि कुषिनीरमिकशिभ्यः क्थन् । महांश्चासौ रथश्चेति महारथः निखिलजगदाधारस्वरूप इत्यर्थः । महान् रथो यानभूतो हनूमान् यस्य स इति महान् रथो नन्दिघोषो रावणवधसमये यस्य स इति । वा महारथः । यद्वा । 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । अस्त्रशस्त्रप्रवीणश्च महारथ इति स्मृत' इत्युक्तलक्षणो महारथः । तस्य रामचन्द्रस्येत्यर्थः । दशसङ्ख्यकान्यास्यानि मुखानि यस्य सदशास्योरावणः । तस्य गोत्रस्य वंशस्य राक्षसकुलस्येति यावत् । अवलयात् अवमत्य विनाशनात् । उद्गता उत्तेजिता त्विट् । कान्तिर्येषाम् ते तथाभूताः अतएव मरुताम् देवानाम् ।

२६. स्वदारविद्रोहकृदप्ययं तथा
क्षयंसमासाद्य विभीषणं स्वयम्।
विमृष्टरुक्त्वेन च सीतयामिळ-
न्नपायि सर्वैरनिमेषलोचनैः ॥

'मरुतौ पवनामरावि'त्यमरः। महान् यः सम्मदः प्रमोदः। 'प्रमोदामोदसम्मदा' इत्यमरः। तस्य दाने वितरणे विषये। रंहो वेगो येषाम्। ते तथोक्ताः। असुरान्निहत्य सुरप्रमोददानव्यग्रा इत्यर्थः। अविद्धा अकुण्ठिताधारा अग्रभागा येषां ते। तथा असुरकुलोच्छेदनेनापि निश्छिद्रिताग्रभागा इत्यर्थः। तथाभूता वाजिनो बाणाः। 'वाजीबाणाश्वपक्षिषु' इति मेदिनी। शरधिं शराबाणाधीयन्ते अस्मिन्निति शरधिस्तं तूणीरं पदाय स्थानाय। तादर्थ्ये चतुर्थी। न व्यदधन् किं इति काकुः। अपितु व्यदधन्नेव राक्षसवधार्थं रामेण प्रयुक्ताबाणा राक्षसान्निहत्य देवानानन्दयित्वा स्वयमेव तूणीरं विविशुरित्यर्थः। अवन्ध्यरामबाणानां स्वयं तूणीरं प्रत्यभिगमनं रामायणादावभिहितम् ॥

अन्यच्च। महारथस्य पूर्वोक्तलक्षणस्य अस्य चन्द्रस्य। यद्वा अस्य चन्द्रस्य यो महारथो महान् यानविशेषः। तस्य तत्सम्बन्धिनो ये दशवाजिनः दशसङ्ख्याका घोटकाः। अष्टादशान्ता एकाद्याः सङ्ख्याः सङ्ख्येयगोचरा इत्युक्ते दशशब्दस्य सङ्ख्येयपरत्वम्। चन्द्रस्यदशाश्वत्वमुक्तं। यथा। दशाश्वं श्वेतपद्मस्थं विचिन्त्योमाधिदैवतमितिग्रहयागतत्वे सोमध्याने। ते किम्भूताः। गोलायां पृथिव्यां। 'गोलाकुःपृथिवी पृथ्वी'त्यमरः। पृथिव्युपरिभागे इत्यर्थः। वलयाकाराणि यानि उद्गतानि ऊर्ध्वप्रदेशेगमनानि। भावेक्तः! गोलावलये भूमण्डलोपरिप्रदेशे यान्युद्गमनानि वा तैः। त्विट् प्रभा येषां ते तथोक्ताः। भूगोलोपरिखगोलभ्रमणशालिन इत्यर्थः। मरुतः पवनस्य यो महान् सम्मदः शीघ्रगामित्वेन गर्वातिशयः।' मदोरेतसि कस्तूर्यां गर्वे हर्षे भदानयोरि'ति मेदिनी। तस्य दानं खण्डनं यस्मात्। दोऽवखण्डने इति धातो र्भावेल्युट्। तथाभूतं रंहो वेगो येषां ते। तथा। पवनाधिकजवा इत्यर्थः। अविद्धा अप्रतिहता धारा गतिविशेषा येषां ते तथा। अश्वानां गतिविशेषा धाराशब्देनोच्यन्ते। तथाच। 'आस्कन्दितं धोरितकं वल्गितं रेचितं प्लुतम्। गतयोऽमीपञ्चधारा' इत्यमरः। तथाभूताः सन्तः। शराणि जलानि धीयन्तेऽस्मिन्निति शरधिः समुद्रः। 'शरस्तु तेजने बाणे दध्यग्रेनाशरम् जले' इतिविश्वमेदिन्यौ। तं पदाय पादमात्रप्रमाणाय। नव्यदधन् किं। अपितु विदधुरेव। अतिविस्तृतमपि समुद्रं तदूर्ध्वप्रदेशे शीघ्रगत्या पादप्रक्षेपक्रियामात्रेोल्लङ्घ्य प्रदेशमिव तमुल्लङ्घ्य तावन्मात्रेण प्रमाणितं कृतवन्त इत्यर्थः ॥

इदानीं रामस्य रावणवधादिक्रियाकलापं दर्शयति ॥

२६. स्वदारेत्यादि ॥ स्वदारेषु निजभार्यायां सीतायामित्यर्थः। 'भार्या जायाथपुंभूम्निदारा' इत्यमरः। विद्रोहो बलादपहरण रूपानिष्टचिन्तनं यस्य सस्वदार विद्रोहो रावणः। तं कृन्ततीति स्वदारविद्रोहकृत्। कृतिच्छेदने इति धातोः। कर्तरिक्विप्। रावणहन्तेत्यर्थः। अयंरामः स्वयं आत्मनैव विभीषणं तन्नामानं रावणकनिष्ठभ्रातरं तथा तेन प्रकारेण। यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी। यावन्मम कथालोके तावद्राज्यं करोत्वसौ इति स्वकथनरूपेणेत्यर्थः। अक्षयमविनाशिनं कृत्वा समासाद्य संस्थाप्य। सीतया निजकान्तया मिलन् सङ्गच्छन्। विमृष्टरुक्त्वेन। विमृष्टा विरहम्लानिशून्या रुक्। कान्तिर्यस्य तस्य भावस्तत्वं। तेन

२७. विहायसाऽसावथ दक्षिणापथम्
विहाय गच्छन्निजराज्यदिङ्मुखः ।
क्षितौ शितच्छत्रपरिस्फुरद्वपू
रराज राजात्मपदप्रपूजितः ॥

---

अधिककान्तिशालित्वेन हेतुनेत्यर्थः । सर्वैर्देवासुरवानरादिभिः कर्तृभिः । अनिमेषलोचनैः नास्ति निमेषः पक्ष्मपरिक्षेपो येषां तैश्चलोचनैः । अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्तित इत्यग्निपुराणम् । निर्निमिषनयनैः करणभूतैरित्यर्थः । अपायि पीतः । पिबतेः कर्मणि तन् चिण् तलोपः । सीतासङ्गमनेन प्रोद्भासितं रामं सर्वे सादरमपश्यन्नित्यर्थः । एतेन रावणमारणं विभीषणे राज्यदानं सीतासम्मिलितत्वं इत्यादिविषया उक्ताः ॥

अन्यत्र ॥ अयं चन्द्रः स्वदाराणां दाक्षायणीनामश्विन्यादीनां विद्रोहकृत् रोहिण्यामधिकप्रेमासक्ततया तासामपकारकत्वेन विद्रोहीत्यर्थः । अत एव स्वयं आत्मनैव तथातेन रूपेण दक्षाज्ञालङ्घन-तच्छापोद्भावन रूपेणेत्यर्थः । विभीषणं विशेषेण भयानकं क्षयं क्षयनामकरोगविशेषं । राजयक्ष्माणमिति यावत् । समासाद्य सम्यक् प्राप्य तत्प्राप्त्यनन्तरमित्यर्थः । सीतया सीतानाम्न्या देवनद्या मिलन् । तज्जलेन स्नातः सन्नित्यर्थः । विमृष्टा धौता त्यक्तेति यावत् । रुक् रोगो यस्य तस्य भाव स्तत्वं । तेन निरुग्णतया हेतुना सर्वैरनिमेषलोचनैः नास्ति निमेषो येषां । तथा भूतानि लोचनानि येषां ते । अनिमेषलोचना देवाः । 'सुरमत्स्यावनिमिषा' वित्यमरः । तैः अपायि पीतः अमृतशरीरं तं देवा पपुरित्यर्थः । अत्रेयं पौराणिकी वार्ता । पुराकिल चन्द्रोऽश्विन्यादि सप्त विंशति दक्षकन्या विवाह्य रोहिण्यामेव बद्धप्रेमा रममाणः सन् भर्तृवाल्लभ्यमलभमानाभि रश्विन्यादिभिः स्वदुःखं विज्ञप्तेन दक्षेण भार्यासु समप्रेम्णा वर्तितव्यमिति तदाज्ञा भ्रेष्ठकारितया क्षयरोग ग्रस्तो भवेत्यभिशेपे तेन क्षीणे चन्द्रमसि निरौषधिलतायां पृथिव्यां यज्ञभागमप्राप्नुवन्तो देवा व्याकुलीभूय जगत्क्षयकारणं चन्द्र क्षयं ब्रह्मणे विज्ञाप्य तदाज्ञया चन्द्रस्य पक्षोपचयाय दक्षं प्रसाद्य ब्रह्मणा सह चन्द्रभागगिरिं गत्वा तत्र सीता नाम्न्या देवनद्या जलेन चन्द्रमसं संस्नाप्य नीरुजं अमृतपरिपुष्ट शरीरं तं पपु रिति कालिकापुराणे विंशाध्यायादिषु द्रष्टव्यम् । तत्र च द्वाविंशाध्याये । 'यत्र देवसभाभूता सानौ तस्य महागिरेः । तत्र जाता देवनदी सीताख्या वचनाद्विधेः । स्नापयित्वा यथा चन्द्रं सीतातोयैर्मनोहरैः । चन्द्रं पपुर्ब्रह्मवाक्यात्सर्वे ते त्रिदिवौकस' इति सीतानदीप्रादुर्भावप्रकारश्च तत्र तत्रावलोकितव्य इति ॥

रावणवधाद्यनन्तरं रामस्यायोध्यागमनादिकमित्याह ॥

२७. विहायेति । अथ रावणवधानन्तरं असौ रामः दक्षिणापथं दक्षिणदिङ्मार्गं विहाय त्यक्त्वा निजं स्वकीयं राज्यं राष्ट्रं यस्यां दिशि तन्मुखस्तदभिमुखोभूत्वा विहायसा आकाशमार्गेण पुष्पकयानमारुह्येत्यर्थः । क्षितौ पृथिव्यां शितच्छत्रेण श्वेतातपत्रेण राजचिह्नभूतेन परिस्फुरत् जाज्वल्यमानं वपुः शरीरं यस्य स तथाभूतः राजेति आत्मपदेन स्वकीयचिह्नेन । राजेति निजबोधकशब्देन वा । प्रपूजितः समर्चितः । राजभिः क्षितितलवर्त्तिभिः समस्तैरपि पार्थिवैः । आत्मपदे आत्मनः पादपद्मे प्रपूजित इति वा । यद्वा राजेति पृथक्पदं राजासन् । आत्मपदे निजस्थाने अयोध्यायां प्रपूजितः सर्वैरपि लोकैराराधितो भूत्वेत्यर्थः । रराज रेजे ॥

२८. स चन्द्रिका चारुतरप्रकीर्णका-
न्तरस्फुरत्स्फारवपुर्मनोहरः ।
अलक्षि साक्षादिव देवदीर्घिका-
प्रवाहमध्यस्थमहासितोपलः ॥

अन्यत्र । अथ समयान्तरे । स्वस्योत्तरायणे इत्यर्थः । असौ चन्द्रः दक्षिणापथं दक्षिणगोलमार्गं विहाय क्रमेण परित्यज्य निजराज्यदिङ्मुखः । निजं राज्यं राष्ट्रं आधिपत्यं वा यस्यां सा तथा भूता या दिक् उत्तरा दिक् । वायुदिग्वा । उत्तरादिक् चन्द्रदिगित्यागमोक्तेः । वायुदिगधिपतिश्च चन्द्र इति ज्यौतिषिकाः । तस्यां दिशिमुख माभिमुख्यं यस्य स उत्तरादिगभिमुख इत्यर्थः । गच्छन् उत्तराक्रान्तिमवलम्बमानः स न्नित्यर्थः । क्षितौ पृथिव्यां शितच्छत्रं श्वेतातपत्रमिव परिस्फुरत् प्रकाशमानं वपुर्बिम्बात्मकशरीरं यस्य स एव शितच्छत्रेण परिस्फुरद्वपुः । अतएव राजेति । आत्मपदेन स्ववाचकशब्देन । 'राजा श्रेष्ठे नृपे चन्द्रे' इत्यादि-कोशात् । पूजितः निजराजशब्दाभिवादितः सन् रराज । राज्ञां छत्रादिचिह्नितत्वेन स्वस्यापि तथात्वा-न्निजराजशब्दं सार्थंचकारेत्यर्थः । चन्द्रस्य तद्वपुषो वा क्षित्यधिकरणकत्वाभावात् क्षितेः स्फुरणक्रियायां सम्बन्धः । शितच्छत्रसादृश्यस्य लोकबुद्धिपरिकल्पितत्वात् तथा तत्र चन्द्रवपुः स्फुरणस्य सम्बन्धे बाधका-भावात् । क्षितिपदेन क्षितिस्थजना लक्ष्यन्ते गमकत्वेन समासविधिः । क्षितौ राजात्मपदप्रपूजित इति वा योज्यम् ॥

अथ राजपदारूढं रामचन्द्र मुत्प्रेक्षते ॥

२८. सेति । चन्द्रिका इव ज्योत्स्नापुञ्जाविव चारुतरे अतिरुचिरे ये प्रकीर्णके चामरे । 'चामरं तु प्रकीर्णक मि'त्यमरः । तयो रन्तरे मध्ये स्फुरत् प्रकाशमानं स्फारं विपुलञ्च यद्वपुः शरीरम् तेन मनोहरः मनोरमः । श्वेतचामरद्वयवीज्यमान तन्मध्यप्रकाशितशरीर इत्यर्थः । स तथभूतो रामः देवदीर्घिकायाः मन्दाकिन्याः । 'मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका' इत्यमरः । प्रवाहमध्ये तिष्ठतीति देवदीर्घिका प्रवाहमध्यस्थः महान् समुन्नतश्च योऽसितोपलः श्यामवर्णमणिः । महामरकतमणिरित्यर्थः । 'उपलोग्राव-रत्नयोरि'ति हैमः । असितोपलपदेन मरकतमणिरूपार्थो रामस्य तद्रूपत्वादिति बोध्यम् । साक्षात्प्रत्यक्ष इव अलक्षि लक्षितः लोकैरितिशेषः । 'साक्षात्प्रत्यक्ष तुल्ययो रि'त्यमरः । अत्र रामस्य समुच्छ्रितत्वेन श्याम-वर्णत्वेन च । महासितोपलसाम्यं महासितोपलस्य मन्दाकिनी मध्यस्थितत्वकथनात्तस्यानुलक्ष्यत्वेन तदुभयपार्श्वनिः सृतप्रवाहद्वयसाम्यञ्च श्वेतचामरद्वयस्येति तथोत्प्रेक्षितः । द्रष्टृभिरिति बोध्यम् । नात्रोपमा शङ्क्या । ययो रुपमानोपमेयभावः प्रसिद्धस्तत्रैवोपमायाः प्रसरात् । अत्रतु अप्रसिद्धस्यैवकल्पनमित्युत्प्रेक्षा-लङ्कारः । एवमन्यत्रापि ज्ञेयम् ॥

अन्यत्र । चन्द्रिका एव चारुतरप्रकीर्णकानि मनोहरचामराणि चन्द्रमण्डलचतुःपार्श्वनिः सृत-चन्द्रिकाणा मनेकत्वात् । तदन्तरे तेषां मध्ये स्फुरत् प्रकाशमानं स्फारं विपुलञ्च वपुर्बिम्बात्मकशरीरं तेन मनोहरश्चित्ताकर्षकः सः चन्द्रः । देवदीर्घिकाया आकाशगङ्गायाः प्रवाहमध्यस्थो यो महान् सितोपलः हीरकोपलः स्फाटिकोपलोवा । सितोपलः स्फटिकं इति राजनिर्घण्टः । हीरकोपल इत्यन्ये । स इव साक्षाद-

२९. रसैः कथायस्य सुधोपमाविधुः
स रामरूपोऽभवदद्भुतो गुणैः ।
सुवर्णदण्डैकसितातपत्रित-
ज्वलत्प्रभावस्थिरकीर्तिमण्डलः ॥

---

लक्षि । अयमाकाशगङ्गा प्रवाहमभ्यस्थितः सितोपलः किं इति लोकै रुत्प्रेक्ष्यतेस्मेत्यर्थः । चन्द्रिकाप्रवाहयोः शौक्ल्येन प्रसरणक्रियावैशिष्ट्येन च साम्यम् । अन्यत्सर्वं पूर्ववत् । पूर्वत्र श्लोके चन्द्रे राजत्वारोपादत्रापि चन्द्रिकासु प्रकीर्णकत्वारोप इति रूपकश्लेत्यादि द्रष्टव्यम् ॥

रामस्य गुणादिकं सर्वोत्कृष्टमिति दर्शयति ॥

२९. रसैरिति । यस्य रामचन्द्रस्य कथाश्चरितानि रसै स्स्वादैः सुधोपमा अमृततुल्याः सुधैव उपमा यासामिति विग्रहः । यद्वा सुधाया उपमा उपमानभूताः सुधाधिका इत्यर्थः । एतेन इतरमाधुर्य-गुणविशिष्ट वस्तूना मुपमा सुधा । तदुपमानभूता रामकथेति व्यतिरेको व्यज्यते । सरामरूपो रामावतारो विधुर्विष्णुः । 'विधुर्विष्णौ चन्द्रमसी' त्यमरः । गुणैः शौर्यौदार्यादिभिः । अद्भुतः अलौकिकातिशायि महिम्ना चमत्कार जनकोऽभवत् । बभूव । अद्भुत प्रकारमेव दर्शयति । सुवर्णेति । सुवर्णनिर्मितो दण्डः सुवर्णदण्डः । स च एकं सिता तपत्रंच ते कृते । तत्कृता विति ण्यन्तात्कर्मणि क्तः । प्रभावः कोशदण्डजस्तेजो विशेषः । 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्ड ज'मित्यमरः । स च स्थिरं निश्चलं कीर्तिमण्डल ञ्च ते तथा भूते यस्य येनवा तथा भूतः । अन्ये राजानः लोक प्रसिद्धच्छत्रेणैव राजोपचारभाजः । अयं तु ज्वलत्प्रभाव रूप सुवर्णदण्डोच्छ्रितस्थिरकीर्तिमण्डलरूपच्छत्रेणापि राजोपचारभागिति लोकातिगतया अद्भुत इति बोध्यम् । रूपकालङ्कारः ॥

अन्यत्र । रसैः सहिता उपलक्षितावा कथाः प्रबन्धकल्पनाः । 'प्रबन्धकल्पना कथे' त्यमरः । यस्य चन्द्रस्य सुधोपमा सुधैव उपमा यासां तथा भूताः । रसपुष्टेयं कथा चान्द्री सुधेव मधुरा इति यस्य चन्द्रस्य सुधा उपमात्वेन दीयत इति भावः । स रामरूपो रमणीयरूपो विधुश्चन्द्रः । गुणैः वर्तुलाह्लादककान्तिम-त्वादिभिः अद्भुतोऽभवत् । कथं भूतः । शोभनो वर्णः शुक्लरूपं यस्य सः । सुष्टुवर्ण्यत इति वा सुवर्णः । चौरा-दिका द्वर्णवर्णन इत्यदन्ता द्धातोर्णिजन्तात् एरजित्यच् । सचासौ दण्डश्च सुवर्णदण्डः । स च एकं सिता-तपत्रं च ते कृते ज्वलन्ती दण्डाकारेणाधः प्रसरन्ती या प्रभाज्योत्स्ना रूपा कान्तिः सा च अवस्थिरा अवस्थि-तिविशिष्टा कीर्तिः प्रसादः कान्तिर्वा यस्मिन् तत् । 'कीर्तिः प्रसादयशसो' रिति मेदिनी । कान्त्यामपीति शब्द-रत्नावली । तथा भूतं मण्डलं निजबिम्बञ्च ते यस्य स तथा भूतः । अत्र दण्डाकारेण परिदृश्यमानाधः सृत-ज्योत्स्नायां दण्डत्वस्यारोपणं मण्डले छत्रत्वस्येति । अन्यत्सर्वं पूर्ववत् । इति ज्ञेयम् इदं पद्यं श्रीहर्ष मुखो च्छिष्टप्रायमपि भ्रमरोच्छिष्टं पुष्पमिव कतिपयवर्णविन्यासैः पुनः संस्कृत्य भगवति रामचन्द्रे चन्द्रे चार्पित मिति तद्गन्धेन दृष्टादृष्टोभयार्थ साधनत्वात् पूर्वापेक्षयास्य विशिष्टतेति सुधीभि र्मान्यमेव । इत्यलम् ॥

३०. अशेषलोकेश्वरशीर्ष सञ्चर-
न्मणिप्रभाभासुरपाद एष सः ।
स्वतेजसाऽऽशानिवहं विभासय-
न्नवाप नक्षत्रगणैस्सहायिताम् ॥

३१. यदीयपादादमृतं ह्युपेयुषो
द्विजान्परं तद्विदुषो विशेषतः ।
असारसंसारफलैकहेतुको
न बाधते जातु परिभ्रमक्रमः ॥

३०. साम्राज्यं दर्शयति ॥ अशेषेति । अशेषाणां निः शेषाणां लोकेश्वराणां जनाधिपानां । 'लोकस्तु भुवने जने' इत्यमरः । भूमण्डल वर्तिनिखिलराजाना मित्यर्थः । शीर्षसञ्चरन्तीभि र्मस्तकेभ्यो निर्गच्छन्तीभिः मणिप्रभाभिः रत्नकान्तिभिः शीर्षेषु सञ्चरन्तः सङ्गताः ये मणयः तेषां प्रभाभिरितिवा । भासुरौ जाज्वल्यमानौ पादौ चरणौ यस्य तथा भूतः । स एष रामः । स्वतेजसा निजप्रतापेन आशानिवहं दिक्समूहं विभासयन् विशेषेण प्रकाशयन् । निजतेजो विभवेन निखिलदिग्गत जनसमूहं वशीकुर्वन्नित्यर्थः । क्षत्रगणैः क्षत्रियाणां सङ्घैः सहायिताम् सहायोऽस्यास्तीति सहायी तस्य भावस्तत्ता तां । नावाप न प्राप्तवान् । सहायमनपेक्ष्यैव जगद्वशं कृतवा नित्यर्थः ॥

अन्यच्च । अशेषाणां लोकानां भुवनानां ईश्वरः प्रभुः । अशेषलोकेषु ईश्वरपदवाच्योवा शिव इत्यर्थः । तस्य शीर्षे सञ्चरन्तः मणिप्रभावद्भासुराः पादा रश्मयो यस्य सतथोक्तः । 'पादा रश्म्य ङ्घ्रितुर्यांशा' इत्यमरः । स एषः प्रत्यभिज्ञातश्चन्द्रः स्वतेजसा निजकान्त्या आशानिवहं विभासयन् दिक्समूहं प्रकाशयन् नक्षत्रगणैः तारासमूहैः सहायितां सहायवत्त्वं अनुचरसम्बन्धित्वमिति यावत् । अवाप प्राप । यस्य जगत्प्रकाशकस्य नक्षत्रगणा अनुचरा एव बभूवुरित्यर्थः । यद्वा सहेति पदच्छेदः । नक्षत्रगणैस्सह अयितां अयः शुभावहो विधिरस्यास्तीति अयी । तस्य भावस्तत्ता तां अवापेत्यर्थः । 'अयः शुभावहोविधि' रित्यमरः ॥

३१. रामस्य मुक्तिदातृत्वमिति दर्शयति ॥ यदीयेति । यदीयपादात् यस्य रामचन्द्रस्य सम्बन्धिनं पादपद्मं ध्यात्वेत्यर्थः । ल्यब्लोपे पञ्चमी । अविशेषतः विशिष्टेऽभेदतः । प्रकृतिपुरुषयोर्मिलितत्वे एकत्वेन ब्रह्मत्वमिति विशिष्टाद्वैतमतसिद्धान्तात् । जीवेश्वरयोरविशेषतो वा । जीवेश्वरयोरुपाधिवशाद्भेदः । न तु स्वरूपत इति अद्वैतिनः । यद्वा जीवेश्वरयो विशेषतो भेदतः । ईश्वरो नित्यज्ञानाधिकरणं जीवादतिरिच्यत इति द्वैतवादिनः । परं केवलं सर्वोपाधिविनिर्मुक्तं जीवातिरिक्तं वा । तत् ब्रह्म रामरूपमित्यर्थः । विदुषो जानतः । विदेः शतुर्वसुः संप्रसारणञ्च । अतएव अमृतं मोक्षं । 'अमृतं सलिले मोक्षे' इति कोशात् । उपेयुषः प्राप्नुवतः । उपेयिवानित्यादिनानिपातः । हीति अवधारणे । तथाभूतान् द्विजान् ब्राह्मणादीन् । असारं साररहितं यत् संसारफलं संसरणरूपं हेतुकृतं । 'सस्ये हेतुकृते फल' मित्यमरः । तस्यैको मुख्यो हेतुः कारणं ।

३२. सुवृत्तता ह्लादनमार्दवादिस-
द्गुणै स्सुखस्पर्शकरैश्च तर्पणैः ।
यथा समस्तस्य सशस्तता मगात्
तथा नकश्चिद्भविता नवाऽभवत् ॥

---

ततः स्वार्थेकन् । यद्वा संसारफलं मिथ्याज्ञानजन्यवासनोपलब्धिः । संसारो मिथ्या ज्ञानजन्यवासनेति नैयायिकाः । तदेव एको हेतुर्यस्य सः । बहुव्रीहिद्योतकः कप्प्रत्ययः । तथाभूतो यः परिभ्रमक्रमः सांसारिकव्यापारासक्तिः जगद्भ्रमेण विषयव्यामोह इति यावत् । जातुकदाचिदपि न बाधते। आमुक्तेः संसार इति सिद्धान्तादिति भावः । ज्ञानकाण्डे शूद्राणा मनधिकारात् द्विजानित्युक्तम् । ज्ञानान्मुक्तिरिति श्रुतिः ॥

अन्यत्र । यदीयपादात् यस्य चन्द्रस्य सम्बन्धिकिरणात् । अमृतं पीयूषं । पीयूष ममृतं सुधेत्यमरः । उपेयुषः पिबत इत्यर्थः । हीति निश्चितम् । जोत्स्नापेयाश्चकोरै रिति कविसमयसिद्ध मित्यर्थः । अत एव । तत् ज्योत्स्ना मृतं कर्मपरं श्रेष्ठं निखिलखाद्यपेयद्रव्यादधिकमिति यावत् ॥ परः श्रेष्ठ रिदूरान्योत्तरे क्लीबं तु केवले इति मेदिनी । तथा कृत्वा विदुषः जानतः द्विजान् पक्षिणः । दन्तविप्राण्डजा द्विजा इत्यमरः । चकोरा इत्यर्थः । असाराणि तदमृतापेक्षया निःसाराणि यानि संसारफलानि सांसारिकप्रसिद्धचूतफलादीनि तान्येव एको हेतुः मुख्यं प्रयोजनं यस्य सः । तथा भूतः परिभ्रमक्रमः । परिसर्वतो भावेन भ्रमणायासः । जातु कदाचित् न बाधते । नपीडयति । चन्द्रिकामृतं लभमाना श्चकोरा इतरफलार्थिनो नैव भवन्तीत्यर्थः । चन्द्रिकायाः सामृतत्वेन तत्पायिनां चकोराणा ममृतपानो क्तिर्नविरुध्यत इत्यवगन्तव्यम् ॥

३२. सुवृत्ततेति । स रामः सुवृत्तता सुचरितता । शोभनं वृत्तं वेदबोधिताचारपरिपालनं वा । तथावृत्ताध्ययनार्थपदव्याख्याने । भरतेनोक्तत्वात् । तद्यस्य तस्य भावस्तत्ता । आह्लादनं आह्लादकता मृदोर्भावो मार्दवं कोमलता च । तदादयो ये सद्गुणाः प्रशस्तगुणास्तैः । सुखः सुखकरः । त्रिषुद्रव्ये पापं पुण्यं सुखादिचेत्यभिधानात् । स्पर्शो दानं येषां ते सुखस्पर्शाः । 'स्पर्शो वर्गाक्षरे दाने' इति हैमः । स्पर्शनं प्रतिपादनमिति अमरः । ते च ते कराः 'बलयश्च बलिहस्तांशवः करा' इत्यमरः । प्रजाभ्योऽत्यल्पकरग्रहणैरित्यर्थः । तर्पणैः प्रीणनैश्च एतैः कृत्वा । यथायेन प्रकारेण समस्तस्य शस्ततां । समस्तलोके प्राशस्त्यं अगात् प्राप । समस्तस्य तर्पणैरितिवा योज्यं । तथा तेन प्रकारेण कश्चित् कोपीत्यर्थः । न भविता न भविष्यति । न वा अभवत् नापि बभूव । भवितेत्यत्र लुट् । सद्गुणादि प्राशस्त्येनानन्य सदृशो बभूवेत्यर्थः ॥

अन्यत्र । स चन्द्रः सुवृत्तताह्लादनमार्दवादि सद्गुणैः वर्तुलाह्लादककोमलत्वादि साधुगुणैः सुखः स्पर्शः स्पर्शगुणो येषां तैः । करैः किरणैः तर्पणैः तथा भूत किरणकरणकप्रीणनैश्च । यथा समस्तस्य शस्ततामगात् तथा कश्चिदन्यः न भविता न वा भवत् । पूर्ववदर्थः ॥

३३. अयं हितायैव ममेति मोदिनीम्
क्षिपन्स सन्तापमुखे हि मेदिनीम् ।
अनन्य साधारणसच्चरित्रता-
विचित्ररूपस्समये तिरोदधे ॥

३४. कुशाभिधोऽस्याथ सुतः कुशाग्रधीः
कुशीलदेशं कलयन् कुशस्थलम् ।
सुशीलपालः कुशलः कुशासनेऽ-
कृशान्दधे राज्यधुरं निरङ्कुशम् ॥

---

३३. अयमिति ॥ अन्यम् साधारणम् समानम् यस्य तत् अन्यसाधारणम् तन्नभवतीत्यनन्यसाधारणम् । तथाभूतम् चरित्रम् स्वभावो यस्य तस्य भावस्तत्ता तया विचित्ररूपः अद्भुतस्वरूपः स रामः समये मानुषलीलापरित्यागसमये 'अयम् रामो ममहिताय पथ्याय इति ममैवेष्ट साधनार्थमास्ते इति बुद्ध्या इत्यर्थः । मोदिनीम् प्रमोदयुक्ताम् मेदिनीम् पृथिवीम् तत्रस्थ जीवजातमित्यर्थः । एतेनास्य लोकानुरागित्वरूपशोभाख्यो गुणो व्यज्यते । उक्तञ्च । शूरता दक्षता सत्यम् महोत्साहोऽनुरागिता । नीचे घृणाधिकेस्पर्धा यतः शोभेति ताम् विदुरिति । सन्तापमुखे स्वविरहजन्यदुःखमुखे क्षिपन् स्वविरहेण लोकजातम् सन्तापग्रस्तम् कुर्वन्नित्यर्थः ॥ हीत्यवधारणे तिरोदधे अन्तर्हितवान् वैकुण्ठम् जगामेत्यर्थः ॥

अन्यत्र ॥ अनन्यसाधारण सच्चरित्रता विचित्ररूपः सचन्द्रः समये निशावसाने अस्ता चलावलम्बनसमये । अयम् चन्द्रः ममहिताय शैत्याह्लाद कत्वादिगुणैः ममैवानुकूल्यसम्पादनायेति मोदिनीम् मेदिनीम् सन्तापमुखे सूर्यकर सन्तप्तिमुखे क्षिपन् । सूर्यकरजन्य सन्तापग्रस्ताम् कुर्वन्नित्यर्थः । तिरोदधे अस्ताचलाच्छादितो बभूवेत्यर्थः ॥ अत्र सर्वत्र भूतकालीनचन्द्रस्यैवोपमानता बोध्या । तेन न भग्नप्रक्रमता इति

स मासोक्त्या रामचरितं वर्णयित्वा इदानीम् वंशकथन परिपाट्या तत्पुत्रः कुश इत्याह ॥

३४. कुशाभिध इति । अथ रामतिरोधानानन्तरं कुशस्य तृणविशेष स्या ग्रवत् सूक्ष्माधीः बुद्धिर्यस्य स कुशाग्रधीः । तीक्ष्णबुद्धि रित्यर्थः । अहञ्च भाष्यकारश्च कुशाग्रीयधिया वुभौ । नैव शब्दाम्बुधेः पारं किमन्ये जडबुद्धय इत्यादि प्रयोग दर्शनात् । कुत्सितं शीलं स्वभावो येषां ते कुशीला दुर्वृत्ताः तेषां देशः स्थानमित्यर्थः । कुश स्थलं कुशप्रधानानि स्थलानि यस्य तं तथा भूतं कलयन् कुर्वन् । दुर्वृत्तोज्झा सनेन तद्देशं तृणप्रचुरं कुर्वन्नित्यर्थः । सुशीलपालः साधुपालकः । अत एव कोः पृथिव्याः शासनं शिष्टिः । गोत्राकुः पुथिवी पृथ्वी त्याद्यमरः । तस्मिन् विषये कुशलः समर्थः । तथा भूतोऽस्य रामचन्द्रस्य कुशाभिधः सुतः । कुशैर्मा र्जनीयत्वात्तदाख्यो ज्येष्ठपुत्र इत्यर्थः । उक्तञ्च रामायणे । यस्तयोः पूर्वजो जातः सकुशैर्मन्त्र संस्कृतैः । निर्मार्जनीयस्तु तदा कुश इत्यस्य नाम तत् इति । अकृशा मक्षीर्णा दुर्भरा मित्यर्थः । राज्यधुरं राज्यस्य राष्ट्रस्य । स्वाम्या द्यष्टाङ्गात्म कस्य वा । धुरं भारं । धूर्यां मुखभारयो रिति हैमः । निरङ्कुशं नास्त्यङ्कुशस्तद्वत् प्रतिबन्धको यस्मिन् कर्मणि तद्यथा तथा निर्बाध मित्यर्थः । दधे बभार । संम्राडभू दित्यर्थः । राज्यमिति राज शब्दात् कर्माद्यर्थे पत्यन्तपुरोहितादिभ्योयगिति यक् प्रत्ययः । तस्याष्टाङ्गत्व मुक्तम् । यथा कामन्दकीये ।

३५. भ्रमाज्जगत्यास्सदसद्विवेकतो
विहीनमज्ञानमिव प्रपीडकम् ।
विलीनयन् दुर्जयमात्मतेजसा
प्रबोधवत्तेन च यो व्यलीयत ॥

३६. उदारबुद्धिस्समभूत्ततोऽतिथि-
र्य आदरान्नित्यसमर्चितातिथिः ।
सुतं महिम्ना निषधं महीभृतं
निषेधयन्तं निषधं विवेद सः ॥

---

स्वाम्यमात्यश्च राष्ट्रञ्च दुर्गं कोशोबलं सुहृत् । परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते । पौरश्रेण्या सहाष्टाङ्गमपि राज्यं प्रकीर्तित मिति ॥

तमेव विशिनष्टि ॥

३५. भ्रमादिति । यःकुशः सच्चासच्च सदसती तयोर्विवेकः । विवेचनम् तस्माद्विहीनम् साध्वसाधुविचाररहित मित्यर्थः । अन्यत्रापि । सदसद्भ्यामनिर्वचनीयमिति वेदान्तिनः । तथा भ्रमात् परिभ्रमणं कृत्वा जगत्यालोकस्य प्रपीडकं पीडादायकम् । अन्यत्र । जगत्याः भ्रमात् रज्जौ सर्पभ्रमवत् ब्रह्मणि जगद्भ्रमेण प्रपीडकं । आत्मानं कलुषीकुर्वाणं । अत एव अज्ञानमिव अविद्या वदिव स्थितमित्यर्थः । तथा भूतं दुर्जयं तन्नामान मसुरं इदमप्यज्ञाने विशेषणीयं दुःखेन जयो यस्य तत् दुर्जयं निरन्तर ज्ञानाभ्यासादि बह्वायाससाध्यमिति तत्रार्थः । आत्मतेजसा निजपराक्रमेण । तेजो दीप्तौ प्रभावे च स्यात्परा क्रमरेतसोरिति मेदिनी । अन्यत्र ब्रह्मात्मनस्तेजसा । ज्योतिर्मया त्मनीत्यर्थः । विलीनयन् विलीनं कुर्वत् तेनदुर्जया सुरेण च । अन्यत्र अज्ञानेन सह प्रबोधवत् प्रबोध इव । तेन तुल्यं क्रियाचे द्वतिरिति वति प्रत्ययः । ज्ञान वदिवेत्युत्प्रेक्षा । व्यलीयत विलीनो बभूव । उक्तञ्च तत्वबोधे । अज्ञान कलुषं जीवं ज्ञानाभ्यासा द्विनिर्मलं कृत्वाज्ञानं स्वयं नश्ये जलेकतकरेणुव दिति । यथा ज्ञानमज्ञानं निरस्य तेन समं स्वयमपि विनश्यति । तद्वत् कुशोपि दुर्जयं रणेहत्वा तेन ताडितः स्वयमपि हतोऽभूदित्यर्थः । उक्तंच रघुवंशे सप्तदश सर्गे । जघान समरेदैत्यं दुर्जयं तेन चावधीदिति ॥

कुशस्यपुत्रोऽतिथि स्तत्पुत्रो निषध इत्याह ॥

३६. उदारेति । ततः कुशात् अतिथि स्तन्नामा । राजा समभूत् बभूव । योऽतिथिः उदारा महती सरलावा बुद्धिर्यस्य स तथा । उदारो दातृ महतोः । दक्षिणे सरलो दाराविति चामरः । आदरात् नित्यं समर्चिताः पूजिता अतिथयो येन सः तथा भूतो बभूवेत्यर्थः । सोऽतिथिः महिम्ना निजमहत्त्वेन निषधं तदाख्यं महीभृतं महीं बिभ्रतीति महीभृत् तं पर्वतं निषधपर्वत मित्यर्थः । निषेधयन्तं प्रतिषेधयन्तं ततोऽधिक मित्यर्थः । निषधं सुतं निषधनामानं पुत्रं विवेद लेभे । विद्लृलाभे इत्यस्मिल्लट् । निषेधक्रियासामर्थ्याद्व्यतिरेकोऽलङ्कारः ॥

३७. दधद्विशेष स्वगुणैकवेद्यतां
नभोनिभस्तत्तनुजो नभोऽभिधः ।
ततान लोकाद्भुतकृत्यमेव किं
न पुण्डरीकं तनुषो विकासयन् ॥

३८. अवर्ततक्षेमपदादिधन्वना
स धन्विनामग्रगतेन पुत्रवान् ।
ततोऽप्यनीकोऽजनि देवपूर्वको
व्यभादनीको भुवि यस्य भाधिकः ॥

---

निषधपुत्रो नभास्तत्पुत्रः पुण्डरीक इत्याह ॥

३७. दधदिति । विशेषै रतिशयितैः स्वगुणैः स्वकीयदयादक्षिण्यादिगुणैः एको वेद्यः अद्वितीयत्वेन ज्ञेय स्तस्यभावस्तत्ता ताम् । दधत् । निजगुणोत्कर्षैकप्रख्यातिवानित्यर्थः । अन्यत्र विशेषः । एकेन्द्रियग्राह्यत्वेनासाधारणः यः स्वस्य गुणः शब्दरूपोगुणः । 'आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुण' इति नैयायिकाः । तेन एक वेद्यतां एकत्वेन वेदनयोग्यतां दधत् । आकाशस्य शब्दगुणकत्वलक्षणादिति भावः । अत एव नभोनिभ आकाशसदृशः । ततश्च नभा इत्यभिधा नामधेयं यस्य सः । तत्तनुजः तस्य निषधस्य तनुजः नभोनामापुत्र इत्यर्थः । तनुषः निजशरीरात् पुण्डरीकं पुण्डरीकनामानं पुत्रं । सिताम्भोजमिवेति च व्यज्यते । पुण्डरीकं सिताम्भोज मित्यमरः । विकासयन् जनयन्नित्यर्थः । अन्यत्र विकसितं कुर्वन् लोकेऽद्भुतान्यतिशयितानि कृत्यानि कार्याणि यस्य तं तथाभूतं कृत्वा । अन्यत्र लोकाश्चर्यजनककृत्यं न ततान न विस्तारयामास । किमिति काकुः । अपितु ततानैवेत्यर्थः । आकाशाच्छिताम्भोजविकसनस्यात्यन्तासम्भावितत्वात् तत्सादृश्यप्रदर्शनादद्भुतत्वमिति ॥

पुण्डरीकस्य पुत्रः क्षेमधन्वा । तत्पुत्रो देवानीक इत्याह ॥

३८. अवर्ततेति ॥ सपुण्डरीकः । धन्वानि चापानि सन्त्येषामिति धन्विनः । धन्वातु मरुदेशे नाक्लीबम् चापे स्थलेपि चेति मेदिनी । व्रीह्यादित्वादिनिः ॥ तेषामग्रगतेन पुरोगामिना प्रधानेनेत्यर्थः । क्षेमपदम् आदौ यस्य तथाभूतो धन्वेति वाचकशब्दो यस्य सः । क्षेमपदादिधन्वा तेन क्षेमधन्वाख्येनेत्यर्थः । पुत्रवान् प्रशस्त पुत्रोऽस्यास्तीति प्राशस्त्ये मतुप् । तथा अवर्तत बभूवेत्यर्थः । ततः क्षेमधन्वनः देवइति पूर्वो यस्य सः । अनीकः देवानीक इत्यर्थः । अजनि जातः । दीपजनेति चिण् । जनिवध्योश्चेति वृद्ध्यभावः । यस्य देवानीकस्य अनीकः सैन्यम् । वरूथिनी बलम् सैन्यम् चक्रञ्चानीकमस्त्रिया मित्यमरः भाभिः प्रभाभिः अधिकोऽति शयितः सन् । भुवि व्यभात् विशेषेण बभौ देवपूर्वकोऽनीक इत्यत्र देव इति पूर्वः प्रथमावयवार्थो यस्येति देवरूपाद्यवयवार्थविशेषितेन अनीक रूपोत्तरावयवार्थेन देवानीक इति संज्ञिनोऽवयविरूपार्थस्य बोधः । अवयवविशिष्टस्य सम्मिलिता वयवपुञ्जस्य वा । अवयविस्वरूपत्वात् । परेतु देवशब्दपूर्वकोऽनीकशब्दः तस्य च प्रकृतेऽन्वया सम्भवात् लक्षणया देवानीक रूपार्थोग्राह्य इत्येवमेतादृशस्थले व्याख्यन् ॥

३९. अभूदनीहो महितस्तदोजसा
यमप्य नीहा रिपवो निरीक्षितुम् ।
स पारियात्रञ्जनयाम्बभूव यो
महत्त्व सत्त्वा नत पारियात्रकः ॥

४०. अजायतास्मात्प्रबलो बलस्थल-
स्ततः प्रतापाकुलिताखिलस्थलः ।
स वज्रनाभं रिपुगोत्रभेदने
विवेदवज्रादधिकप्रभं सुतम् ॥

---

दवानीकस्य पुत्रोऽनीहस्तत्पुत्रः पारियात्र इत्याह ॥

३९. अभूदिति ॥ तत् तस्मात् देवानीकादित्यर्थः । ओजसा तेजसा । महितः पूजितः । अनीहः तन्नामापुत्रोऽभूत् । उद्भभूव । यम् अनीहम् रिपवः शत्रवः निरीक्षितुम् द्रष्टुमपि । काकथा योद्धुमित्यर्थः । अनीहाः नास्ति ईहा स्पृहा येषाम् ते तथा भूता आसन्नित्यर्थः । स्पृहेहा तृट् वाञ्छा लिप्सामनोरथ इत्यमरः । सः । अनीहः पारियात्रम् । पारियात्र नामानम् पुत्रम् जनयाम्बभूव जनयामास ॥ यः पारियात्रः महत्त्व- मौन्नत्यम् सत्त्वम् सारवत्त्वञ्च ताभ्याम् । आनतोऽवनतीकृतः पारियात्रः पर्वतविशेषो येन स तथा भूतोऽभू दित्यर्थः । हिमवान्निषधो विन्ध्यो माल्यवान् पारियात्रक इत्येते पर्वतविशेषा अमरेणोक्ताः ॥

परियात्रस्यपुत्रो बलः । तत्पुत्रः स्थलः । तत्पुत्रो वज्रनाभ इत्याह ॥

४०. अजायतेत्यादि ॥ अस्मात् पारियात्रात् प्रकृष्टम् बलम् सामर्थ्यं सैन्यम् वा । यस्य स तथा भूतः । स्थौल्य सामर्थ्य सैन्येषु बलमित्यमरः । बलो बलनामा पुत्रोऽजायत ॥ ततः बलात् प्रतापेना कुलि- तानि व्याप्तानि, अखिलस्थलानि निखिल भूप्रदेशा येन तथा भूतः स्थलः स्थलनामा पुत्रः अजायतेत्यर्थः । बलस्थल इति भागवतादौ तथैवोल्लेखात् बल इत्येकस्तत्पुत्रः स्थल इति तौ द्वौ वा । पारियात्रस्य पुत्रो बल स्थल नामा इत्येको वा । इति संशयोजायते । न च द्वित्वे बलशब्देन सविसर्गेणैव भाव्यम् । खर्परे शरिवा विसर्गलोपो वक्तव्य इति वार्तिकोक्त्या तत्र स्थलशब्दे परे विसर्गलोपस्यापि वैकल्पिकत्वात् । आधुनिक सूर्यवंश सङ्ग्रहपुस्तकेषु बलस्य पुत्रः स्थल इत्युल्लेखाद्युक्तव्याख्या समीचीना । बल स्थल इत्येकस्य पक्षे ततः प्रसिद्धात् । उक्तगुण विशिष्टाद्वा अस्मात् पारियात्रात् बलस्थलोऽजायते त्यन्वयः । न च ततोऽस्मात्प्रबलो बलस्थलोऽजायतेति वाक्यार्थे परिसमाप्तौ प्रतापेत्यादि विशेषण समन्वयार्थम् । पुनः सकिम्भूत इत्याकाङ्क्षा- यामुत्थापितायाम् सत्याम् समाप्त पुनरात्तो दोष इति शङ्क्यम् । नाम्नि बल स्थलपद द्वयसार्थक्याय प्रबल इति प्रतापा कुलितस्थल इति विशेषण द्वयस्योपात्तत्वात् इति । सः स्थलः बलस्थलोवा । रिपवो गोत्राः पर्वता इव दुर्भेद्यत्वात् । यद्वा रिपुगोत्राणि वैरिकुलानि तान्येव ते वैरिभूतपर्वताः तेषाम् भेदने विदारणे विषये । वज्रात् कुलिशात् अधिकाप्रभातेजोविशेषो यस्य तम् । तथा भूतम् वज्रनाभम् वज्रस्य नाभा यस्मा- दिति व्युत्पत्या तथा सार्थ नामानम् पुत्रम् विवेद लब्धवान् । विद्लृलाभ इत्यस्मात्कर्तरि लिट् ॥

४१. बभूव नाम्ना खगणोऽस्य नन्दनः
प्रभूत धाम्ना स्वगणस्य नन्दनः ।
ततः प्रसूतो विधृतिर्महाबलो
महाहवे यो धृतिमानिवाचलः ॥

४२. हिरण्यनाभोऽस्य तनूद्भवोऽभव-
द्गुणैर्वरेण्योऽमित पुण्यकर्मकृत् ।
सपुष्य मायुष्य यशस्य साधुस-
त्क्रियम्महेष्वासमसूत तं सुतम् ॥

४३. अभूत्सुतोऽस्य ध्रुवसन्धिराह्वया
भयाद्धि यस्मिन्ध्रुव सन्धयोऽरयः ।

---

वज्रनाभास्य खगण स्तस्य विधृतिः पुत्र इत्याह ॥

४१. बभूवेति ॥ अस्य वज्रनाभस्य नन्दनः पुत्रः नाम्ना खगणः खगण नामेत्यर्थः । प्रभूत धाम्ना प्रचुर प्रभावेन । धामशक्तौ प्रभावे चेति विश्वः । स्वगणस्य स्वसैन्यस्य ज्ञाति समूहस्य वा । स्वोज्ञातावा त्मनीत्यमरः । गणः स्यात्प्रमथे सङ्घे सङ्ख्या सैन्यप्रभेदयोरिति मेदिनी । नन्दयतीति नन्दनः । नन्दिग्रही-त्यादिनाल्युः । आनन्ददायको बभूवेत्यर्थः । ततः खगणात् विधृतिः तन्नामापुत्रः प्रसूतो जातः । यो विधृतिः । महाबलः महासत्वः । अत एव महाहवे घोरसङ्ग्रामे । सङ्ग्रामा भ्यागमा हवा इत्यमरः । अचल इव धृति मान् धैर्यवान् बभूवेत्यर्थः ॥

विधृतेः पुत्रो हिरण्यनाभ स्तस्य पुत्रः पुष्य इत्याह ॥

४२. हिरण्येत्यादि ॥ अस्य विधृतेः तनूद्भवस्तनुजः हिरण्य नाभः हिरण्य नाभाख्यः गुणैः दया दाक्षिण्यादिभिः वरेण्यः मुख्यः । मुख्यवर्यवरेण्याश्चेत्यमरः । अत एव अमितानि अपरिमितानि पुण्य कर्माणि यागादीनि करोतीति अमितपुण्य कर्मकृत् । क्विप् चेति क्विप् । अभवत् । स हिरण्य नाभः । आयुषे-हिता आयुष्याः । यत्प्रत्ययः । तथा यशसेहिता यशस्याः । साध्व्यः मनोज्ञ रूपाश्च । तथा भूताः सत्क्रिया आरम्भादि प्रशस्त करणविशेषा यस्य तम् क्रियास्तावत् । आरम्भो निष्कृतिः शिक्षा पूजनम् सम्प्रधारणम् । उपायः कर्मचेष्टा च चिकित्सा च नवक्रिया इत्यमरोक्ताः । इषवो बाणा अस्यन्ते क्षिप्यन्तेऽनेने नेति इष्वासो धनुः धन्वी वा । इष्वासो धन्वधन्विनोरिति हैमः । महानिष्वासो यस्य महां श्चासौ इष्वासश्चेति वा महे ष्वासः । तं तथा भूतम् पुष्यम् पुष्याख्यम् तम् प्रसिद्धम् पुत्रम् असूत जनयामासेत्यर्थः ॥

पुष्यस्य सुतो ध्रुवसन्धि स्तत्सुतः सुदर्शन इत्याह ॥

४३. अभूदिति ॥ अस्य पुष्यस्य सुतः आह्वया नाम्ना ध्रुवसन्धिरभूत् । यस्मिन् ध्रुवसन्धौ अरयः शत्रवः भयात् । ततो भयं प्राप्येत्यर्थः । ध्रुवम् निश्चितम् सन्धिः । धनदानादिनाप्रीत्युत्पादनम् येषाम् ते । तथा भूताः । कृतसन्धिकार्या बभूवु रित्यर्थः । अस्मात् ध्रुवसन्धेः अम्बिकायाः भगवत्या श्चण्डिकायाः ।

सुदर्शनो दर्शित भक्तिरम्बिका
पदद्वयेऽस्मादति शक्तिमानभूत् ॥

४४. ततोऽग्निवर्णोऽजनि योषिदावली
श्रितस्सदा कामकलाकुतूहली ।
सुतोऽस्यशीघ्रः कृतकृत्य शीघ्रधी-
रभून्मरुस्तत्कृतकृत्तपोनिधिः ॥

४५. श्रुतान्वितोऽनेन च लोकविश्रुतः
प्रसुश्रुतोनाम सुतस्स सूयते ।
ततोऽपि सन्धिस्समजायतावनी-
म्बुभोजसन्धि प्रणयी च योऽग्रणीः ॥

---

मृडानी चण्डिकाम्बिकेत्यमरः । पदद्वये पादपद्मयुगले दर्शिता भक्तिराराध्यत्वेन ज्ञानम् येन सः । अत एव अतिशक्तिमान् अति शयित सामर्थ्य विशिष्टः । अति शयेन प्रभावोत्साह मन्त्रजरूप शक्तित्रयविशिष्टो वा । अभूत् । यथा च तस्य चण्डिकाराधनेन प्रभावादि प्राप्तिः । देवीभागवतादौ द्रष्टव्या ॥

सुदर्शनस्य पुत्रोऽग्निवर्ण स्तत्पुत्रश्शीघ्रस्तत्पुत्रो मरुरित्याह ॥

४४. तत इति ॥ ततः सुदर्शनात् । सदा अनवरतम् यो षिदावलीभिः रमणीश्रेणिभिः श्रितः सेवितः सन् । कामकलायाम् कन्दर्पसम्बन्धिशिल्पे । कलास्यात्कालशिल्पयोरिति कोशात् । कुतूहली कौतुकी । तथा भूतोऽग्निवर्णः तन्नामापुत्रः । अजनि जातः । अस्याग्निवर्णस्य सुतः शीघ्रः शीघ्राख्यः । कृतकृत्येषु । विहित कार्येषु । शीघ्राधीर्बुद्धिर्यस्य सः । कृतानि कृत्यानि येन स्चासौ शीघ्रधीश्चेति वा । विशेष्यविशेषण समासः । तथा भूत आसीदित्यर्थः । तत् तस्मात् शीघ्रादित्यर्थः । कृतम् सत्ययुगम् करोति प्रवर्तयतीति कृतकृत् । सत्य-प्रवर्तकः । निधीयन्तेऽस्मिन्निति निधिः । तपसाम् निधिराश्रयभूतः । योगयुक्तत्वात् । मरुर्मरुनामापुत्रः । अभूत् । अयं हि अद्यापि योगयुक्तः कलापग्रामे वर्तते कलेरन्ते राजा भूत्वासत्यम् प्रवर्तयिष्यतीति भागव-तादावभिहितम् ॥

मरोः पुत्रः प्रसुश्रुतः । तत्पुत्रः सन्धिरित्याह ॥

४५. श्रुतान्वित इत्यादि ॥ अनेन मरुणा श्रुतान्वितः शास्त्रसम्पन्नः । अत एव लोकेषु भुवनेषु विश्रुतः प्रख्यातः । प्रसुश्रुतोनाम नामेति सम्भावनायाम् । प्रसुश्रुत इति प्रसिद्ध इत्यर्थः । सुतः पुत्रः सूयतेस्म । प्रसवितः । सूधातोः स्म योगे भूतार्थे कर्मणि लट् । ततः प्रसुश्रुतादपि सन्धिः सन्धिनामा पुत्रः । समजायत । यः सन्धिः । सन्धौ सन्धिकार्ये । धनदानादिनाशत्रुकृतप्रीत्युत्पादनायामित्यर्थः । प्रणयोऽस्यास्तीति प्रणयी । स्नेही । अत एव अग्रेनीयते सर्वैरिति अग्रणीः क्विप् । अग्रग्रामाभ्यामिति णत्वम् । सर्वप्रधान इत्यर्थः ॥ तथा भूतस्सन् । अवनीम् भूमिम् बुभोज पालयामास ॥

४६. पुनश्च बाल्यादि रसप्रसेवन
प्रसक्तचेतोऽपरितोषकर्षितः ।
सरत्नगर्भामलगर्भबिम्बितः
सुतात्मनामर्षणनामवानभूत् ॥

४७. ततो महस्वानभवन्महाप्रभः
प्रभुर्महस्वानिव विश्वदीपनः ।
सविश्वसाहन्नयनप्रसादनम्
स्वतेजसो द्योतमिवोदपादयत् ॥

४८. समस्तराजन्यगुणैकभाजन-
म्प्रसेनजित्संज्ञमसावजीजनत् ।

---

४६. पुनरिति—ससन्धिः पुनश्च पुनरपि । बालस्य कर्मबाल्यम् । पत्यन्तपुरोहितादिभ्यो यगिति यक् । आषोडशाद्भवेद्बाल इत्युक्तेः षोडशवर्षावधिकम् यत्क्रीडनादिकर्म तदेव बाल्यशब्देनोच्यते । तदादय एव रसाः । आदिपदेन यौवनोचितकर्मादयो गृह्यन्ते तेषाम् प्रसेवने प्रकर्षेणास्वादनेविषये प्रसक्तमनुरक्तम् । यच्चेतश्चित्तम् । तस्यापरितोषेण तृप्त्यभावेन कर्षित आकृष्टिं प्रापितः । कृषि धातोर्णिजन्तात् क्तः । अत एव । सुतात्मनानिजपुत्रस्वरूपेण । आत्मा वै पुत्रनामासि इति श्रुतेः । स्वयमेव पुत्रात्मना जात इत्यर्थः । रत्नानि गर्भमध्ये यस्याः सा रत्नगर्भा पृथिवी । रत्नगर्भापृथिवीति हेमचन्द्रः । तस्या अमले स्वच्छे गर्भे कुक्षौ बिम्बितः सञ्जातबिम्बः । पृथिव्याम् । प्रतिफलितः सन्नित्यर्थः । अमर्षण इति नामवान् अभूत् । अमर्षणनाम लब्धवानित्यर्थः । सन्धेः पुत्रोऽमर्षण इति फलितम् ॥

अमर्षणस्य पुत्रो महस्वान् तत्पुत्रो विश्वपाडिति कथयति ॥

४७. तत इति । ततोऽमर्षणात् । महस्वान् । अभवत् उत्पन्नो बभूव । स किं भूतः । महती प्रभा तेजोविशेषो यस्य सः । विश्वं दीपयतीति विश्वदीपनः । कृत्यल्युटोबहुलमिति कर्तरि ल्युट् । लोकप्रकाशक इत्यर्थः । प्रभुर्लोकाधिपः । प्रभुः परिवृढोऽधिप इत्यमरः । अत एव महस्वान् सूर्य इव स्थित इत्यर्थः । महस्वत्सादृश्यान्महस्वानिति नाम तस्य सार्थकमिति भावः । स महस्वान् । स्वतेजसः निजरेतसः । शुक्रं तेजो रेतसीचेत्यमरः ॥

अन्यत्र स्वदीप्तितः निजप्रभावाद्वा । तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोरिति मेदिनी । नयनानि चक्षूंषि प्रसादयतीति नयनप्रसादनः तम् नेत्रानन्ददायकमित्यर्थः । विश्वसाहम् विश्वम् साहयतीति विश्वपाट् तम् । तन्नामानम् पुत्रम् द्योतमिव प्रकाशमिव । प्रकाशो द्योत आतप इत्यमरः । उदपादयत् उत्पादयामास । यथा सूर्यः स्वतेजसोद्योतमुत्पादयति तद्वत् सोऽपि तादृशम् तमुत्पादयामासेत्यर्थः ॥

विश्वसाहः पुत्रः प्रसेनजित् । तत्पुत्रस्तक्षक इत्याह ॥

४८. समस्तेति । असौ विश्वषाट् समस्तानाम् निखिलानाम् राजन्यगुणानाम् क्षत्रिय गुणानाम् । राजन्यः क्षत्रियो विराडित्यमरः । दुष्टनिग्रहो साधुपालनादीनामिति यावत् । एक भाजनम् मुख्यम् पात्रम्

परासुवातस्य बुभुक्षुतक्षक-
स्तदुद्भवोऽभण्यत तेन तक्षकः ॥

४९. प्रधानवंशादमुतो बृहद्बल-
स्समुद्भवन्मौक्तिकभावमावहत् ।
प्रकाशयामास बृहद्रथम्पृथक्
स च स्वकायादिव कान्तिसञ्चयम् ॥

५०. दुरूहसत्वोऽस्य सुरूपवानभू-
दुरुक्रियोनाम गुरुप्रियस्सुतः ।
सवत्सवृद्धादिसमानुवर्तिनम्
सवत्सवृद्धं समवाप नन्दनम् ॥

स्थानभूतमित्यर्थः । प्रसेनजित्संज्ञम् प्रसेनजिन्नामानम् पुत्रम् अजीजनत् जनयामास । णिजन्ताज्जनिधातो लुँङिणिश्रीतिच्लेश्चङ् । चङिचेति द्वित्वम् । सनवल्लघुनि चङ्परेत्यादिना सन्वत् कार्यम् सन्यत इत्यभ्यासा- कारस्य इकारः । दीर्घोलघोरिति दीर्घश्च । तदुद्भवः तस्मात् प्रसेनजितः उद्भवो जन्म यस्य सः । जनिरुत्पत्ति- रुद्भव इत्यमरः । तत्पुत्र इत्यर्थः । पराणाम् शत्रूणाम् असवः प्राणाः पुंसि भूम्न्यसवः प्राणा इत्यमरः । तद्रूपो वातः परासुवातः तस्य शत्रुप्राणपवनस्य बुभुक्षुर्भोक्तुमिच्छुः । भुजिधातोः सनन्तादुः । सचासौ तक्षकः सर्पविशेषश्च तद्रूपः । शत्रुप्राणापहारीत्यर्थः । तेन हेतुना तक्षकस्तक्षकनामा अभण्यत । लोकैरिति शेषः । तक्षकनाम्ना हूयतेस्मेत्यर्थः ॥

तक्षकस्य पुत्रो बृहद्बलस्तत्पुत्रो बृहद्रथइत्याह ॥

४९. प्रधानेति । क्लीबे प्रधानम् प्रमुखम् प्रवेकानुत्तमोत्तमा इत्यमरः । प्रधानमुत्तमोवंशोऽन्ववायो यस्य स एव प्रधानवंशः श्रेष्ठवेणुरिवेत्यर्थः । तस्मात्तथाभूतात् अमुतोऽमुष्मात् पञ्चम्यां तसिल् तक्षका- दित्यर्थः बृहद्बलः तन्नामा पुत्रः समुद्भवन् जातः सन्नित्यर्थः । मौक्तिकभावम् मौक्तिकत्वम् विशुद्धत्वादि- गुणवत्त्वेन तत्सादृश्यमिति यावत् । आवहत् बभार । आङ्पूर्वाद्वहतेर्लङ् । स च मौक्तिकभावापन्नो बृहद्बलः । स्वकायात् निजशरीरात् पृथक् पृथक्कृतम् उत्पादितमित्यर्थः । बृहद्रथम् । तन्नामानम् पुत्रम् । कान्तिसञ्चयम् प्रभापटलमिव प्रकाशयामास । मौक्तिकाद्बहिर्निः सृतः कान्तिसञ्चयो यथा पृथक्त्वेन प्रकाशते । तस्मात्सोऽपि तद्वदित्यर्थः ॥

बृहद्रथस्य पुत्र उरुक्रियस्तत्पुत्रो वत्सवृद्ध इत्याह ॥

५०. दुरूहेति । अस्य बृहद्रथस्य दुःखेन ऊह्यत इति दुरूहम् । कर्मणि खल्प्रत्ययः । दुर्गतऊहस्तर्को यस्य वा । अध्याहारस्तर्कऊह इत्यमरः । दुर्ज्ञेयमित्यर्थः । सत्वम् बलम् यस्य सः । शोभनम् रूपम् । अङ्गान्य- भूषितान्येव केनचिद्भूषणादिना । येन भूषितवद्भान्ति तद्रूपमिति कथ्यत इत्युक्तलक्षणम् । तद्विद्यते यस्य स सुरूपवान् रूपसम्पत्ति शालीत्यर्थः । गुरूणाम् पित्रादीनाम् प्रियः । आज्ञाकारित्वादिगुणेन प्रियकरः ।

५१. समस्तभूतोपकृतौ दधद्वपु-
गुणश्रिया व्योमवदाप्नुवन् जगत् ।
स्मृतः प्रतिव्योमपदेन तत्सुत-
स्सभानुभम्भानुमभासयत्सुतम् ॥

५२. ततो दिवाको भवति स्म सत्कवेः
प्रबन्धवत्सद्गुणशाल्यदोषभाक् ।
ततोऽर्थवत्सश्रुतिरागभाक् श्रिया
प्रदर्शनीयोऽजनि वाहिनीपतिः ॥

उरुक्रियो नाम नामेति सम्भावनायाम् उरुक्रिय इति प्रसिद्धनामेत्यर्थः । तथाभूतः सुतः अभूत् । स उरुक्रियः । वत्साः पुत्रादिकल्पाः शिशवइत्यर्थः । वत्सः पुत्रादिवर्षयोरिति मेदिनी । तैः । सहिता ये वृद्धादयः । आदिपदेन यूनाम् परिग्रहः । तैस्तेषु वा समम् तुल्यम् । अनुवर्तितुम् शीलम् यस्य सः । स वत्सवृद्धादिसमानुवर्ती तम् । शिशुषु शिशुवत् युवसु युववत् वृद्धेषु वृद्धवदनुवर्तिनमित्यर्थः । वत्सवृद्धम् तन्नामानम् नन्दनम् समवाप प्राप्तवान् ॥

वत्सवृद्धस्य पुत्रः प्रतिव्योमस्तत्पुत्रो भानुरित्याह ॥

५१. समस्तेति । तत्सुतः तस्य वत्स वृद्धस्य पुत्रः । समस्तानाम् भूतानाम् प्राणिनाम् अन्यत्र वाय्वादीनाम् महाभूतानाम् उपकृतौ उपकारविषये । वपुः शरीरम् दधत् दधानः उत्पन्न इत्यर्थः । एतस्मादात्मन आकाशः सम्भूत इत्यादि श्रुतेः आकाशस्याप्युत्पत्तिमत्त्वात् तस्य चावकाशदानादिना वाय्वादिसकलभूतोपकारकत्वमिति ज्ञेयम् । अत एव गुणश्रिया शौर्यादिगुणसम्पत्त्या । अन्यत्र शब्दरूपगुणसम्पदा जगत् भुवनम् व्योम्ना तुल्यः व्योमवत् आकाशइव आप्नुवन् व्याप्नुवन् प्रतिव्योमपदेन प्रतिरूपम् व्योम यस्येति व्युत्पत्त्या तथाभूतस्ववाचकशब्देन । स्मृतः ख्यातः आसीदिति शेषः । सप्रतिव्योमः भानोः सूर्यस्य भेव भा कान्तिर्यस्य तम् । अतएव भानुम् भानुनामानम् सुतम् स्वपुत्रम् अभासयत् प्रकाशयामास । आकाशमन्तरा सूर्यस्य प्रकाशासम्भवात् तद्धेतुकं तत्प्रकाशनमिव तद्रूपात्तस्मात्तादृशस्य तस्य प्रकाशनमिति भावः ॥

भानोः पुत्रो दिवाकस्तत्पुत्रो वाहिनीपतिरित्याह ॥

५२. तत इति । सत्कवेः सत्पण्डितात् । अन्यत्र सत्कवयितुः । ततः तस्माद्भानोः । सद्गुणैः औदार्यादिभिः । अन्यत्र ओजः प्रसादादिभिः । शाल्यते श्लाघ्यत इति सद्गुणशाली सद्गुणयुक्तइत्यर्थः । दोषा रागद्वेषादयः । अन्यत्र पदपदांशवाक्यार्थरसगताः काव्यदोषाः ।तद्भाक् न भवतीति अदोषभाक् दोषशून्यः । तथाभूतो दिवाकः दिवाकनामपुत्रः । प्रबन्धवत् काव्यसन्दर्भवदेवेत्युत्प्रेक्षा । एवमुत्तरत्रापि । भवतिस्म उद्बभूव । स्मयोगे भूतार्थे लट् । ततः दिवाकात् । श्रुतौ वेदे रागभाक् अनुरागी अन्यत्र श्रवणानुरञ्जकः । स्वबोधकशब्दद्वारेत्यर्थः । यद्वा श्रुतिः षड्जादिस्वरारम्भिका रागः श्रीवसन्तभैरवादिः तद्भजतीति । तथा नाटकादेर्गानालापनादिपूर्वकमभिनेयत्वात्। श्रुतिस्तावत् द्वाविंशतिप्रकारा उक्तञ्च । नान्दी चालनिकारसाच

५३. ततोऽनुभावादियुतोविभावव-
त्सदस्य सङ्गी सहदेव आबभौ ।
अखण्डतां बिभ्रदलौकिकश्रिया
मुतोऽपि वीरो रसवद्व्यभासत ॥

५४. अमुष्य सूनुर्बृहदश्वआलस-
द्रसोदरान्ते हरिदश्वबिम्बवत् ।
ततस्तनुष्माननुभानुमान्प्रति
प्रभो नभोऽब्धौसमभावि भानुमान् ॥

---

सुमुखी चित्रा विचित्रा घना । मातङ्गी सुरसामृता मधुकरी मैत्री शिवा माधवी । बाला शार्ङ्गरवी कला कलरवा माला विशाला जया । मालेति श्रुतयः पुराणकविभिर्द्वाविंशतिः कीर्तिताः ॥ इति ॥ रागलक्षणमप्युक्तम् । यथा यैस्तु चेतांसि रज्यन्ते जगत्त्रितयवर्त्तिनाम् । ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभिः । इति अधिकम् सङ्गीतरत्नाकरादौ द्रष्टव्यम् । श्रिया कान्त्या । अन्यत्र वेशरचनादिना । श्रीर्वेशरचनाशोभेत्यादि-कोशात् । प्रदर्शनीयः मनोज्ञः । अन्यत्र अभिनेयः । तथाभूतो वाहिनीपतिः । तन्नामा पुत्रः । अर्थइव अभिनेयप्रबन्धात्तदर्थइव । अजनि जातः । प्रकाशितो बभूवेत्यर्थः ॥

वाहिनीपतेः पुत्रः सहदेवः तत्पुत्रो वीर इत्याह ॥

५३. तत इति । ततः तथाविधात् वाहिनीपतेः । अनुभावादियुतः प्रभावादिसम्पन्नः अनुभावः प्रभावे स्यात्सतां च मतिनिश्चये इत्यमरः । अन्यत्र अनुभावाः भावबोधका भ्रूक्षेपकटाक्षादयः । तदादिभिर्युतः सहितः । आदिपदेन व्यभिचारिभावादेः परिग्रहः । सदसि साधवः सदस्याः अध्वर्यवः । तत्र साधुरिति यत् । तेषाम् सङ्गी संसर्गी अन्यत्र रङ्गप्रविष्टसहृदयसभ्यसंसर्गी । सहदेवः तन्नामा पुत्रः । विभाववत् नायकादिरूपविभावइव । आबभौ आभाति स्म अविशेषात् काव्यार्थावगमानन्तरम् । विशेषतो विभावादि-प्रतीतेः काव्यार्थाद्विभावइव तद्विधात्तस्मात्तादृशः सम्प्रसूयतेस्मेत्यर्थः । रत्याद्युद्बोधका लोके विभावाः काव्य-नाट्ययोरित्यादि तत्स्वरूपभेदादिकम् साहित्यदर्पणादौ द्रष्टव्यम् । अमुतोऽपि तथाभूतात् सहदेवादपि अलौकिकश्रिया लोकातिगसम्पत्त्या । अन्यत्र लोकोत्तरचमत्कारवत्तया । अखण्डताम् परिपूर्णताम् अन्यत्र एकरूपताम् विभावादिसमूहालम्बनज्ञानतादात्म्यादिति भावः । दधत् बिभ्रत् । वीरस्तन्नामपुत्रः रसवत् वीररसइवेत्यर्थः । व्यभासत विकसितो बभूव । विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरित्युक्तेः । अनुभावाद्येकरूपतापन्नविभावाद्रसनिष्पत्तिरिव तादृशात्तस्मात्तादृशस्य तस्योत्पत्तिरिति भावः ॥

वीरस्य बृहदश्वः तस्य पुत्रो भानुमानित्याह—

५४. अमुष्येति । अमुष्य वीरस्य । बृहदश्वः तन्नामा सूनुः पुत्रः । रसायाः पृथिव्या उदरमेव रसोदरम् जलगर्भः । तदन्ते तन्मध्ये । हरिदश्वबिम्बवत् सूर्यबिम्बइवआलसत् विललास । ततो बृहदश्वात् तनुष्मान् । शरीरी तदुत्पन्नइत्यर्थः । भानुमान् तन्नामा पुत्रः । नभोऽब्धौ आकाशरूपसमुद्रे । प्रति

५५. सुतं प्रतीकाश्वमतिश्रियाऽश्विनी
सुतप्रतीकाशमसावसूयत ।
ससुप्रतीकेन रतीशसौषमम्
वमत्प्रतीकेन सुती स्म मोदते ॥

५६. सदैव देवद्विजपूजने रतः
सुतस्ततोऽभून्मरुदेवसंज्ञितः ।
ततोऽपि सूत्याश्रयणात्सदक्षिणो
बभौ सुनक्षत्रइवाङ्गवान् सवः ॥

गता प्रभा यस्य स प्रतिप्रभः प्रतिबिम्बितकान्तिस्सन् । भानुमान् समभावि सूर्यइतिसम्भाव्यते स्मेत्यर्थः । ननु इत्यवधारणे । यस्य प्रतिबिम्ब एव सूर्यात्मना नभोऽब्धौ वितर्क्यते स्मेत्यर्थः ॥

भानुमतः पुत्रः प्रतीकाश्वस्तत्पुत्रः सुप्रतीकइत्याह ॥

५५. सुतमिति । असौ भानुमान् अतिश्रिया अतिशयितशोभया अश्विनीसुतप्रतीकाशम् स्वर्वैद्यसदृशम् । स्वर्वैद्यावश्विनीसुतौ । स्युरुत्तरपदेत्वमी निभसङ्काशनीकाशप्रतीकाशोपमादय इति चामरः । तथाभूतम् प्रतीकाश्वम सुतम् असूयत सूयते स्म । दैवादिकस्य पूङ्धातोर्लङिरूपम् । स प्रतीकाश्वः । रतीशस्य कन्दर्पस्य सुषमैव सौषमम् स्वार्थेऽण् सुषमा परमाशोभेत्यमरः । यद्वा सुषमस्य भावः सौषमम् सौन्दर्यम् । सुन्दरम् रुचिरम् चारु सुषमम् साधु शोभनमित्यमरः । तत् वमन्त उद्गिरन्त इव प्रतीका अवयवा यस्य । अङ्गम् प्रतीकोऽवयव इत्यमरः । तेन तथाभूतेन सुप्रतीकेन तन्नाम्ना पुत्रेण । सुतोऽस्यास्तीति सुती पुत्री सन् मोदते स्म मुमुदे ॥

सुप्रतीकस्य मरुदेवस्तस्य पुत्रः सुनक्षत्र इत्याह ॥

५६. सदैवेति—ततः सुप्रतीकात् । सदा सर्वदैव । देवद्विजपूजने विषये रत आसक्तः मरुदेव इति संज्ञाजाताऽस्येति तथा । मरुदेवनामेत्यर्थः । सुतः अभूत् । ततः मरुदेवादपि सूतिः प्रसूतिरुत्पत्तिरिति यावत् । तदाश्रयणात् तामाश्रित्येत्यर्थः । अन्यत्र सूतिः सोमाभिषवभूमिः । अभिषूयते कण्ड्यते सोमोऽस्यामिति सूतिः सोमाभिषवभूमिरिति विष्णुपुराणव्याख्याने रत्नगर्भाचार्यः । सूत्यायज्ञकर्मविशेषोवा । सूत्याभिषवः सवनञ्चसेत्यमरः । तदाश्रयणात् उक्तवदर्थः । स प्रसिद्धः । दक्षिणो दाक्षिण्यगुणयुक्तः । दक्षिणैः पुरुषैः सहितः सदक्षिणोवा । दक्षिणेसरलोदाराविल्यमरः । अन्यत्र दक्षिणयाकर्मान्तदान रूपस्वपत्न्या सहितः । यज्ञोगन्धर्वस्तस्य दक्षिणाऽप्सरसः इति श्रुतिः । सुनक्षत्रस्तन्नामापुत्रः । अङ्गवान् मूर्तिमान् सवो याग इव बभौ ॥

५७. शरीरतोऽस्यावततारपुष्करः
स्फुरन्प्रभावानिव पावकोऽरणेः ।
सुतोऽमुतो जायत गार्हपत्यतोऽ-
न्तरिक्षनामाहवनीयलक्षणः ॥

५८. ततो दिदीपे सुतपा महातपाः
सुतः प्रदीपादपरप्रदीपवत् ।
अमित्रजित्पुत्रमजीजनत्सयोऽ
प्यमित्रजिन्मित्रजिदोजसोर्जितः ॥

५९. भवन्बृहद्राज इतो विभूतिमान्
दधद्रतिश्चक्रिणि राजशेखरः ।

---

५७ सुनक्षत्रस्य पुत्रः पुष्करस्तत्पुत्रोऽन्तरक्षि इत्याह ॥

शरीर इति ॥ अस्य सुनक्षत्रस्य शरीरतः देहात् प्रभावान् कान्तिमान् अतएव स्फुरन् जाज्वल्यमानः पुष्करः पुष्करनामा पुत्रः । अरणेः मन्थनदारुविशेषात् । 'निर्मन्थ्य दारुणित्वरणिर्द्वयोरि' त्यमरः पावको वह्निरिव अवततार अवतीर्णोऽभूत् । गार्हपत्यतः गार्हपत्याग्नि स्वरूपात् पितृत्वादिति भावः'। उक्तञ्च मनुना । 'पितावै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृत' इति । अमुतः पुष्करात् आहवनीय इव लक्षत इति आहवनीयलक्षणः । बाहुळकात्कर्तरि ल्युट् । आहवनीयस्य लक्षणमेव लक्षणं यस्य स इति वा तद्रूपोऽन्तरिक्ष नामासुतः । अजायत जज्ञे । गार्हपत्यादुद्धृत्य होमार्थम् संस्क्रियते योऽग्निः स आहवनीय इत्युच्यते । उपमारूपकयोः संसृष्टिः ॥

५८. अन्तरिक्षस्य पुत्रः सुतपास्तत्पुत्रोऽमित्रजिदित्याह ॥

तत इति ॥ ततः अन्तरिक्षात् महत्तपो यस्य सः महातपाः । आन्महतइत्याकारोन्तादेशः । कठोरकर्मा । अतएव सुतपाः सुष्ठु तपो यस्य इति व्युत्पत्या तथा प्रसिद्धनामा सुतः । प्रदीपात् अपरश्चासौ प्रदीपश्चेत्यपरप्रदीपः । तद्वत् दिदीपे बभौ । दीपाद्दीपान्तरमिवाजायते त्यर्थः । स सुतपाः । अमित्रजिन्नामा पुत्रः अमित्रजित्पुत्रः । शाकपार्थिवादित्वान्मध्यपद लोपः । तम् । अजीजनत् जनयामास ऊर्जोबलं सञ्जातोऽस्य ऊर्जितः ऊर्जस्वलः । 'ऊर्जस्तु कार्त्तिकोत्साहबलेष्वि 'ति मेदिनी । यः अमित्रजित् अमित्रान् शत्रून् जयतीति अमित्रजित् शत्रुहन्ताऽपि । ओजसा तेजसा मित्रम् सूर्यम् जयतीति मित्रजित् । उभयत्रापि कर्तरि क्विप् । तथा बभूवेत्यर्थः । अत्र पूर्वार्धे उपमा । उत्तरार्धे विरोधश्चेत्यनयोः संसृष्टिः ॥

अमित्रजित्पुत्रो बृहद्राजस्तत्पुत्रो बर्हिरित्याह ॥

५९. भवन्निति । इतः अमित्रजितः विभूतिमान् उत्पत्तिमान् ऐश्वर्यवान् वा । अन्यत्र भस्मलिप्तशरीरः । 'भूतिर्भस्मनिसम्पत्तादित्यादि' कोशात् । चक्रिणि विष्णौ सर्पे च । रतिम् प्रीतिम् दधत् दधानः ।

अभासयद्बर्हिषमात्मनस्सरु-
ग्भरेण दृक्पातमलक्षितस्मरम् ॥

६०. कृतञ्जयोऽस्याजनि तेजसांनिधी
रणञ्जयो जात इतो जयान्वितः ।
ससञ्जयम् सञ्जनयाम्बभूव यं
जगज्जनाः प्राञ्जलयोऽनुसंययुः ॥

६१. सुतोऽस्य नेत्रालिविभासित प्रभो
बभूव शाक्यः क्षितिपाकशासनः ।
अभूत् प्रसिद्धस्तरसौजसाश्रिया
धिया च शुद्धोदइतो जयन्तवत् ॥

'चक्री कोके कुलालेऽहौ वैकुण्ठे चक्रवर्तिनी' ति हैमः । राज्ञाम् नृपाणाम् शेखरः शिरोमाल्यमिव, राजशेखरः । 'शिखास्वापीडशेखरा' वित्यमरः । नृपश्रेष्ठ इत्यर्थः । अन्यत्र चन्द्रशेखरः । 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपता' विति मेदिनी ॥ अत एव भवन् भव इवाचरन् । आचारक्विबन्ताद्भवशब्दाच्छतृप्रत्ययः । शिवसदृश इत्यर्थः । स प्रसिद्धो बृहद्राजः । आत्मनः स्वस्मात् । रुग्भरेण कान्त्यतिशयेन हेतुना । दृक्पातम् दृशोः पतनम् दृग्विषयतामिति यावत् । अलक्षितः अप्राप्तः स्मरो येन तम् । दुर्लक्ष्यकन्दर्पमित्यर्थः । अन्यत्र आत्मनः स्वस्य दृशो भालनेत्रात् पातो यस्य तम् । अलक्षितः भस्मसात्कृतः स्मरो येन तम् । बर्हिषम् बर्हिनामानम् पुत्रम् वह्निमिवेति च व्यज्यते । 'बर्हिश्शुष्मा कृष्णवर्त्मेत्यादि वह्निपर्यायेष्व' मरः । अभासयत् प्रकाशयामास उपमालङ्कारः ॥

बर्हिषः पुत्रः कृतञ्जयः । तत्पुत्रो रणञ्जयस्तत्पुत्रः सञ्जय इत्याह ॥

६०. कृतञ्जयेत्यादि ॥ अस्माद्बर्हिषः तेजसाम् महसाम् निधिः स्थानभूतः कृतञ्जयः कृतञ्जयनामा पुत्रः अजनि जातोऽभूत् । इतः कृतञ्जयात् जयेन अन्वितः जयान्वितः सर्वदा जययुक्त इत्यर्थः । रणञ्जयो रणञ्जय नामापुत्रोजातः जज्ञे । स रणञ्जयः सञ्जयम् तन्नामानम् पुत्रम् सञ्जनयां बभूव सञ्जनयामास । यं सञ्जयम् । जगज्जनाः जगन्मध्यस्थितनिखिलजनजातमित्यर्थः । प्राञ्जलयः कृताञ्जलयस्सन्तः । अनुसंययुः अनुगता बभूवु रित्यर्थः ॥

सञ्जयस्य पुत्रः शाक्यः । तस्य पुत्रः शुद्धोद इत्याह ॥

६१. सुत इति ॥ अस्य सञ्जयस्य सुतः शाक्यः शाक्यनामा । नेत्रालिविभासितप्रभः नेत्राणाम् नायकगुणविशिष्टानाम् पुरुषाणाम् आलिषु पङ्क्तिषु विशेषेण भासिता प्रकासिता प्रभाकान्तिर्यस्य येन वा स तथाभूतः । अन्यत्र नेत्रालिभि र्नयनपङ्क्तिभि र्विभासितप्रभः । अतएव क्षितौ पृथिव्याम् । पाकशासन इव क्षितिपाकशासनः । बभूव क्षितीन्द्रो बभूवेत्यर्थः । इतः शाक्यात् तरसा शौर्येण 'द्रविणम् तरः सहोबलशौर्याणी' त्यद्यमरः । ओजसा बलेन कान्त्या वा श्रिया शोभया धिया बुद्ध्या च प्रसिद्धः लोके प्रख्यातः । तथा

६२. धराति शुक्त्युज्ज्वलमौक्तिकद्युतिः
क्षितीश्वरोऽस्माद्भवति स लाङ्गलः ।
ततस्स्वशक्त्या विततात्मवैभवोऽ-
भवन्महासेन इव प्रसेनजित् ॥

६३. अभूत्ततः क्षुद्रक आदृतप्रभो
रणप्रवीणो रणकस्तदात्मजः ।
स निग्रहानुग्रहयोरजीजन-
त्सुतं समर्थं सुरथाभिधानकम् ॥

भूतः शुद्धोदः शुद्धोदनामा पुत्रः जयन्तवत् जयन्तेन इन्द्रपुत्रेण तुल्यः । तेन तुल्यादिना वतिप्रत्ययः। 'जयन्तः पाकशासनि 'रित्यमरः। अभूत्। पाकसशासनसदृशात् शाक्यात् जयन्त समानधर्मः शुद्धोदनामा पुत्रः समजनीत्यर्थः ॥

शुद्धोदपुत्रो लाङ्गलस्तत्पुत्रः प्रसेनजिदित्याह ॥

६२. धरेत्यादि ॥ अस्मात् शुद्धोदात्। धरापृथिवी सैव अतिशयिता शुक्तिरिव अतिशुक्तिः मुक्तास्फोटसदृशा । 'मुक्तास्फोटःस्त्रियांशुक्ति' रित्यमरः॥ तस्याम् उज्वलम् जाज्वल्यमानम् यत् मौक्तिकम् मुक्ताफलम्। तस्य द्युतिरिव द्युतिर्यस्य स तथाभूतः। अन्यत्र धरे कैलासपर्वते अतति सन्ततम् क्रीडतीति धराती। 'अतसातत्यगमने इत्यस्मात् कर्तरीन्'। शुक्तिभिः कपालशकलैः शुक्तिः। 'कपालशकले' इत्यादिमेदिनी। उज्वलः प्रकाशमानश्च मौक्तिकद्युतिः। मौक्तिकस्य। द्युतिरिव शुभ्रा द्युतिर्यस्य स तथाभूतश्च त्रयाणाम् विशेषणत्वेऽपि उत्तरोत्तरम् प्रतिपूर्वपूर्वस्य विशेष्यत्व विवक्षया विशेष्यविशेषणसमासः । अतएव क्षितौ ईश्वरइव क्षितीश्वरः तथाभूतो लाङ्गलः लाङ्गलनामा पुत्रः। भवति स्म बभूव। ततः लाङ्गलात्। स्वशक्त्या निजसामर्थ्यात् अन्यत्र आयुधविशेषेण । विततम् विस्तृतम् आत्मनः स्वस्य विभवएव वैभवम् स्वार्थेऽण् । तद्यस्य येन वा स तथाभूतः प्रसेनजित् तन्नामा पुत्रः महासेनः कार्तिकेय इव अभवत् ॥

प्रसेनजित्पुत्रः क्षुद्रकस्तत्पुत्रो रणकस्तत्पुत्रः सुरथ इत्याह ॥

६३. अभूदिति ॥ ततः प्रसेनजितः। आदृताः प्रजा येन स आदृतप्रजः। प्रजावत्सल इत्यर्थः। क्षुद्रकः तन्नामा पुत्रोऽभूत्। तदात्मजः तस्य क्षुद्रकस्यात्मजो नन्दनः रणकः रणकनामा । रणप्रवीणः युद्धविद्याविशारदः। अभूदित्यर्थः। सरणकः निग्रहो निरोधो दण्डो वा अनुग्रहोऽनिष्टवारणपूर्वकमिष्टसाधनम्। 'अभ्युपपत्तिरनुग्रह' इत्यमरः। तयोः समर्थः क्षमतापन्नः तम् सुरथ इति अभिधानं नाम यस्य तम् सुतम् पुत्रम् अजीजनत् जनयामास ॥

६४. स्वमन्त्रशक्त्याऽखिललोकमित्रता-
मवाप पुत्रोऽस्य सुमित्रनामवान् ।
अमी प्रयत्नादिह सङ्ग्रहीकृताः
पुराणरत्नाकरतः सुरत्नवत् ॥

६५. अथासुमित्रेऽप्रभराजमण्डले
शकान्धकारैर्विकलीकृतेऽखिले ।
ज्वलन् द्वितीयोऽर्कइवावनीतले
सविक्रमार्को जनिमाप तत्कुले ॥

---

सुरथस्य पुत्रः सुमित्र इत्याह ॥

६४. स्वेति ॥ अस्य सुरथस्य सुमित्र इति नाम तद्वान् शोभनानि मित्राणि यस्येति व्युत्पत्त्या सर्वेषाम् शोभनम् मित्रमिति वा । अन्वर्थनामेति द्योतनाय । प्राशस्त्ये मतुप् । सुमित्रनामा पुत्रः स्वमन्त्र-शक्त्या निजगुप्तवाद प्रभावेण । 'वेदभेदे गुप्तवादे मन्त्र' इत्यमरः । अखिललोकमित्रताम् निखिलजनमैत्रीम् । अवाप प्राप । अमी राजानः कुशादयः सुमित्रान्ताः षष्टी परिमिति पुरुषाः प्रयत्नात् भागवते प्रसिद्ध-त्वेनाभिहितत्वादेतेषाम् सङ्ग्रहणे एव प्रकर्षेण यत्नम् विधाय । ल्यब्लोपे पञ्चमी । पुराणान्येव । रत्नाकरः । रत्नाधारभूतः समुद्र इव । ततः तस्मात् । पञ्चम्यान्तसिल् । केवल भागवतरूपपुराणरत्नाकरतो वा । सुरत्न-वत् सुरत्नैस्तुल्याः तेन तुल्यम् । क्रियाचे द्वतिरिति वतिप्रत्ययः । शोभन रत्नानीव इह सूर्यवंशावलीप्रबन्धे । सङ्ग्रहीकृताः असङ्ग्रहाः सङ्ग्रहाः सम्पद्यकृताः सङ्ग्रहीकृताः सञ्चयीकृताः सङ्क्षेपेणोक्ता इत्यर्थः । सङ्ग्रह इति कर्तर्यच् । अप् वा सम्यक् ग्रहः सङ्ग्रहो येषामिति वा साधनीयः । 'समाहृतिस्तु सङ्ग्रह' इत्यमरः । यथा रत्ना-करे असङ्ख्यतानाम् रत्नानाम् सत्वात् तन्मध्यात् कियन्ति एव रत्नानि गृह्यन्ते तत्सङ्ग्राहकैः तथा सूर्यवं-शीयानामसङ्ख्यातत्वेन सर्वेषाम् तेषामलभ्यत्वात् तान् सङ्ग्रहीतुमशक्यत्वाच्च तन्मध्यात् केचन एव सार-भूताभागवतोक्ता अत्र समाहृत्य निबद्धा इत्यभिप्रायः । तेन रामायण भारत मत्स्यगरुडपुराणादिषु केषाञ्चि-दधिकानामपि तद्वंशीयानाम् राज्ञामुपलभ्यत्वेऽपि न क्षतिः । न च निबन्धान्तरेषु एकत्रीकृत्य सङ्ख्या-तत्वेन ते सर्वे निबद्धाः सन्तीति वाच्यम् त्रेतान्ते भगवतो रामचन्द्रस्यावतीर्णत्वात् कलौ सहस्राधिक-वर्षान्ते सुमित्रस्योत्पत्तेः युगैकस्यानेकवत्सरपरिमितत्वेन तन्मध्ये इक्ष्वाकुप्रभृतीनाम् कुशप्रभृतीनाम् वा तावतामेव राज्ञामसम्भवस्या सम्भावितत्वात् । अदृष्टवशात्तेषाञ्चिरजीवित्वेन तथासम्भवेपि प्रधानविवक्षाया एव तत्र नियामकत्वात् । अन्यथा तत्तत्पुराणादिष्वपि न्यूनाधिकतया तदुल्लेखात्तेषा मप्रामाण्यापत्तिः । यत्र तु पुराणादिषु क्वचिन्नामविनिमयोदृश्यते तत्र लेखकभ्रमस्य व्यक्त्यन्तरसत्त्वस्य नामान्तरसत्त्वस्य वा कल्पनया समाधेयम् । न्यूनाधिकता तु तत्र तत्र तेषाम् प्रधानविवक्षयैव । एवमुत्तरत्रापि तत्र तत्रेति ह्रास-रसिकैः प्रतिपत्तव्यम् ॥

सुमित्रानन्तरम् तद्वंशे विक्रमादित्यस्योत्पत्ति रित्याह ॥

६५. अथेति । अथ सुमित्रानन्तरम् । असुमित्रे सुमित्र एव शोभनो मित्रः सूर्यइव तस्याभावी यस्मिन् तत् असुमित्रम् तस्मिन् अप्रभम् निष्प्रभम् तेजोबलहीनमिति यावत् यत् राजमण्डलम् नृपतिसमूहः तदेव क्षीणत्वेन निष्प्रभ चन्द्रमण्डलमिव यस्मिन् 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपता'विति मेदिनी

तस्मिन् तथाभूते अखिले समग्रे अवनीतले भूतले। शकान्धकारैः शका म्लेच्छजातिविशेषाः। ततः शकान् सयवनान् काम्भोजान् पारदांस्तथेत्यादिपुराणम्। ते अन्धकारा इव तैः। विकलीकृते विह्वलीकृते पीडित इति यावत्। तथाभूते सति तत्कुले तस्मिन् सूर्यवंशे तस्य सुमित्रस्य कुले वा द्वितीयोऽर्कः सूर्य इव ज्वलन् प्रकाशमानः स प्रसिद्धो विक्रमार्कः विक्रमेण शक्तिसम्पत्त्या अर्कः सूर्य इव तथा प्रसिद्धनामा। विक्रमादित्यनामा नृप इत्यर्थः। जनिम् जन्म आप प्राप। जन्मग्रहणं कृतवानित्यर्थः। 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव' इत्यमरः। तत्कुले इत्यनेन सुमित्रात् कतिपुरुषानन्तरमित्यर्थः। अत्रेदमवबोध्यम्। सूर्यवंशीया राजानः सुमित्रपर्यन्ता एव क्रमादयोध्यासिंहासनमलंचक्रुः। सुमित्रानन्तरम् प्रबलैः शकैर्यवनैश्चाक्रमितमासीद्भारतभूमण्डलम्। ततश्च तेजोबलहीना भरतखण्डवासिनो नृपतय इत स्ततो भूत्वा विलुप्तप्राया आसन् एवं गच्छति काले सुमित्रात् कतिपुरुषानन्तरं तद्वंशे समुत्पन्नो विक्रमार्कः शकान्निहत्य सार्वभौमो बभूवेति चिरन्तनीकथाऽत्रानुसन्धेया। विक्रमविषये किञ्चिदत्र विचार्यते। सच गन्धर्वसेनस्य राज्ञो धारानगराधिपतेः पुत्र इति भेतालपञ्चविंशतिकथा निबन्धादौ। गन्धर्वसेनश्च चन्द्रभानुनाम्नो राज्ञः पुत्र इति तस्मादेवावगम्यते। एतेन म्लेच्छै राक्रमितेऽयोध्यामण्डले सुमित्रस्य पुत्रादयस्तत आगत्य धारानगरे स्वराज्यं स्थापयामासुः। तद्वंशे समुत्पन्नो विक्रमादित्यः स्वप्रतापविभवेन शकान् विजित्य उज्जयनीनगरे स्वराज्यं कृतवानिति प्रतीयते। परं तु नायं गन्धर्वसेनो धारानगराधिपतिः। किन्तु स तस्य जामाता। धाराधिपतिस्तु स्वस्य सन्तत्यभावात् स्वदौहित्राय विक्रमादित्याय भर्तृहरये च राज्यंप्रादात्। किञ्चित्कालानन्तरम् विक्रमादित्यः धारानगरं विहाय उज्जनीङ्गत्वा तत्रापि स्वज्येष्ठभ्रातरं भर्तृहरिम् राज्यभाराय राजानम् प्रबोध्य कदाचित् स्वयं विन्ध्यस्योत्तरदिशि सञ्चरन् ढक्कानगरं प्राप्य तत्र स्वशौर्येण तद्राज्यं लब्ध्वा तत् परिपालयन् विक्रमनगराभिधया तदाह्वस्त। इति त्रिमुनिकल्पतरौ। एतेन उज्जयिन्यधिपतिर्गन्धर्वसेनो भवेत्। तत्पुत्रो विक्रमादित्यः धारानगराधिपतेश्चन्द्रभानुनाम्नो राज्ञो दौहित्रस्स्यादिति प्रतीयते। तत्रैव च विक्रमादित्यश्चन्द्रगुप्तनाम्नो द्विजस्य पुत्रः चन्द्रगुप्तद्विजस्तु यथा ब्रह्मराक्षसात् महाभाष्यमधीत्य वर्णक्रमेण चतस्रो भार्याः उदूह्य तासु वररुचि विक्रमार्क भट्टिभर्तृहरिनामकान् चतुरः पुत्रान् क्रमेणोत्पादयामासेत्यादि तद्विस्तरस्तत्रैव द्रष्टव्यः। ग्रन्थगौरवभयात् प्रयोजनाभावाच्च नात्र लिख्यते। केचित् ब्राह्मण्यामभवद्वराहमिहिरोज्योतिर्विदाम ग्रणीः राजा भर्तृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत्। वैश्यायां हरिचन्द्रवैद्यतिलकोजातश्चशङ्कुकृतीशूद्राया ममरः षडेव शबरस्वामिद्विजस्यात्मजाः इति॥ अन्ये तु चन्द्रगुप्तनाम्नो राज्ञः पुत्रो विक्रमार्क इति कथयन्ति। स तु चन्द्रगुप्तो बहुधाश्रूयते। स तु उक्तप्रामाण्या द्बाह्मण इति केचित्। तदन्ये न मन्येन्ते। चन्द्रगुप्तद्विज पुत्रस्य विक्रमादित्यस्य चक्रवर्तित्वासम्भवात्। कुतः प्रथमं चन्द्रगुप्तस्य द्विजस्य राज्यमासीन्न वा। आद्ये राज्ञोऽस्य बहुभृत्यस्य एकाकितया ब्रह्मराक्षससमीपम्भाष्याध्ययनार्थं गमनं तत्र आगमनसमये स्वसिरसिपुस्त कभारग्रहणादि तत्तद्दरिद्रकृत्यादिकमुपहास्पदमेव स्यात्। अन्त्ये तस्य राजाभावेन पुत्रेण विक्रमादित्येनापि राज्यं कुतोपिन कथमप्युपलब्धमिति। तस्य राज्यपरिपालन वर्णनं चक्रवर्तित्वकथनञ्चायुक्तं स्यात्। तस्मात् प्रसिद्धः शककर्ता विक्रमादित्यो नास्य पुत्र केचित्। महावंशनामकादिबौद्धग्रन्थेषु चन्द्रगुप्तस्य उत्तमक्षत्रवंशसम्भूतत्वमुपपादितम्। नन्दस्यौरसः पुत्रः कश्चिन्नाम्ना चन्द्रगुप्त आसीदिति बृहत्कथाकारोऽपि। अयं नन्दस्तु मगधवंशोत्पन्नानां नवनन्दानामन्तिमः। परंतु 'शर्मादेवश्च विप्रस्य वर्माराजा च भूभृतः। गुप्तो दत्तश्च वैश्यस्य दासः शूद्रस्य कारये' दिति यमोक्तेः। 'शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य वै। वैश्यस्य गुप्तं संयुक्तं दासान्तं शूद्रजन्मन' इति स्मृत्यन्तरप्रामाण्याच्च। 'चन्द्रगुप्तपदे गुप्तपददर्शनात्सतु वैश्यएवेति जगदुः। रूपकप्रणेता विशाखदत्तस्तु चन्द्रगुप्तं वृषलत्वेनासकृन्निर्दिशति। तदनुयायिनश्च नन्देन परिगृही-

तायां अवरजातिसम्भूतायाम्मुरानाम्न्यां समुत्पन्नोऽयं मौर्यश्चन्द्रगुप्तो वृषल एवेति वदन्ति । तथाच विष्णुपुराणे चतुर्थांशे मागधानां राज्ञां वंशानुकथनप्रकरणे । नवैतान्नन्दान् कौटिल्यो ब्राह्मणस्समुद्धरिष्यति इत्यन्तेन नवनन्दानभिधाय तेषामभावे मौर्याश्च पृथिवीं भोक्ष्यन्ति । कौटिल्य एव चन्द्रगुप्तमभिषेक्ष्यतीति चन्द्रगुप्तस्य मौर्यवंशीयत्वम्प्रतिपाद्य तस्यापि पुत्रो बिन्दुसारो भविष्यति ॥ तस्याप्यशोकवर्धन इत्यादि मौर्यकुलमभिहितम् । किन्तु चन्द्रगुप्तस्य पुत्रो विक्रमार्क इति नोक्तम् । राजस्थानीयेतिहासादौ तु तुआरवंशे विक्रमादित्यस्योत्पत्तिरिति प्रदर्शितम् । स तु वंशः यदुकुलोत्पन्न इति केचित् । पाण्डुकुलोत्पन्न इत्यन्ये । भविष्यपुराणे तु अग्निवंशवर्णने तन्मध्ये प्रमरवंशोत्पन्नात् गन्धर्वसेननाम्नो राज्ञः वीरमतीनाम्न्या देवाङ्गनायां समुत्पन्नो विक्रमादित्य इति । भविष्यपुराणोक्त कलियुगीयवंशानुचरिताधिकं सर्वं न व्यासोक्तम् । तत्र बहुल व्यभिचारदर्शिनात् कियदंशास्तत्र केनचित्प्रक्षिप्ता इव लक्ष्यन्ते । अतस्तदप्रमाणमिति केचित् । व्यासोक्तत्वेन तस्य प्रमाणत्वे उक्तरूपाङ्गित्वेन कलियुगान्तरीय विषयत्वेन वा तत्सर्वं कल्पनीयमिति । एवं विक्रमविषये बहुधा किंवदन्ती सत्वात्तत्सर्वं यथाकथंवाऽस्तु । किं तत्र । नन्दपुरीय सूर्यवंशावलौ-चिरन्तनैर्विक्रमादित्यस्योल्लेखात् तत्सङ्केतत्वेन नन्दपुरदुर्गेचिरात् पूर्वैः प्रतिष्ठापितस्य द्वात्रिंशत्सोपानयुक्तराजसिंहासनस्य स्थानचिह्नादीनामद्यावधिपरिदृश्यमानत्वात् पुराणप्रसिद्धानां सूर्यवंशीयानाम्मध्ये प्रधानस्य त्रेतायामवतीर्णस्य भगवतो रामचन्द्रस्य कलौ तद्वंशसमुद्भूतानामितिहासप्रसिद्धानां मध्ये-प्रधानस्य विक्रमस्य च उभयोरपि निजसूर्यवंशप्रभवत्वविस्मृतिः । कदापि माभूदितिबुद्ध्या जयपुरदुर्गस्थितैर्नन्दपुराधीश्वरैरिदानीन्तनैरपि चिरात् पुरुषानुक्रमेण परिवर्तिताभ्यां तदुभयनामभ्यामभिहितत्वाच्च सूर्यवंशे एवास्य विक्रमार्कस्योत्पत्तिरिति वयम्प्रतीमः । नचास्य सूर्यवंशीयत्वमिति कुत्राप्यनुल्लेखात्तदप्रमाणमिति वाच्यम् ॥ अङ्गभषायां मुद्रितस्य राजस्थानहिष्टरीतिप्रसिद्धस्य ग्रन्थस्य द्विचत्वारिंशत्पृष्ठायां सुमित्रस्य सन्ततिविक्रमादित्य इति लिखितत्वात् स्वस्य सूर्यवंशीयत्वं प्रख्यापयतां नेपालदेशसाम्राज्यधुरन्धराणामपि विक्रमादित्यसन्ततित्वप्रसिद्धेश्च । नचैतस्य सर्वसम्मतत्वाभावादप्रामाण्यमिति वाच्यम् । एतद्धि अपूर्वोक्तप्रकाराणामपि परस्परानभिमतत्वेन तेषामप्रामाण्यं केन वार्येत । न हि कोपि शृङ्गग्राहिकया कस्मिन्नपि वंशे विक्रमार्कं प्रदर्शयेत् । परञ्च विक्रमार्क इति विक्रमादित्य इति च नाम्नि सूर्यपर्यायाणामुपलब्धत्वात् सतु सूर्यसम्बन्धीति सूर्यवंशे एव तस्योत्पत्तिरिति वक्तुं युज्यत इति युक्तमुत्पश्यामः । किञ्च विक्रमसभारत्नभूतेन कविना कालिदासेनापि विक्रमवंशकथनेच्छयैव रघुवंशाख्यं निर्मितम् ॥ तत्र अग्निवर्णवर्णनपर्यन्तं लभ्यते ॥ तदुत्तरभागः केनचिदपहृतो वा कालक्रमेण विलुप्त आसीदिति प्रतीमः । अन्यथा भगवतो रामचन्द्रस्य वर्णनादेव विरम्येत । तदुत्तरवंशवर्णने प्रयोजनाभावादित्यलम्पल्लवितेन । अथ सर्वस्मिन्नपि मते विक्रमादित्यस्य नन्दराज्यकालोत्तरकालीनोत्पत्तिकत्वात् नन्दान्ताः क्षत्रिया गता इत्याद्युक्तेर्नन्दकालावधिकमेव क्षत्रियकुलसत्वं ॥ तदुत्तरं तदुच्छेदश्चेति प्रतीतेः कथं सूर्यवंशीयविशुद्धक्षत्रियकुले तस्योत्पत्तिः सङ्गच्छतामिति माभापिष्ठाः । तादृशोक्तेः प्रमाणत्वे नन्दः अन्तो येषां ते क्षत्रिया इत्यनेन नन्दवंशीयक्षत्रियाणामेवोच्छेदप्रतीतिः स्यान्नतु निखिलक्षत्रियाणाम् । अन्यथा जातेरप्युच्छेदापत्तेः । जातेर्नित्यत्वेन क्षत्रियव्यक्तिमन्तरा क्षत्रियत्वजातेरन्यत्रासम्भवादिति ध्येयम् । वस्तुतस्तु नन्दान्ताः क्षत्रिया इत्यनेन नन्दकालपर्यन्तमेव प्राचुर्येण क्षत्रियधर्मसत्त्वम् । अनन्तरं क्रमेण तद्धर्मलोपइत्याद्यर्थ उन्नेयः । तेन कलावेकपादो धर्म इत्यादिसङ्गच्छते । अन्यथा क्षत्रियाभावे क्षत्रियधर्मपादस्यासत्त्वप्रसक्त्या तदसङ्गतं स्यादित्येवमादि । कलौ क्षत्रियसत्वासत्त्वप्रतिपादकपुराणवचनानि बहूनि सन्ति । तल्लेखने प्रयोजनाभाव इत्यलम् ॥

६६. यदीययानेऽब्धितरङ्गभङ्गिभिः
पतत्पटप्राभृतरत्नसङ्कटे ।
अनृत्यदानर्तधरातले ज्वल-
त्प्रतापदण्डो परिकीर्तिनर्तकी ॥

६७. गजालिभित्तौ ध्वजचित्रितेऽस्त्रदी-
पिते हयोद्धूतरजोवितानिते ।
शताङ्गपर्यङ्किनि सङ्गराङ्गणे
जयश्रिया शङ्कितयाप्यलिङ्गि यः ॥

६८. अधीरया कामशराग्निदग्धया
तथा गलद्बालदुकूलबन्धया ।

---

तमेवं विक्रमं विशिनष्टि ॥

६६. यदीयेत्यादि ॥ यदीययाने यस्य विक्रमार्कस्य सम्बन्धि जैत्रयात्रायां । उपचितशक्तेः कृतमूलराष्ट्ररक्षणस्य शत्रोरास्कन्दनाय 'यात्रायान' मिति भरतः । अब्धीनां समुद्राणां चतुर्णामित्यर्थः । तरङ्गभङ्गिभिः लहरीव्याजैः 'व्याजच्छलनिभेभङ्गि'रिति रभसः । पतन्तः पटाः सुचेलका यस्मिन् । 'सुचेलकः पटोऽस्त्री' त्यमरः । तस्मिन् तथाप्रभृतानि प्रदेशन भूतानि । भयात्सन्धित्सुभिर्भूपतिभिर्दीयमानानीति यावत् । यानि रत्नानि तैः । सङ्कटे संवादे सङ्कीर्णत्वेन दुष्प्रवेश्ये इति यावत् । 'सङ्कटं ना तु संवादे' इत्यमरः । आनृत्यन्त्यस्मिन् योद्धारो नटा वेति आनर्तः । समरस्थानमेव नृत्यस्थानम् । 'आनर्तः समरे नृत्यस्थाननीवृद्विशेषयो' रित्यमरः । तथाभूतं यद्धरातलं तस्मिन् । प्रताप एव दण्डः प्रज्वलितत्वेन यष्टिरूपः । तदुपरि कीर्तिरेव नर्तकी । सा अनृत्यत् ननर्त । द्रष्टारोहि नृत्यभूमौ नर्तक्याद्युपरि रत्नवस्त्रादिकं क्षिपन्तीति तथोक्तिः । एतेनास्य स्वप्रतापार्जितनिखिल धराधिकृतत्वमभिहितम् ॥

तस्यैव शौर्यसम्पत्तिं द्वाभ्यां दर्शयति ॥

६७ गजेति ॥ योऽपि यश्च विक्रमः । गजालिर्हस्तिपङ्क्तिरेव भित्तिः आवरणम् यत्र तस्मिन् । ध्वजैः । पताकाभिश्चित्रिते सञ्जातचित्रे अस्त्रैर्बाणैः । दीपिते प्रकाशिते । सञ्जातदीपे वा । हयै र्घोटकैः उद्धूतानि खुरोत्क्षिप्तानि यानि रजांसि धूलयः तैर्वितानि ते सञ्जातविताने । शताङ्गो रथः याने चक्रिणि युद्धार्थे । 'शताङ्गस्यन्दनोरथ' इत्यमरः । स एव पर्यङ्कः पल्यङ्कः । सेऽस्यास्तीति शताङ्गपर्यङ्कि तस्मिन् । तथाभूते । सङ्गराङ्गणे युद्धप्राङ्गणे । जयश्रिया । विजयलक्ष्म्या । स्त्रीलिङ्गाक्षिप्तयाकयाचिन्नायिकयेवेति व्यज्यते ॥

अङ्कितया निर्विशङ्कतया । आलिङ्गी आलिङ्गितः । सवत्र जयवानित्यर्थः ॥

शकानपि निर्मूलयामासेत्याह ॥

६८. अधीरेति ॥ यश्च विक्रमः । अधीरया अवमर्थेनास्तव्यस्तया । अन्यत्र कुलभ्रष्टया । काममत्यन्तम् । शराग्निना बाणवह्निना दग्धया । अन्यत्र कन्दर्पशराग्निदग्धया । गलन्तः स्रंसमाना बालदुकूल-

रजोतिमात्राकुलयातिरक्तया
श्रितः शकानां नगरीश्रियाचयः ॥

६९. चिराय रामादिविचित्रसत्कथा-
दिभिर्यथातैर्जगति प्रथाङ्गता ।
तथैव यस्योज्जयिनीपतेर्गुण-
प्रतापकीर्त्यादिभिरेधते मही ॥

७०. तदीयशुद्धान्वयदुग्धधौ महा-
रथीति नामाऽजनि राजचन्द्रमाः ।
चचार चञ्चद्रुचिचन्द्रिकायितं
जगत्सु यच्छौर्यगुणार्जितं यशः ॥

बन्धाः । 'केशक्षौमवासबन्धनानि यस्यास्तया । युद्धे परास्ततया कामविवशतयेचेति व्यज्यते । रजोभिः पांसुभिरतिमात्राकुलया अतिशयेन व्याप्तया । अन्यत्र परागैर्लिप्तया । आर्तवेनाधिकक्लिश्यमानया वा । 'रजः क्लीबङ्गुणान्तरे । आर्तवे च परागे च रेणुमात्रेपि दृश्यते' इति मेदिनी । अतिरक्तया अतिशयितरुधिरया अन्यत्र अतिशयानुरागयुक्तया । तथाभूतया । शकानां म्लेच्छविशेषाणान्नगरी श्रिया पुरश्रिया । स्त्रीलिङ्ग-क्षिप्तनायिकयेति च व्यज्यते । श्रितः सेवितआसीदित्यर्थः । कर्माणि क्तः । शकान् समरे निहत्य तच्छ्रियं स्वयं गृहीत्वा निजशकं प्रवर्तयामासेत्यर्थः ॥

तस्यैव प्रसिद्धिं दर्शयति ॥

६९. चिरायेति ॥ मही पृथिवी । तैः प्रसिद्धैः रामो दाशरथिः स एव आदिर्येषां ते रामादय रामस्यादयो वा । तेषां सूर्यवंशीयप्रधानभूपानां विचित्रा लोकोत्तरचमत्कारजनिका याः सत्कथाः सच्चरितानि तदादिभिः । यथा येन रूपेण चिराय चिरकालपर्यन्तम् । आचन्द्रतारकमिति यावत् । जगति लोके प्रथां प्रख्यातिं गता प्राप्ता सती । एधते वर्धते । तथैव तेन रूपेणैव उज्जयनीपतेः । उज्जनी नामनगर्याः अधिपतेः यस्य विक्रमार्कस्य । गुणाः शौर्यादयः । प्रतापं कोपदण्डजतेजोविशेषः । कीर्तिर्दानादि प्रभवारूयातिः । तदादिभिः तै. । विचित्रसत्कथादिभिः । चिराय जगति प्रथाङ्गता सती एधते । यस्य विक्रमस्य कथारामकथावत् पृथिवीं व्याप्य वर्तते । तथा अन्यः कोऽपि न भविष्यतीति भावः ॥

विक्रमान्वये महारथिनामा नृपउत्पन्न इत्याह ॥

७०. तदीयेति ॥ तस्य विक्रमस्यायम् तदीयः तत्सम्बन्धीत्यर्थे । शुद्धोऽशुद्धिरहितः । योन्वयो वंशः सूर्यवंश इत्यर्थः । स एव दुग्धधिः क्षीरसमुद्र इव तस्मिन् विशुद्धत्वेन क्षीरसमुद्रकल्पे विक्रमवंशे इत्यर्थः । महारथीति प्रसिद्धं नाम यस्य स महारथिनामेत्यर्थः । राजा चन्द्रमा इव राजचन्द्रमाः राजश्रेष्ठः । अजनि जातः । तस्य महारथिनः शौर्यगुणेन शूरस्य भावः । कर्म वा शौर्यम् ष्यञ् । तद्रूपो यो गुणः तेन आर्जितम् सम्पादितम् यशः प्रशस्तिविशेषः शौर्यादिप्रभवम् यश इत्युक्तेः । तदेव कर्तृ । जगत्सु भुवनेषु चञ्चन्ती

७१. ततो बभूवातिरथी प्रमन्थनाज्जडीकृता येन विकत्थनारयः ।
अकल्पि मन्थाचलवन्मृधाम्बुधौ बली च तेनाचलसेननन्दनः ॥

७२. जगद्दिधक्षन्निव तेजसा यशःपयोभिरिच्छन्निव तन्निमज्जनम् ।
नृपस्तदासीत्कनकादिसेनकं विदुर्यदीयाह्वयमैतिहासिकाः ॥

---

लसन्ती रुचिः कान्तिर्यस्याः साचासौ चन्द्रिकाचेति कर्मधारयः । चञ्चदित्यत्र गत्यर्थकचञ्चधातोः शतृप्रत्ययः । तद्वदाचरितं चञ्चद्रुचि चन्द्रिकायितम् । कर्तुः क्यङ् इत्यादिना आचारार्थे क्यङन्ताच्चन्द्रिकाशब्दाच्छतृप्रत्ययः तथाभूतं सत् चचार सञ्चरणं चकार । सर्वत्र जगति प्रख्यातिवान् स इत्यर्थः ॥

महारथिपुत्रोऽतिरथी तत्पुत्रोऽचलसेन इत्याह—

७१. तत इति ॥ ततः महारथिनः । अतिरथी बभूव । अतिरथिनामा पुत्र उदभूदित्यर्थः । येनातिरथिना विकत्थन्त इति विकत्थनाः । आत्मश्लाघानिरताः येऽरयः शत्रवः । ते मृधमेवाम्बुधिः समुद्रः । 'मृधमास्कन्दनं जन्य'मित्यादि युद्धपर्यायेष्वमरः । तस्मिन् युद्धसमुद्रे प्रमन्थनात् तत्प्रमन्थनाद्धेतोः जडीकृताः । अजडाजडाः सम्पद्यकृताः । अभूततद्भावेच्विः । मूढीकृताः । अथ च जलवत्कृताः । डलयोरैक्यात् । तेनातिरथिना बली शत्रुनिग्रहसामर्थ्यवान् । अचलसेननन्दनः अचलसेन नामा नन्दन इत्यर्थः । शाकपार्थिवादित्वान्नामेत्यस्योत्तरपदस्य लोपः मन्थाचलवत् मन्दरपर्वत इव । अकल्पि कल्पित आसीदित्यर्थः । कर्मणि तङ् च्लेश्चिण् तलोपः । यः युद्धसमुद्रे स्वयमेव जलीकृतवान् स एव युद्धसमुद्रे स्वपुत्रं मन्थाचलं परिकल्प्य तान् ममन्थेत्यर्थः । मन्थाचलकल्पना दचलसेन नाम्नि । अचलपदमपि सार्थकमिति भावः । विक्रमादित्यस्य सन्ततराजपाल स्तद्वंशीयो महारथस्तत्पुत्रोऽतिरथस्तत्पुत्रोऽचलसेन इत्यादि राजस्थानहिष्टरिनामकाङ्ग्लग्रन्थे उपलभ्यते । किन्तु हिन्दीभाषामुद्रित राजस्थानेतिहासादौ राजपालस्य विक्रमादित्य समसामयिकत्वं तद्भिन्नवंशीयत्वञ्च स्फुटमिति बोध्यम् ॥

अचलसेनस्य पुत्रः कनकसेन इत्याह—

७२. जगदित्यादि । तत् तस्मात् अचलसेनादित्यर्थः । जगत् लोकं दिधक्षन् दग्धुमिच्छन्निवेत्युत्प्रेक्षा । दहधातोः सन्नन्ताच्छतृप्रत्ययः । तथा यशांस्येव पयांसि क्षीराणि तैः । 'पयः क्षीरं पयोम्बुचे'त्यमरः । यशो रूपक्षीरैः तन्निमज्जनं तस्य जगतः निमज्जनमाप्लावनम् । इच्छन्निव यशःपयोभिर्जगन्निमिमज्जयिषन्निवेत्यर्थः । तथा भूतो नृपः आसीत् । तस्मादुदभूदित्यर्थः । कः सइत्याकाङ्क्षायामाह । कनकेत्यादि । इतिहासं विदन्तीति ऐतिहासिकाः आख्यानाख्यायिकेतिहासपुराणेभ्यश्चेति ठक् । पुरा वृत्तज्ञा इत्यर्थः । 'इतिहासः पुरावृत्त'मित्यमरः । यदीयाह्वयं यस्य नृपस्य सम्बन्धिनामधेयं कनकादि सेनकम् । कनकशब्द आदौ यस्य तथा भूतः सेन शब्दो यस्मिन् आह्वये स कनकादि सेनकः ततः कनकसेनमित्यर्थः । विदुः जानन्ति कथयन्तीत्यर्थः । विदोलटोवेति झेर्जुसादेशः । अचलसेनस्य पुत्रोयं कनकसेनः । आङ्कशकस्य (१४४) चतुश्चत्वारिंशदधिकैकशतपरिमितेऽब्दे आसीदिति ऐतिहसिकाः । खिष्टीयाब्दप्रवृत्तिकालात्पूर्वम् (५६) षट्पञ्चाशत् परिमिताब्दादूर्ध्वं विक्रमादित्यशकप्रवृत्तिकालः । तेन विक्रमादित्यस्थितिकालात् (२००) शतद्वयवत्सरानन्तरं कनकसेनस्य स्थितिकाल इति प्रतीयते ॥

७३. स्वबाहुवीर्यात् क्षितिनिर्जरेशतामुपार्जयन् सैन्यघनैः समूर्जितैः ।
स जर्जरीकृत्य च गुर्जरं शरापवर्जनैर्द्वारवतीमतर्जयत् ॥

७४. अथात्र दुर्हृद्बलभीतिदायिनीं सखेयदुर्गां वलभीविशालिनीम् ।
पुरीं प्रकुर्वन् बलभीतिगुर्जरे चकार राज्यं बलभिन्नृणामसौ ॥

७५. प्रभुर्बभूवास्य दयारसैकभूर्भुवं समाक्रम्य ततः श्रियाश्रितः ।
महान्पदेस्मिन्मदनादिसेनसत्पदाभिधेयस्तनयो नयाम्बुधिः ॥

तमेव द्वाभ्यां विशिनष्टि ॥

७३. सेति ॥ स कनकसेनः स्वबाहुवीर्यात् निजभुजबलमाश्रित्यैवेत्यर्थः । क्षितिनिर्जरशताम् । निर्जराणां देवानामीशो निर्जरेशः । क्षितेः पृथिव्याः निर्जरेशः क्षितिनिर्जरेश स्तस्यभावस्तत्ता । तां क्षितीन्द्रत्वं भूपतित्वमिति यावत् । उपार्जयन् प्राप्नुवन् इत्यर्थः समूर्जितैः सम्यक् बलदर्पितैरित्यर्थः । सैन्यघनैः सैन्यान्येव घना मेघवन्निरन्तराः तैः सहायभूतैः सह । शरापवर्जनैः । शराबाणाएवशराजलधारा इव । 'शरं जले' इति विश्वमेदिन्यौ । तेषामपवर्जनैर्विसर्जनैः । शरवर्षणैरित्यर्थः । गुर्जरं गुर्जरदेशं जर्जरीकृत्य । आप्लाव्य पीडयित्वेत्यर्थः । द्वारवतीं द्वारकानामनगरीञ्च । 'द्वारावती द्वारवती द्वारकावनमालिनी'ति शब्दरत्नावली । अतर्जयत् तर्जयामास । तां जितवानित्यर्थः ॥

७४. अथ इति ॥ नृणाम् नराणाम् । नृचेति नामि वैकल्पिको दीर्घाभावः । बलभित् इन्द्रः । बलारातित्वात् । 'मिथ्याप्रतिज्ञो बलभि'दिति च प्रयोगः । नरेन्द्र इत्यर्थः । असौ कनकसेनः । अथ द्वारका विजयानन्तरम् गुर्जरे दुष्टम् हृदयम् येषाम् ते दुर्हृदः शत्रवः । 'सुहृद्दुर्हृदौमित्रामित्रयो'रिति निपातनात् । हृदयस्य हृदादेशः । तेषाम् बलानाम् शत्रुसैन्यानाम् भीतिदायिनीम् भयप्रदाम् । खेयम् परिखा । 'खेयं तु परिखे' त्यमरः । दुर्गम् दुष्प्रवेश्यपुरप्राकारादि । ताभ्याम् वलभीभिश्चन्द्रशालाभिः । 'शुद्धान्ते वलभी चन्द्रशाले सौधोर्ध्ववेश्मनी' ति रभसः । विशेषेण शाल्यते श्लाघ्यत इति विशालिनी ताम् । वलभी इति प्रसिद्धाम् । वल्भीति केचित् । निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिरिति वामनः । तन्नाम्नीम् नगरीम् पुरीम् प्रकुर्वन् प्रतिष्ठापयन् । अत्र नगर्याम् राज्यम् निजराजकर्म चकार कृतवान् । अयम् हि प्रथमतो वर्तमानप्रसिद्धलाहोर इति देशे आसीत् । ततः दिग्विजयं कृत्वा द्वारकाम् विजित्य तत्र गुर्जरदेशे अभिनवम् वलभीनगरम् प्रतिष्ठापयामासेति इतिहासविदः । एतस्य चरितबाहुल्यम् उत्कलभाषामुद्रितभारतवर्षीयेति हासादौ द्रष्टव्यम् ॥

कनकसेनस्य पुत्रो महामदनसेन इत्याह ॥

७५ प्रभुरिति ॥ ततः तद्राज्यानन्तरम् दयाएव रसः तस्य एकभूः एकस्थानभूतः । भुवम् पृथिवीम् समाक्रम्य पितुः सकाशाल्लब्ध्वेत्यर्थः । श्रिया राज्यसम्पदाश्रितः सेवितः । नयेषु नीतिशास्त्रेषु विषये अम्बुधिः समुद्रइव दुरवगाहत्वात् समुद्रोपि रसस्य जलस्य भूः । भुवमाक्रम्यावृत्य तिष्ठति । श्रिया लक्ष्म्या च श्रितः जनकत्वादिति तत्सादृश्यम् वेदितव्यम् । तथाभूतो महान् महत्पदवाच्यः । मदनशब्द आदौ यस्य तथाभूतः सेनशब्दो यस्मिन् । तथाभूतम् यत् सत्पदम् सदभिधानम् तस्याभिधेयो वाच्यार्थभूतः ।

७६. ततः सुदन्तः समभूत्समुन्नतः ससारसम्पत्सुरदन्तिसम्मितः ।
व्यभासयत्सोऽजयसेनमात्मनः प्रभावदीप्तं विबुधाग्रवन्दितम् ॥
७७. बभूव गम्भीरपदादिसेनभाक् यदाह्वयस्तद्विधिचोदितस्तु यः ।
परैः पराभूत इतस्ततो भ्रमन् जगाम काश्मीरनरेशसन्निधिम् ॥
७८. स तं रणादित्य उदारकृत्यवान् प्रतीत्य सच्छीलकुलर्यपूजितम् ।
सजम्बुनाम्न्याम् पुरितीर्थवारिभिर्विभज्य राज्यं निजमभ्यसिञ्चयत् ॥

महामदनसेननामेत्यर्थः । अस्य कनकसेनस्य तनयः पुत्रः । अस्मिन् पदे स्थाने वलभीनगर्यामित्यर्थः । प्रभुरधिपतिः बभूव तत्रैव राजधान्याम् स्थितस्सन् राज्यम् चकारेत्यर्थः ॥

महामदनसेनस्य पुत्रः सुदन्तस्तत्पुत्रोऽजयसेनइत्याह ॥

७६. ततइति ॥ ततः नयाम्बुधेर्मदनसेनात् । समुन्नतः सर्वतः समुच्छ्रितः । सारसम्पदाबलसम्पत्या सह वर्तत इति ससार । 'सम्पत् सारो बले स्थिरांशे च 'त्यमरः । अतएव सुरदन्तिन ऐरावतगजेन सम्मितः तुल्यः सुदन्तनामा पुत्रः । इदमपि नाम ऐरावतसादृश्यसम्पादकम् तस्यापि शोभनदन्तत्वात् समभूत् । समुद्रादैरावतइव तस्मात्स समुद्भभूवेत्यर्थः । स सुदन्तः आत्मनः स्वस्मात् । स्वसम्बन्धाच्चेति गम्यते । प्रभावदीप्तम् तेजोविभवसम्पन्नम् । विबुधानाम् पण्डितानां देवानां चेति गम्यते । 'विबुधोज्ञे-सुरे ' इति कोशात् । अग्रवन्दितः अग्रपूजितः इन्द्रइवेति व्यज्यते । तं तथाभूतं अजयसेनम् अजया सेनायस्येति व्युत्पत्या तथा अन्वर्थनामधेयम् पुत्रमित्यर्थः । इदमपीन्द्रे योज्यम् । व्यभासयत् प्रकाशयामास । यथा ऐरावत आत्मसम्बन्धादिन्द्रम् प्रकाशयति तद्वदयमप्यात्मनस्तं प्रकाशयामासेत्यर्थः ॥

अजयसेनस्य पुत्रो गम्भीरसेन इत्याह ॥

७७ बभूवेति ॥ तत् तस्मादजयसेनात् । यदाह्वयः यन्नामधेयम् । गम्भीरपदम् । आदौ यस्य तथा भूतो यः सेनशब्दस्तम् । भजतीति तथा गम्भीरसेन नामा इत्यर्थः । बभूव जज्ञे । यस्तु गम्भीरसेनः विधिचोदितः विधिना दैवेन प्रेरितः सन् दुर्विपाकग्रस्तइति यावत् । परैः शत्रुभिः पारशदेशीयैरित्यर्थः । पराभूतः पराजितः । अत एव इतस्ततो भ्रमन् अनास्थया भ्रमणम् कुर्वन्नित्यर्थः । वलभीपुरीम् त्यक्त्वा पलायमानः सन्निति यावत् । काश्मीरनरेशसन्निधिम् काश्मीरदेशाधिपतेरणादित्यनाम्नो राज्ञः समीपमित्यर्थः । जगाम प्राप । स्वकुटुम्बविद्रोहेण वलभीन्त्यक्त्वा काश्मीरदेशं जगामेति पुस्तकान्तरे । तत्रायम् गम्भीरसेनः कनकसेनस्य वंशीय इत्येव वर्तते नत्वजयसेनस्य पुत्र इति राजस्थानीयेतिहासादौतु कनकसेनादारभ्य अजयसेनपर्यन्तम् पुरुषचतुष्टयमपि पुत्रपौत्रादिपरम्परया लिखितमस्ति । तत्र च अजयसेनस्य विजय इति नामान्तरं प्रदर्शितम् तेन च पश्चिमसौराष्ट्रे विजयपुरमिति विराटगड इति वा नाम्ना राजधानीस्थापितेति तत्रैव लिखितम् । अजयसेनस्य पुत्रः पद्मादित्य इत्यप्यभिहितम् । न तु गम्भीरसेन इति । किन्तु तत्पूर्वपुरुषाणां नामसु प्रायः सेनशब्दस्य दृष्टत्वात् अजयसेनस्य ज्येष्ठः पुत्रो गम्भीरसेनः स्यादिति प्रतीयते इति ॥

ननु काश्मीरनरेशसन्निधिम् जगामेत्युक्तम् कोवा स नरेशः तम् किं कृतवानित्यत आह ॥

७८. सेति ॥ सशब्देन काश्मीरनरेशः परामृश्यते । न च तदयुक्तम् पाणिनिना 'अर्थवद्ग्रहणेनानर्थकस्य ग्रहण'मिति नियमस्य व्रश्चेति सूत्रे भ्राजग्रहणेन राजग्रहणसम्भवेऽपि पृथक् राजग्रहणेन ज्ञापितत्वात् ।

७९. दयानयाचारविचारकर्मभिः स मूर्तिमान् धर्मइवात्र कीर्तितः ।
सुतम् यशस्वन्तमजीजनत्समं समर्थमर्थेन निरर्थपोषणे ॥
८०. अजीजनत्काममिवाभिरञ्जनम् सवानसिंहान्तकमेहराह्वयः ।
स बालकृष्णम् जनयन् सुखोच्चयम् चकार लोकस्य च दुःखमोचनम् ॥

---

अत्र काश्मीरनरेशपदस्य समासवृत्तौ निरर्थकत्वादिति शङ्क्यम् । सर्वनाम्नाऽनुसन्धिवृत्तिच्छन्नस्येति नियमात् अजहत्स्वार्थावृत्तिरिति पक्षे च बाधायोगात् । रणादित्य इति नामधेयस्योल्लेखात्स इत्यनेन तस्यैव शीघ्रोपस्थितिकत्वाच्चेति बोध्यम् । उदारकृत्यवान् । उदारकर्मा प्राशस्त्ये मतुप् । 'उदारो दातृमहतो 'रित्यमरः । रणादित्यः रणादित्यनामा च काश्मीरनरेशः । तम् गम्भीरसेनम् सत् प्रशस्तम् मान्यम् वा यत् शीलम् स्वभावः कुलम् वंशश्च ताभ्याम् सत्स्वभावत्वेन सत्कुलप्रसूतत्वेन च हेतुना । आर्यपूजितम् सज्जनैः पूजनीयमित्यर्थः । 'महाकुलकुलीनार्यसभ्यसज्जनसाधव' इत्यमरः । तथाभूतम् कृत्वा प्रतीत्य ज्ञात्वा तन्नामकुलादिकम् पृष्ट्वा तस्मात्सम्यगवबोध्य इत्यर्थः । निजम् स्वकीयम् राज्यम् राष्ट्रम् विभज्य विभागेन द्विधाकृत्वा । जम्बु इतिनाम जम्बुनाम तेन सह वर्तमाना सजम्बुनाम्नी । ऋन्नेभ्योङीप् । तस्याम् पुरि नगर्याम् जम्बुनामकनगर्यामित्यर्थः । तीर्थवारिभिः तीर्थोदकैः अभ्यसिञ्चयत् अभिषेचयामास । महाकुलप्रसूतम् दैवाद्विपन्नम् मत्वा स्वराज्यादर्धभागम् दत्वा जम्बुराज्ये तमभिषिक्तवानित्यर्थः । अयम् रणादित्योऽपि सूर्यवंशीय इति राजतरङ्गिण्यादौ तद्भिन्न इत्यपरे । गम्भीरसेनप्रभृतयो वक्ष्यमाणा राजानः पुत्रपौत्रादिपारम्पर्येण एतन्नन्दपुरीयवंशावलीपुस्तकादावेव लभ्यन्ते । नान्यत्रेति तदेवात्र प्रमाणम् । इति ॥

गम्भीरसेनस्य गुणकीर्तनमुखेन तत्पुत्रो यशस्वानित्याह ॥

७९. दयेत्यादि ॥ स गम्भीरसेनः अत्र जम्बुनगर्याम् । दया परदुःखप्रहाणेच्छानयोराजनीतिः । आचारस्तदाचरणम् शिष्टाचारो विचारः सदसद्विवेकाश्च तैः यानि कर्माणि पालनादिराजकार्याणि तैरुपलक्षितः । अतएव मूर्तिमान् धर्मइव कीर्तितः प्रख्यातस्सन् । नास्ति अर्थोधनम् येषाम् ते निरर्थानिःस्वाः दरिद्रा इति यावत् । तेषाम् पोषणे दारिद्र्यापनोदनेन पुष्टिकरणे विषये इत्यर्थः । समर्थम् शक्तम् अतएव अर्थेन द्रव्येण समम् तुल्यम् अर्थस्य दारिद्र्यापहारकत्वादिति भावः । यद्वा अर्थेन सह । विनापि तद्योगे तृतीयेति सहार्थे तृतीया यशस्वन्तम् यशस्वानिति नामानम् सुतम् पुत्रम् अजीजनत् जनयामास । अर्थस्यापि राज्ञाम् प्रजापालनार्थत्वादिति भावः ॥

यशस्वतः पुत्रो मेहर्वान् सिंहस्तत्पुत्रो बालकृष्ण इत्याह ॥

८०. अजीजनदिति ॥ स तथाभूतो यशस्वान् अभिरञ्जयति लोकानित्यभिरञ्जनः तम् । अतएव कामम् विषयभोगमिव स्थितमित्यर्थः । वानसिंहशब्दोऽन्ते यस्य यथाभूतो यो मेहर् शब्दः स एव आह्वयो नाम यस्य तम् मेहर्वान् सिंहनामानमित्यर्थः । अजीजनत् 'धर्मादर्थस्ततः काम' इति स्मरणात् अर्थः काममिव स तम् जनयामासेत्यर्थः । समेहर्वानसिंहः सुखोच्चयम् सुखसमूहमिव स्थितमित्यर्थः । अत्रापि 'कामात्सुखसमुन्नति'रिति स्मरणात् पूर्ववद्योजना । बालकृष्णम् तन्नामानम् जनयन् लोकस्य जनजातस्य दुःखमोचनम् दुःखखण्डनञ्च चकार नृपगुणयुक्तपुत्रोत्पादनेन लोकानानन्दयामासेत्यर्थः । दुःखस्य सुखप्राप्तिनाश्यत्वाच्चेति भावः ॥

८१. ततोऽवतीर्णो भुवनान्तरस्फुरन्महाप्रभावात्शुभकर्णनामवान् ।
निजानुभावादिभवत्प्रजापतिः सपद्मनाभादिव पद्मसम्भवः ॥

८२. दरिद्रचिन्तामणिरुद्बभूवतत्सदादयार्द्रो बलभद्रनामकः ।
वदान्यवर्यो व्रजलल्लउद्बभौ ततः पयोधेरिव कल्पपादपः ॥

८३. सहीरलल्लं सुतमापहीरकं महीन्द्रसन्दोहशिखाग्रसन्दितम् ।
सनन्दलल्लाभिधमात्मनन्दनं मणिङ्कुलस्य द्युमणेरविन्दत ॥

८४. धराशिरोरत्नमयत्नभासुरं सलल्लमाणिक्यसुतं समागतम् ।
विदिद्युते तत्तनुपः समुल्लसद्द्युतिप्रहर्षो नवलल्लसंज्ञितः ॥

---

बालकृष्णस्य पुत्रः शुभकर्ण इत्याह ॥

८१. तत इति ॥ भुवनान्तरे जगन्मध्ये स्फुरन् जाज्वल्यमानः महाप्रभावो लोकातिशायिप्रतापः यस्य तस्मात् । अन्यत्र भुवनान्तरे महाप्रलयकालीन जलमध्ये । 'विष्टपं भुवनं जगत् जीवन'मिति च जलपर्यायेषु अमरः । ततः बालकृष्णात् । अन्यत्र बालमुकुन्दरूपात् । शुभकर्ण इति नामवान् प्रख्यातनामा । प्राशस्त्ये मतुप् । प्रख्यातिरेवात्र प्राशस्त्यम् । स प्रसिद्धो राजा । नाभौ पद्मं यस्य स पद्मनाभः । गड्वादित्वात्सप्तम्याः परनिपातः । अजितियोगविभागात्समासान्तोऽच् । तस्मात् विष्णोः तन्नाभिपद्मादित्यर्थः । पद्मसम्भवः पद्मात् सम्भवो जन्म यस्य सः । अब्जयोनिरिव अवतीर्णः उत्पन्नः सन् । निजानुभावात् आत्मप्रभावात् प्रजापतिः प्रजानां पालकः । अन्यत्र प्रजापतिपदवाच्यः । अभवत् बभूव । यथा बालमुकुन्दरूपस्य विष्णोर्नाभिपद्मादुत्पद्य ब्रह्मा प्रजापतिरभूत् तद्वदयमपीत्युपमा ॥

शुभकर्णस्य पुत्रो बलभद्रस्तत्पुत्रो व्रजलल्ल इत्याह ॥

८२. दरिद्रेत्यादि ॥ तत् तस्मात् शुभकर्णात् दरिद्रचिन्तामणिः दरिद्राणां चिन्तामणिः चिन्तानुरूपफलप्रदमणिविशेष इव दुर्विधमनोरथप्रदत्वादिति भावः । सदा सर्वदा दयार्द्रः दयापूर्ण इत्यर्थः । तथाभूतो बलभद्रः उद्बभूव । ततः बलभद्रात् वदान्येषु दानशौण्डेषु वदान्यानां वा वर्यः मुख्यः । पुरुषोत्तमादिवत्साधुः । 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डाबहुप्रदे । मुख्यवर्यवरेण्याश्चे'त्युभयत्राप्यमरः । तथाभूतो व्रजलल्लनामापुत्रः पयोधेः कल्पपादप इव उद्बभूवेत्यर्थः ॥

व्रजलल्लस्य पुत्रो हीरलल्लस्तत्पुत्रो नन्दलल्लइत्याह ॥

८३. सेति ॥ स व्रजलल्लः मह्याइन्द्राइव महीन्द्रा राजानः । सन्दोहस्य समूहस्य शिखाग्रेषु मुकुटादावित्यर्थः । सन्दितं ग्रथितं हीरकं रत्नभूतं निखिलराजशिरोलङ्कृतमुकुटखचितहीरकरत्नस्वरूपमित्यर्थः । हीरलल्लनामानं सुतं आप प्राप्तवान् । स हीरलल्लः द्युमणेः कुलस्य सूर्यवंशस्य । मणिम् श्रेष्ठम् नन्दलल्लाभिधम् आत्मनन्दनम् अविन्दत लेभे ॥

नन्दलल्लस्य पुत्रः माणिक्यलल्लस्तत्पुत्रो नवलल्ल इत्याह ॥

८४. धरेत्यादि ॥ नन्दलल्लः अयत्नेन प्रसाधनादिना विनाप्रयत्नेन भासुरं देदीप्यमानं धरायाः पृथिव्याः शिरसि रत्नं रत्नभूतं । मस्तकमणिवत्स्थितमित्यर्थः । लल्लश्चासौ माणिक्यश्च लल्लमाणिक्यः ।

८५. ततोऽभवन्मोहनसिंहनामभृत्करार्दितारिर्नरसिंहविक्रमः ।
ततोऽपि भीमस्समजायत द्विषत्सुयोधनेऽवन्ध्यमहापराक्रमः ॥

८६. ससाम सूत्रेण भुजावलम्बिता चलेन रेजे चतुरेण पुत्रवान् ।
विनष्टविद्विट्वनितासु सत्कृपः कृपालुरेतेन बभूव तातवान् ॥

८७. अजायतास्माज्जयरामनामवान् क्षमोऽपि कामं क्षमया क्षमासमः ।
अजीजनत्सोऽजयसिंहमाहवे द्विषद्घटादुर्जयसिंहवच्च यः ॥

---

माणिक्यलल्लइत्यर्थः । तन्नामा सुतः पुत्रः । तं समागमत् प्राप्तवान् ॥ तत् तनुपः तस्य रत्नभूतस्य माणिक्यलल्लस्य शरीरात् संज्ञा सञ्जाता अस्य संज्ञितः नवलल्लइत्यनेन संज्ञितः जातसंज्ञः नवलल्लनामा इत्यर्थः । समुल्लसन् प्रोज्वलन् । द्युतिप्रकर्षः कान्त्यतिशयो यस्य स एव । तथाभूतद्युतिप्रकर्षइव तथाभूतस्सन् विदिद्युते विद्योतितवान् । शुद्धमाणिक्यात् पृथक् निस्सृतकान्तिप्रकर्षइव तस्मात्सप्रकाशितो बभूवेत्यर्थः ॥

नवलल्लपुत्रो मोहनसिंहस्तत्पुत्रो भीम इत्याह—

८५. ततइति—ततः नवलल्लात् करैः षष्ठांशरूपबलिभिरर्दिताः पीडिता अरयः शत्रुभूता राजानो येन सः । अन्यत्र कराभ्यां हस्ताभ्यां नखकृन्तनैरित्यर्थः । अर्दितो विदारितः अरिः शत्रुभूतो हिरण्यकशिपुर्येन सः । अतएव नरसिंहस्येव नरसिंहावतारिणो विष्णोरिव विक्रमः पराक्रमो यस्य सः । तथाभूतो मोहनसिंहनामभृत् मोहनसिंहइतिनाम बिभर्तीति । तथा मोहनसिंहनामा पुत्र इत्यर्थः । अभवत् उदभूत् । ततः मोहनसिंहादपि योधने युद्धे द्विषत्सु शत्रुविषये अन्यत्र द्विषन् शत्रुभूतो यः सुयोधनो दुर्योधनस्तस्मिन् । अवन्ध्यः सफलः महान् पराक्रमो यस्य स भीमः भीमसेनसाम्याद्भीमनामा पुत्रः समजायत जज्ञे । नामैकदेशग्रहणे नाममात्रस्यापि ग्रहणमिति नियमात् । भीमपदेन भीमसेनरूपार्थो बोध्यः एवमन्यत्रापि ॥

भीमस्य पुत्रश्चतुरस्तत्पुत्रः कृपालुरित्याह ॥

८६. सेति ॥ स भीमः साम्नउपायविशेषस्य 'भेदो दण्डः सामदानमित्युपायश्चतुष्टयमि 'त्यमरः । सूत्रं व्यवस्था सैव तन्तुः । 'सूत्रन्तु सूचना कारिग्रन्थे तन्तुव्यवस्थयो 'रिति हैमः । तेन भुजावलम्बिता भुजाश्रिता निजबाहुबलस्वायत्तीकृतेति यावत् । अचला पृथ्वी यस्य तेन सूत्रेणाचलोत्तोलनचातुर्यवतेत्यर्थः । अतएव चतुरेण चतुरपदवाच्येन पुत्रेण पुत्रवान् पुत्री सन् रेजे चकास्ति स्म । एतेन चतुरनाम्ना राज्ञा विनष्टाः युद्धेषु स्वेन मारिताः ये विद्विषः शत्रवः तेषां वनितासु स्त्रीषु अनाथतया दीनावस्थया वर्तमानासु इत्यर्थः । सत्कृपः सती विद्यमाना कृपा यस्य सः । अतएव कृपालुः कृपां लाति गृह्णातीति व्युत्पत्या तथा अन्वर्थनामा पुत्रः । तातवान् पितृमान् बभूव । अनन्यसाधारणपितृगुणविशिष्टतया प्रशस्तस्तातोऽस्येति प्राशस्त्ये मतुप् ॥

कृपालोः पुत्रो जयरामस्तत्पुत्रोऽजयसिंह इत्याह ॥

८७. अजायतेति ॥ अस्मात् कृपालुनाम्नः क्षितिपतेः । काममत्यन्तं क्षमः निग्रहानुग्रहसमर्थोऽपि । क्षमया क्षान्तिगुणेन क्षमासमः क्षितितुल्यः । 'क्षितिक्षान्त्योः क्षमायुक्ते क्षमं शक्ते हिते त्रिषु ' इत्यमरः । तथाभूतो जयराम नामवान् जयराम इति नाम विद्यते अस्येति सः अजायत जायतेस्म । सजयरामः

८८. ततो विपूर्वो जयसिंहआह्वया बभूव गाम्भीर्यविनिर्जितार्णवः ।
अनल्पदानाल्पितकल्पपादपं सदानसिंहं विधिनोदपादयत् ॥
८९. अनेन जज्ञे सुखरामनामवान् सुखास्पदः सर्वजनप्रियंवदः ।
सशालयुग्ग्रामपदाभिवादितं सुतं प्रपेदेऽतुलसम्पदाम्पदम् ॥
९०. ततोऽनुजातो वखतान्तसङ्गतं सुधीर्यदीयं विललाभिधानकम् ।
सुतं सरामं वखसम्मखप्रियं निखातयूपं भरतक्षितौ व्यधात् ॥

---

अजयसिंहं पुत्रं अजीजनत् । यश्च अजयसिंहः आहवे द्विषतां घटा समूहो (घटाकरिसमूह इव 'करिणां घटनाघटे'त्यमरः) तत्र दुर्जयो दुर्गतो जयो यस्य सचासौ सिंहश्च तद्वत् तेन तुल्य आसीदित्यर्थः । तेन च तस्या जयसिंहनाम सार्थकमिति भावः ॥

अजयसिंहस्यपुत्रो विजयसिंहस्तत्पुत्रो दानसिंह इत्याह ॥

८८. तत इति ॥ ततः अजयसिंहात् आह्वयानाम्ना । 'आख्याह्वे अभिधानञ्च नामधेयं च नाम' चेत्यमरः । विशब्दः पूर्वो यस्य स जयसिंहः विजयसिंहनामेत्यर्थः । बभूव उदभूत् । यः गाम्भीर्येण हर्षशोकाद्यनभिभूतस्वभावत्वरूपगुणविशेषेण विनिर्जितो न्यूनीकृतोऽर्णवः समुद्रो येन । हर्षशोकादीनां दुरवगाहत्वात् स तथाभूत आसीदित्यर्थः । स विजयसिंहः अनल्पैरन्यूनैर्दानैः वितरणैः । अल्पितोऽल्पीकृतः कल्पपादपः कल्पवृक्षो येन । तं दानसिंहं दानशौण्डत्वेन तथा नामानं पुत्रं विधिना स्वगृह्योक्तजातकर्मादिविधानेन उपपादयत् उत्पादयामास ॥

दानसिंहस्य पुत्रः सुखरामः तत्पुत्रः शालग्राम इत्याह ॥

८९. अनेनेति । अनेन दानसिंहेन सुखरामनामवान् सुखेन रमन्ते जना अस्मिन्निति व्युत्पत्या तथा तन्नामवान् जज्ञे जनितः । कर्मणि तङ् । यः सुखास्पदः सुखाश्रयः । सर्वजनसुखप्रदत्वादिति भावः । सर्वेषां जनानां प्रियंवदः प्रियभाषी । प्रियवशे वदः खश् मुम् । अतएव तथा अन्वर्थनामेत्यर्थः । स सुखरामः नास्ति तुला साम्यं यासां तासां सम्पदां सम्पत्तीनां पदं स्थानभूतं । 'पदं शब्दे च वाक्ये च व्यवसायापदेशयोः । पादच्छिह्नयोः स्थानत्राणयोरङ्कवस्तुनो'रिति विश्वः । शालशब्देन युज्यत इति शालयुक् । सत्सुद्विषेति क्विप् । तथाभूतं यत् ग्रामपदं तेन अभिवादितं वंदितं शालग्रामनामानमित्यर्थः । सुतं प्रपेदे प्राप ॥

शालग्रामस्य पुत्रो वखतविलल स्तत्पुत्रो रामवखस इत्याह ॥

९०. तत इति ॥ ततः शालग्रामात् यदीयं यत्सम्बन्धि विलल इति अभिधानमेव विललाभिधानकं । स्वार्थे ठञ् । वखतशब्दस्यान्ते प्रान्ते सङ्गतं समभिव्याहृतं आसीदित्यर्थः । सवखतविललनामेत्यर्थः । यत्तदोर्नित्यसम्बन्धात् यदीयमित्यत्र पूर्ववाक्ये यच्छब्दोपादानात् स इत्युत्तरवाक्येपि तच्छब्दनिर्बन्धः । अनुजातः अनुजज्ञे । सुधीः शोभनबुद्धिः पण्डितो वा । स वखतविललः । मखो यागः प्रियः प्रियकरो यस्य तं । यागादिकर्मनिरतमित्यर्थः । रामं रामपदवाच्यं वखसं वखसनामानं रामवखसमित्यर्थः । सुतं पुत्रं भरतपालिता क्षितिः भरतक्षितिः । शाकपार्थिवादिः । तस्यां भारतवर्षे इत्यर्थः । निखात आरोपितो यो यूपः संस्कृतदारुविशेषः । तं तद्रूपं व्यधात् भारतसार्वभौमपदे नियोजयामासेत्यर्थः ॥

९१. सराजराजं जनयां बभूव यत्पदस्य नीराजकमासराजकम् ।
सदीर्घपालं सुतमाप दुर्नृपप्रियार्पितार्घ्यप्रणयीकृताङ्घ्रिकम् ॥

९२. अजातशत्रोः प्रियसूनुरस्य यो गवावनैकः सहदेवसंज्ञकः ।
स्वतः प्रसूतं शिवरामनामकं व्रजे विराजां वृषभं व्यवर्धयत् ॥

९३. अजायतास्मान्नगराज आजिगो वृषत्सु शार्दूल इव द्विषत्सु यः ।
अभून्महाराजपदस्तदात्मजोऽभिघाति दुर्व्याघ्र निघाति दुर्गजः ।

---

रामवखसस्य पुत्रो राजराजः तस्य पुत्रो दीर्घपाल इत्याह ॥

९१. सेति ॥ स रामवखसः राजराजं तन्नामानं पुत्रं जनयांबभूव जनयामास । राज्ञां समूहः राजकम् । गोत्रो क्षोष्ट्रेत्यादिना समूहार्थे वुञ् । यत्पदस्य यस्य राजराजस्य पदद्वयस्य नीराजयतीति नीराजकम् । आरात्रिकदानेन वृजकमास बभूव । सराजराजः दुर्नृपाणां दुष्टराजानां प्रियाभिः रमणीभिः अर्पितं उपहृतं यत् अर्घ्यं पूजोपहारद्रव्यविशेषः । अर्घायेदमर्घ्यं ' पादार्घाभ्यां चे'ति यत् । 'मूल्येपूजाविधा-वर्घ्यः । अर्घ्यमर्घार्थे पाद्यं पादाय वारिणी'ति चामरः । तत्र प्रणयः स्नेहो ययोस्तौ । अतथातथासम्पद्यकृतौ अङ्घ्रीपादौ यस्य तम् । दुष्टराजानां निर्मूलनात् तेषामत्यन्तपीडनाद्वा अनाथतया स्वस्व भर्तृजीवनरक्षणेच्छया वा । तद्रमणीभिः पूजितपादयुगळमित्यर्थः । तथाभूतं दीर्घपालं दीर्घपालाख्यं पुत्रं आप प्राप्तवान् ॥

तत्पुत्रः सहदेवस्तस्य पुत्रः शिवराम इत्याह ॥

९२ अजातशत्रोरिति । जाताः शत्रवो यस्य स न भवतीति अजातशत्रुः । तस्य तथा भूतस्यास्य दीर्घपालस्य युधिष्ठिरस्येवेति च व्यज्यते तस्य तदभिधेयतायाः भारतादौ प्रसिद्धेः । प्रियसूनुः प्रियपुत्रः । अन्यत्र प्रियभ्राता सूनुः । 'पुत्रेऽनुजेऽर्के ' इति मेदिनी । गोः पृथिव्या अवने रक्षणे विषये एको मुख्यः । अन्यत्र पशुपालनदक्षः । ' स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्याक्त्रियां पुंसि गौरि 'त्यमरः । गवा-वनेत्यत्र अवङ् स्फोटायनस्येति पक्षेऽवङ् । सहदेवसंज्ञकः सहदेवनामा स एव पाण्डवविशेष इवेति व्यज्यते । यस्तथाभूतः स सहदेवः स इति अध्याहृतः । यच्छब्दोपादानात् । स्वतः स्वस्मात् । अन्यत्र स्वप्रयत्नात् । प्रसूतं उत्पन्नं शिवरामनामकं पुत्रमित्यर्थः । कञ्चित्तन्नामानं वत्समिवेति च व्यज्यते । विराजां क्षत्रियाणां 'बाहुजः क्षत्रियो विराडि 'त्यमरः । व्रजो निवहः स एव गोष्ठमिवेतिच व्यज्यते । 'गोष्ठाध्वनिवह-व्रजा ' इत्यमरः तत्र वृषभं श्रेष्ठं वृषमिवेति च व्यज्यते । तथाभूतं कृत्वा व्यवर्धयत् वर्धयामास । ' वृषभः श्रेष्ठवृषयो'रिति विश्वः ॥

शिवरामस्य पुत्रो नगराजः तत्पुत्रो महाराज इत्याह ॥

९३. अजायतेति । अस्मात् शिवरामात् नगराजः अजायत । यो नगराजः आजिगौः रणभूमिः । 'समक्ष्मांशे रणेप्याजि'रित्यमरः । सैव गौः सौरभेयीव माहेयी सौरभेयी गौरिति । ' दिङ्नेत्रघृणि भूजले लक्ष्यदृष्ट्या स्त्रियां गौ 'रिति चामरः । तत्र वृषत्सु वृषइवाचरत्सु वृषशब्दादाचारक्विबन्ताच्छतृ-प्रत्ययः । द्विषत्सु शत्रुषु मध्ये इत्यर्थः । शार्दूलो व्याघ्रइव आसीदित्यर्थः । महाराज इति पदं वाचक-शब्दो यस्य स तदात्मजः । तस्य नगराजस्य पुत्रः अभिघातिनः शत्रवः ते दुर्व्याघ्रा इव तेषां निघाती निहननशीलः सुपीतिताच्छील्ये णिनिः । तथाभूतो यो दुर्गजो मदोन्मत्तदन्ती स इव अभूत् अभिघाति

९४. द्विषत्प्रमाद्यद्विरदोद्धवद्धरेः सपद्मनाभस्य विभूतिभूरभूत् ।
ततोऽभवच्चम्पतिसिंहआह्वयन्नृसिंहबृंहच्छरभो महाहवे ॥

९५. नगौकसान्तं बलखण्डिनं द्विषां सगण्डभेरुण्डमिवोदपादयत् ।
समिन्महारण्यविपक्षघातुकस्तदुद्भवोऽभूत्सदनादिसिंहकः ॥

९६. अजोऽङ्गजोऽस्याखिलतन्त्रमन्त्रवित्समस्तमूर्त्या निजसन्ततेस्स्वयम् ।
समर्चयामास कुलाभिमानिनीं विशालभूपृष्ठमधिष्ठितां श्रियम् ॥

---

दुर्व्याघ्र इत्यादौ उपमितं व्याघ्रादिभिरिति समासः । मयूरव्यंसकादित्वे उपमाक्रमभङ्गस्स्यादिति बोध्यम् । वृषादीनामुत्तरोत्तरबलवत्त्वमुक्तम् यथा । 'नराद्वृपो दशगुणो बलेन परिकीर्तितः । वृषाद्दशगुणो व्याघ्रो व्याघ्राद्दशगुणो गजः । गजाद्दशगुणः सिंहः सिंहाच्च शरभस्तथे' त्यादि । एवमुत्तरत्रापि बोध्यम् ॥

महाराजस्य पुत्रः पद्मनाभस्तत्पुत्रश्चम्पतिसिंह इत्याह ॥

९४. द्विषदित्यादि—स राजराजः प्रमाद्यदिति प्रमाद्यन्तः ते च ते द्विरदाश्चेति प्रमाद्यद्विरदाः द्विषन्तः शत्रव एव प्रमाद्यद्विरदाः मदोन्मत्ता दन्तिनः तान् उद्धवति पीडयतीति तदुद्धवन् स चासौ हरिः सिंहइव तस्य तथाभूतस्य पद्मनाभस्य पद्मनाभनामधेयस्य विभूतिभूः उत्पत्तिस्थानं जनकइति यावत् अभूत् बभूव । ततः पद्मनाभात्, महाहवे महायुद्धे आह्वयन्तः युद्धार्थमाह्वानं कुर्वन्तः युद्धे स्पर्धमाना इति यावत् । तथाभूता ये नराः सिंहाइव नृसिंहाः तेषां बृंहन् प्रवर्धमानः शरभोऽष्टापद इव बृंहन्निति बृहि-व्याप्ताविति धातोः शतृप्रत्ययः । तथाभूतश्चम्पतिसिंहः चम्पतिसिंहनामा पुत्रः अभवत् भवति स्म ॥

तत्पुत्रो बलखण्डी तत्पुत्रः सदनसिंह इत्याह ॥

९५. नगौकसामिति । स चम्पतिसिंहः नगः पर्वत एव ओकः स्थानं येषां ते नगौकसः पर्वत-दुर्गनिवासिनः शरभा इवेति च व्यज्यते । 'नगौकाः शरभेऽपि स्या' दिति कोशात् । तेषां द्विषां शत्रूणां गण्डभेरुण्डं तन्नामानं शरभघातिपक्षिविशेषमिव बलखण्डिनं बलं शत्रुबलं खण्डितुं शीलं यस्येति व्युत्पत्त्या तथा प्रसिद्धनामानं पुत्रं उदपादयत् । तदुद्भवः उद्भवत्यस्मादित्युद्भवः । सबलखण्डी एव उद्भव उत्पत्तिकारणं यस्य तस्मादुद्भवो यस्येति वा । 'जनिरुत्पत्तिरुद्भव' इत्यमरः । सः सदनादिसिंहकः । सदनशब्द आदौ यस्य स सिंहशब्दो वाचको यस्य सः सदनसिंहनामेत्यर्थः । समित्युद्धं महारण्यमिव तस्मिन् ये विपक्षाः शत्रवः ते एव वीनां पक्षिणां पक्षाः पतत्राणीव । यद्वा विशिष्टा महान्तः पक्षाः पतत्राणि येषां ते विशिष्टपक्षिणो गण्ड-भेरुण्डाः तेषां घातुकः हिंस्रः । पक्षिघातिपुलिन्द इवेति व्यज्यते तथाभूतोऽभवत् बभूव । अस्य सदनसिं-हस्य ज्येष्ठभ्राता मदनसिंहनामा काश्मीराधिपतेर्विद्रोहेण युद्धे मृत इति साङ्गवालराधिपति मृत्युञ्जय शङ्करनिश्शङ्करचितान्ध्राक्षरमुद्रित वंशावलौ ॥

सदनसिंहस्य पुत्रोऽजय इत्याह ॥

९६. अज इति ॥ अस्य सदनसिंहस्य अङ्गाज्जायत इति अङ्गजः पुत्रः अजः तन्नामा आसीदित्यर्थः । किं भूतः सः अखिलानां तन्त्राणां आगमादिशास्त्राणां मन्त्राणां गुप्तवादानां मनूनां च वेत्तीति वित् ज्ञाता अतएव स्वयं निजसन्ततेः स्वपुत्रपौत्रादिपरम्परायाः समस्तमूर्त्या समुदायशरीरेण कुले निजवंशे अथ च

१०२. सुतोऽस्य मल्लो भगवान् प्रकल्पयन् बलिं द्विषां मांसवसासृगादिभिः ।
स [illegible] ॥

९८. दिशासु घण्टारण[illegible]
विभिन्नमूर्त्तिं परितोऽस्त्रतेजसा स देवलक्ष्मीं तनुषो व्यभासयत् ॥

कुलशास्त्रे अभिमानिनीमधिष्ठात्रीं विशालं महत् यद्भूपृष्ठं पृथिव्युपरिभागः तदेव भूप्रस्तारात्मकयन्त्रं तदधिष्ठितां तत्रोपरि स्थितामित्यर्थः । अधिशीङ्स्थासामिति कर्मत्वं । तथाभूतां श्रियं राजलक्ष्मीं । तामेव श्रीविद्यां समर्चयामास । पूजयामास । दशमहाविद्यान्तर्गत षोडशीविद्या श्रीविद्येत्युच्यते । तामित्येवत्यर्थः । वैष्णवीशक्तिपक्षे वक्ष्यमाणमांसवसासृगादिभिर्बलिकल्पनस्यानुचितत्वात् तस्य केवलसात्विकांशत्वादिति बोध्यम् ॥

अजस्य पुत्रः किशोरइति कथयन् तत्पूजाक्रमं सन्ततिक्रमेण दर्शयति ॥

९७. चतुरित्यादि ॥ तत्पुत्रः तस्याजस्य पुत्रः किशोरकः किशोरनामा । स्वार्थे कन् । चतुर्णां समुद्राणामन्तरे मध्ये लिप्तं अन्तरितमित्यर्थः । यत् चत्वरं चत्वराकारभूमण्डलं तदेव लिप्तप्राङ्गणं तस्मिन् पुनः किं भूते । तस्मिन् चत्वरे त्वरन्तो धावन्तो ये हया तैः हेतुभिरुद्धता या धूलयो रेणवः । 'रेणुर्द्वयोस्त्रियांधूलिरि'त्यमरः । ताभिर्वितानितं संजातवितानं अम्बरं यस्मिन् तस्मिन् । तथाभूते चत्वरे सिद्धः पित्रादिभिः साधितोयोऽर्थो द्रव्यं सएव सिद्धार्थः श्वेतसर्षपः तं प्रसाध्य करादानेन संगृह्य । अथ च मन्त्रसिद्धं कृत्वा अरीन् तानेव विघ्नभूतान् सुदूरमुत्सारयतिस्म उत्सारयामास । परिष्कृते हि पूजास्थाने प्रथमतो गौरसर्षपादिना विघ्नोत्सारणस्य आगमसुप्रसिद्धत्वादिति भावः । प्रकृतेऽश्वादिसमृद्धिः प्रदर्शिता ॥

किशोरस्य पुत्रो हृदयेशनन्दस्तत्पुत्रो देवलक्ष्मीरित्याह ॥

९८. दिशास्विति ॥ तस्मात् किशोराज्जायत इति तज्जः हृदयेशनन्दकः हृदयेशनन्दनामा । स्वार्थे कः । दिशासु । 'वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः । टापञ्चैव हलन्तानां निशा वाचा दिशागिरा' इत्यादिना दिक्शब्दात्पक्षे टाप् । घण्टां रणयतां गजानां ध्वनिरेव घण्टारणनप्रयोजको गजध्वनिरिति मन्त्रः तं प्रघोष्य उच्चैः शब्दयित्वा । अन्यत्र वाचयित्वा गजध्वनिमन्त्रमातः स्वाहेति घण्टामन्त्रः जगद्ध्वनिरिति क्वाचित्कः पाठः । तनुषः । निजशरीरात् । अन्यत्र शरीराद्बहिरित्यर्थः । अस्यते क्षिप्यते इत्यस्त्रं सएव अस्त्रमन्त्रः । तत्तेजसा परितः समन्तात् विभिन्नानानाविधयालक्ष्यमाणा मूर्तिः शरीरं यस्य तम् । अन्यत्र इन्द्रादिभेदभिन्नमूर्तिं देवलक्ष्मीनामानं पुत्रं । तमेव देवानामिन्द्रादिदशदिक्पालानां लक्ष्मीं कृत्वा व्यभासयत् । 'लक्ष्मीः सम्पत्तिशोभयोरि'ति मेदिनी । 'पूजादौराक्षसास्त्याज्याघण्टानादैश्च देशिकैरि'त्युक्तेः घण्टावादनपूर्वकं अस्त्रमन्त्रेण दिग्बन्धनं विधाय ध्यानयोगेन स्वात्मरक्षार्थं परितो दशदिक्पालान् दिशदिक्षु प्रकाशितान् भावयन्ति साधकाः तद्रूपेणायमपि कृतवान् इति फलितार्थः । प्रकृते हृदयेशनन्दस्य गजसमृद्धिः देवलक्ष्मीनाम्नस्तत्पुत्रस्य च शस्त्रास्त्रप्राविण्यं विभिन्नमूर्तित्वविशेषणेन शत्रुविह्वलकारकत्वञ्च प्रदर्शितमिति ॥

१०४. स्वरूपमेतेषु पुरोजमच्युत स्वरूपमुर्वीशपुरोऽर्चितं ततः ।
न्यरूपयन् मन्त्रिपुरोगमाः कुलानुरूपमासेच्य पुरोहितैर्नृपम् ॥

~५. तमन्वयात्पालयितारमात्मनः सुकोमलात्मा युगळो जघन्यजः ।
... मही निजाङ्कमारोप्य तमप्यखेलयत् ॥

१०१. अधूपयद्यस्य सपत्नपत्तनात्समुत्थधूम... ।
तदीयदेहोदितदीननाथकः प्रतापदीपं परितोऽप्यदीपयत् ॥

देवलक्ष्म्याः पुत्रः कळहसिंहस्तत्पुत्रो माधवइत्याह ॥

९९. सुत इति ॥ अस्य देवलक्ष्मीनाम्नो राज्ञः सिंहः सिंहपदवाच्यः कलहः *कलहसिंहनामेत्यर्थः ।* सुतः पुत्रः चक्रं शत्रुराष्ट्रं । चक्रं राष्ट्रेपीत्यमरः । तदेव शरीरमध्यकल्पिताधारादि षट्चक्रजातम् । तद्विभेद्यक्रमेण भेदयित्वा परस्य शत्रोः धाम मन्दिरं । तदेव परन्तेजः । 'धामशक्तौ प्रभावे च तेजोमन्दिरजन्मसु' इति विश्वः । शिरस्थाधोमुखसहस्रदळकमलान्तर्गतपरमशिवरूपमिति यावत् । तस्मिन् अखिलक्षयं सर्वनाशं । अथ च संहारक्रमेण पञ्चभूतसहितचतुर्विंशतितत्वानां लयं व्यधात् । माधवः अस्य तनुजः पापमस्यास्तीति पापः । अर्श आद्यच् । तं दुर्वृत्तजनजातमित्यर्थः । जातावेकवचनम् । तमेव वामपार्श्वे स्थितं पापं पुरुषं उज्ज्वलप्रभमित्याद्युक्तरूपं । विशोष्य दण्डाद्युपायेन शोषयित्वा । अन्यत्र शोषदाहप्लावनादिना शुद्धशरीरमुत्पाद्येत्यर्थः । वर्णानां ब्राह्मणादीनां चयः समूहएव पञ्चाशद्वर्णसमूह तं यथोचितं उचितमनतिक्रम्य स्वस्वधर्मकर्मस्वित्यर्थः । अन्यत्र यथाशास्त्रं लिपिन्यासक्रमेणेत्यर्थः । न्ययोजयत् नियोजयामास अन्यत्र विन्यस्तवानित्यर्थः ॥

माधवस्य पुत्र उदयसिंहस्तत्पुत्रो भावसिंह इत्याह ॥

१००. तदित्यादि । तस्य माधवस्य अङ्गाज्जन्म यस्य स तदङ्गजन्मा । उदयसिंह इति नामवान् प्रशस्तनामा । अदभ्राणामनल्पानां दानानां सम्बन्धीनि यान्युदकानि 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुळं बहु इत्यमरः । तैः अपरिमितवितरणवारिभिः करणैः जातैः कर्दमैः पङ्कैः क्षितिमूर्धनि भूपृष्ठोपरि तां पूर्वोक्तां श्रियं सगन्धयन् गन्धेन सहितां कुर्वन् तत्करोत्यर्थे णिजन्तात्सगन्धशब्दाच्छतृप्रत्ययः । तथाविधकर्दमाभिन्नगन्धेन द्रव्यविशेषेण पूजयन्निति व्यज्यते । कर्दमैरित्यत्र अभेदे तृतीयागमकत्वाद्गन्धशब्दस्य समासः स तथाभूतः स्वजं स्वस्माज्जायत इति स्वजः तं स्वपुत्रमित्यर्थः भावसिंहं शतं अपरिमितानीत्यर्थः । शतसहस्रादि शब्दा असंख्यत्वरूपार्थबोधकाः यथा 'सहस्रशीर्षापुरुष' इत्यादौ । पत्राणि वाहनानि यस्य तमेव शतपत्रं पद्मपुष्पं कृत्वा । 'सहस्रपत्रं कमलं शतपत्रं कुशेशयमि'ति पद्मपर्यायेष्वमरः । आर्पयत् समर्पयामास शतपत्रेणानेन तां श्रियं पूजयामासेत्यर्थः ॥

तस्य शिवदासस्तस्य च दीनानाथः पुत्र इत्याह ॥

१०१. अधूपयदिति । तस्य भावसिंहस्य सुतस्तस्सुतः शिवदासनामा तत्सुत इति विग्रहः । शाकपार्थिवादिः । स शिवदासः दग्धं स्वतेजसा भस्मीकृतं यत् सपत्नपत्तनम् वैरिपुरं 'रिपौ वैरिसपत्नारी'त्यादि 'पुंस्वी पुरीनगर्यौ वा पत्तन'मिति चामरः । तस्मात् समुत्तिष्ठन्ति समुत्थाः । समुत्पूर्वात् स्था धातोः आतश्चोपसर्गे

१०२. सुतोऽस्य मल्लो भगवान् प्रकल्पयन् बलिं द्विषां मांसवसासृगादिभिः ।
स कुम्भराजं कुलदीपमात्मजं समर्प्य नीराजनयान्वकूलयत् ॥

१०३. त्रिवर्गरूपं तनुजत्रयं वरं परं सलब्ध्वात्र सुखोपलम्भितः ।
अमुत्र रम्भापरिरम्भसम्भवप्रभूत सम्भावनया व्यजृम्भत ॥

---

इति कः । उदस्थास्तम्भ्वोरिति पूर्वसवर्णः झरोझरीति सवर्णे लोपश्च । तैश्च तैर्धूमैः अधूपयत् धूपयामास । तदीयदेहात् तस्य शिवदासस्य सम्बन्धिशरीरात् उदित उत्पन्नो यो दीननाथकः । स्वार्थे कन् दीननाथनामा शिवदासपुत्र इत्यर्थः । परितः समन्तादपि प्रताप एव दीपः । तं अदीपयत् प्रदीपयामास ॥

दीननाथस्य पुत्रो मल्लिकदेव इत्यपरनामा भगवान् तत्पुत्रः कुम्भराज इत्याह ॥

१०२. सुत इति ॥ अस्य दीननाथस्य सुतः पुत्रो भगवान् भगवानिति । पित्रा कृतनामेत्यभिप्रायः । मल्लः मल्लविद्याविशारदः तेन च लोके मल्लिकदेव इति प्रसिद्ध इति भावः । स तथाभूतः द्विषां मांसवसासृगादिभिः बलिं नैवेद्यरूपपूजोपहारं प्रकल्पयन् श्रीदेव्याः बलिदानान्तं कर्म समापयन्नित्यर्थः । आत्मजं कुम्भराजं कुलस्य सूर्यवंशस्य दीपइव प्रकाशकत्वात् कुलं दीपयतीति वा । तथा स एव कुलदीपः । शतशाखा प्रज्वलित पिष्टकावर्तिरूपः । तथा च कालिकापुराणे- 'रुक्मादिपात्रे गोधूमयवपिष्टकस्यन्दके । कुर्याद्वर्तिशतं मन्त्री यजेयद्राजेश्वरीं प्रिये । कुलदीपमिदं प्रोक्तं सर्वसिद्धिप्रदायकम्' इति । पञ्च सप्त नव वर्तिकां क्रमादित्या द्यन्यत्र । नीराजनया नीराजनविधिना । नीराजनेति णिजन्तान्नीराजतेः । ण्यासश्रन्थेति युच् ततष्टाप् । अन्वकूलयत् अनुकूलयामास स्वेष्टं साधितवानित्यर्थः ।

अयं हि मल्लिकदेवः अष्टनवत्यधिक त्रिशतोत्तरसहस्रपरिमितं (१३९८) क्रीष्टाब्दे निजजम्बुराज्यमागतेन तैमुरलङ्गबादिशा इति प्रसिद्धेन यवनचक्रवर्तिना पराभूत इति पारसीयलिपि मुद्रित फरिष्टानामक ग्रन्थे वर्तते । एवं तस्मिन्नेव समये उक्तबादिशाचक्रवर्तीपार्वतीयमार्गेण जम्बुदेशं जगामेति विच्छन्दपट्टनायककृतोत्कलभाषामुद्रितभारतेतिहासनामकग्रन्थेऽपि वर्तते । तेन आनुमानिकश्चतुः शतोत्तरसहस्रपरिमित (१४००) क्रिष्टाब्दः कुम्भराजस्य समयः १४४ क्रिष्टाब्दे कनकसेनस्य स्थितिः एतयोरन्तरे १२५६ क्रिष्टाब्दमध्ये कनकसेनमारभ्यकुम्भराजपर्यन्ता (४८) अष्टचत्वारिंशत्पुरुषालभ्यन्ते । तेन एकैकपुरुषान्तरकालः (२६) षड्विंशति वत्सरपरिमित आनुमानिक इति बोध्यम् ॥

देव्या आनुकूल्येन किं लब्धम् तदेवाह ।

१०३. त्रिवर्गेत्यादि ॥ स कुम्भराजः त्रयाणां धर्मार्थकामानां वर्गः समूहः त्रिवर्गः । 'त्रिवर्गो धर्मकामार्थै'रित्यमरः । तद्रूपं तत्स्वरूपं परं प्रधानं सकलगुणसम्पन्नमिति यावत् । तनुजत्रयं पुत्रत्रयं वरं उक्तदेवताराधनफलभूतं । 'देवाद्वृते वरः श्रेष्ठइत्या'द्यमरः । तत्कृत्वा लब्ध्वा । अत्र इहलोकसुखं उपलम्भितः अनुभावितः । प्रापित इति यावत् । 'उपलम्भस्त्वनुभवे' इत्यमरः । अमुत्र परलोके रम्भायाः स्वर्वेश्याविशेषायाः परिरम्भादालिङ्गनात् सम्भवा या प्रभूतसम्भावना तया व्यजृम्भत स्फीतो बभूवेत्यर्थः । अस्य कुम्भराजस्य कह्णुदेव इत्यपि नामान्तरं प्रसिद्धम् ॥

१०४. स्वरूपमेतेषु पुरोजमच्युत स्वरूपमुर्वीशपुरोऽर्चितं ततः ।
न्यरूपयन् मन्त्रिपुरोगमाः कुलानुरूपमासेच्य पुरोहितैर्नृपम् ॥

१०५. तमन्वयात्पालयितारमात्मनः सुकोमलात्मा युगळो जघन्यजः ।
प्रजावती भर्तृमते स्थिता मही निजाङ्कमारोप्य तमप्यखेलयत् ॥

१०६. अथानयोर्भूहृदयस्थनायक स्रजन्तमण्योरिव मध्यनायकः ।
व्यभाद्विशिष्टो ह्यतिशायिनायक स्वरूपनिर्दिष्टगुणैर्विनायकः ॥

---

तनुजत्रयं लब्धमित्युक्तं तत्र ज्येष्ठः स्वरूपदेवनामेत्याह ॥

१०४ स्वरूपमिति । ततः कुम्भराजस्य स्वर्गमनानन्तरम् मन्त्रिपुरोगमाः मन्त्रिप्रधानाः । प्रकृतय इत्यर्थः । एतेषु तनुजेषु मध्ये इत्यर्थः । निर्धारणे सप्तमी । पुरोऽग्रे जायत इति पुरोजः तं ज्येष्ठमित्यर्थः। अच्युतस्वरूपं विष्णुसमानलक्षणं अत एव उर्वीशानां पृथ्वीपतीनां पुरोऽग्रेऽर्चितं पूजितं श्रेष्ठमित्यर्थः । स्वरूपं स्वरूपदेवनामानं पुरोहितैः पुरोधोभिः कुलानुरूपं कुलस्यानुरूपं यथा तथा यथाकुलाचारमित्यर्थः । आसेच्य अभिषेच्य नृपं राजानं न्यरूपयन् निरूपयामासुः चक्रुरित्यर्थः । तत्र स्वरूपदेवनामा ज्येष्ठपुत्र एव राजा बभूवेत्यर्थः ॥

कनिष्ठ भ्रातृनाम युगळदेव इत्याह ॥

१०५. तमिति । शोभनः कोमलो मृदुश्चात्माशरीरं यस्य स सुकोमलात्मा । शैशवावस्थापन्नत्वादिति भावः । जघन्ये अवरकाले जायत इति जघन्यजः कनिष्ठः 'जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजा' इत्यमरः । युगळः युगळदेवनामा आत्मनः स्वस्य पालयितारं पालयतीति पालयिता तं निजसंरक्षणकर्तारमित्यर्थः । तं ज्येष्ठभ्रातरं स्वरूपदेवं अन्वयात् अनुजगाम । तमेवानुसृत्य तदनुमत्या तस्थावित्यर्थः । प्रजा जनाः प्रशस्ता अस्याः सन्तीति प्रजावती जनसमृद्धिशालिनी । प्राशस्त्ये मतुप् । ' प्रजा स्यात्सन्ततौ जने ' इत्यमरः । सैव भ्रातृजायेव । 'प्रजावती भ्रातृजाया' इत्यमरः । तथाभूता मही भूदेव्यपि 'भर्तुः निजपालकस्य स्वामिनः स्वरूपदेवस्ये'त्यमरः । मते अभिप्राये स्थिता विद्यमाना सती यं युगळदेवं अङ्कमुत्सङ्गमारोप्य देवरवात्सल्यादि वनिजोत्सङ्गे धृत्वेत्यर्थः । अखेलयत् क्रीडयामास ज्येष्ठः स्वरूपदेवो राजा बभूव तन्निकटेऽनुगतः कनिष्ठोयुगळदेवस्तस्थावित्यर्थः ॥

कुम्भराजस्य मध्यमपुत्रो विनायकनामेति सूचयन् तं विशिनष्टि ॥

१०६ अथेति । अथ शब्दोऽत्र निबन्धवैशिष्ट्यद्योतनार्थः गम्भीरसेनमारभ्य कुम्भराजपर्यन्ता ये पञ्चचत्वारिंशत्पूरुषा जम्बुराज्ये राज्यं कृतवन्तः ते नाममात्रप्राधान्यकथनेनैवोपदिष्टाः तेषां विशेषचरितादीनामनुपलम्भात् इतः प्रभृति वक्ष्यमाणाः वर्ण्यमानमध्यमपुत्रमारभ्य तद्वंशीया राजानः किञ्चित्सविशेषं वर्णयिष्यन्ते इति तदर्थः । अथ अथानन्तरं भूहृदयस्था भूदेवीवक्षस्स्थलवर्तिनी या नायकस्रक् त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता इत्युक्तनायकलक्षणगुणविशिष्टा ये राजानस्ते नायकाः तेषां सम्बन्धिनी । स्रक् माला तस्या अन्तौ अवयवभूतौ । 'अन्तः स्वरूपे निकटे प्रान्ते ' निश्चयनाशयोः अवयवे 'पीति हैमः । नायकोभयपार्श्वभाजौ नायकसदृशाविति भावः यौ

१०७. अपार्थिवत्वान्नृपवंशजन्मनः सुपत्न्यभावाद्वयसस्तथात्मनः ।
निरर्थतेत्येव स मानिनां वरः कदर्थितोऽभूदवमानितान्तरः ॥

१०८. मनोगतं व्याधिमयं तथाविधं यदाविनेतुं न शशाक सर्वथा ।
तदैव देवं भवभेषजं भवं निषेवितुं वारणसीमशिश्रयत् ॥

---

मणी श्रेष्ठवस्तुविशेषौ ताविव तयोस्तथाभूतयोः अनयोः स्वरूपदेवयुगळदेवयोः मध्यनायकः मध्यस्थितनायकमणिरिव । 'नायको नेतरि श्रेष्ठे हारमध्यमणाव'पीति विश्वः । तथा भूतो विनायकः विनायकदेवनामा अतिशायिनः सर्वोत्कृष्टाः नायकस्वरूपे नायकसामान्यलक्षणे स्वं नायकादि रूपं रूप्यते लक्ष्यते अनेनेति स्वरूपं लक्षणं तस्मिन् त्यागी कृतोत्याद्युक्तरूपे इत्यर्थः । निर्दिष्टा उक्ता ये गुणाः त्यागित्वादयः तैः विशिष्टः श्रेष्ठ इत्यर्थः । तेन च विशिष्टो नायको विनायक इत्यन्वर्थनामेति फलितम् । तथा भूतः सन् व्यभात् विशेषेण बभौ ॥

इदानीं तच्चरितं कथयिष्यन् तदुपक्रमते ॥

१०७. अपार्थिवत्वादिति । मानिनां रूपगुणाद्यभिमानवतां जनानां वरः श्रेष्ठः स विनायकः । आत्मनः स्वस्य अपार्थिवत्वात् । पृथिव्या ईश्वरः पार्थिवः । तस्येश्वर इत्यञ् । न पार्थिवः अपार्थिवः तस्य भावस्तत्वम् तस्मात् पार्थिवत्वाभावादित्यर्थः । नृपवंशे जन्म तस्य राजकुलोत्पन्नत्वस्येत्यर्थः । निरर्थता व्यर्थता तथा तेन प्रकारेण सुपत्न्यभावात् स्वसमानरूपगुणशालिन्या भार्याया विरहात् वयसः यौवनावस्थायाः निरर्थेत्यर्थः । इत्येव इति बुद्ध्यैव अवमानितः अनादृतः अन्तरोऽन्तरात्मा यस्य स तथाभूतस्सन् राजकुलोत्पन्नस्य मम यदि राज्यं नास्ति तर्हि । इदं जन्म निरर्थकम् । तथा अस्यां युवावस्थायां यदि मम सदृशी पत्नी नास्ति तर्हि । इदं यौवनमपि निरर्थकं इति तदुभयविरहात् शोच्यमानः सन् कदर्थितः विकृवितोऽभूत् । कथं मे तदुभयप्राप्तिः स्यादिति व्याकुलितो बभूवेत्यर्थः ॥

तदा किं कृतवान् तदाह ॥

१०८. मनोगतमिति । अयं विनायकः तथा तादृशी इष्टानवाप्तिरूपेत्यर्थः । विधा प्रकारो यस्य तम् 'विधा विधौ प्रकारेचे'त्यमरः । मनोगतं अन्तर्निष्ठं चिन्ताजन्यमित्यर्थः । व्याधिमुपतापं सर्वथा सर्वप्रकारेण । प्रकारवचने थाल् । येनकेनचिदप्युपायेनेत्यर्थः । यदा यस्मिन् काले विनेतुमपनेतुं न शशाक शक्तो नाभूत् । तदा तस्मिन् काले एव भवस्य संसारस्य भेषजं सर्वव्याधिहरमौषधस्वरूपम् । भवं भवत्यस्मात्सर्वमिति भवः । जगत्कारणम् । तं देवं विश्वेश्वरमित्यर्थः । निषेवितुं तमनुसृत्य वर्तितुं वाराणसीम् वरणा च असी च तयोः नद्योरदूरे भवा वारणसी । अदूर, भवश्चेत्यण् ङीप् पृषोदरादित्वात्साधुः । उक्तञ्च 'वारणासी च नद्यौ द्वे पुण्ये पापहरे उभे । तयोरन्तरगताया तु सैषा वाराणसी स्मृता' इति । वारणसी वाराणसीत्यादि काशी पर्याया इमे । तां वारणसीपुरीं अशिश्रयत् अश्रितवान् । श्रिञ् सेवायामिति धातोर्लुङि णिश्रिति कर्तरि च्लेश्चङिरूपम् ॥

१०९. अदभ्रमभ्रं लिहहर्म्यरम्यताभरेण कैलासगिरेर्निरासिनीम् ।
सदर्पणद्वारमुखान्तरस्फुरत्प्रकाशरूपैरलकाप्रहासिनीम् ॥

११०. वितत्य चत्वारि पदानि नोन्नतिं गतः समाकुञ्च्य च तत्र निःस्पृहः ।
परं पदं प्राप्तुमना निषेदिवान्निषेवते यामपि मूर्तिमान् वृषः ॥

१११. अथ श्रुतिग्राह्य वपुः परार्थवान् त्रिपाच्चतुः शृङ्गयुतो द्विशीर्षकः ।
त्रिधा निबद्धश्च स सप्तहस्तवान् प्रविश्य मर्त्यानपि यां नमस्यति ॥

---

वाराणसीमेव चतुर्भिः श्लोकैर्विशिनष्टि ।

१०९. अदभ्रमित्यादि । अदभ्रमनल्पं यथा तथा अभ्रं लिहन्तीति अभ्रं लिहानि । वहाभ्रे लिह इति 'खश् अरुद्विषदजन्तस्य मुमिति मुम् । अत्युच्चानीत्यर्थः । यानि हर्म्याणि धनिकगृहाणि । 'हर्म्यादि धनिनां वास' इत्यमरः । तेषां रम्यताभरेण सौन्दर्यातिशयेन कैलासगिरेः कैलासपर्वतस्य निरासिनीं विजयिनीमित्यर्थः । तथा सदर्पणानि दर्पणैः सह वर्तमानानि यानि द्वाराणां गृहमार्गाणां मुखानि अग्रभागाः तेषां अन्तरेभ्यः अन्तःप्रदेशेभ्यः स्फुरन्तो बहिः प्रसरन्तः ये प्रकाशरूपाः प्रशस्तप्रकाशाः प्रशंसायां रूपप् प्रत्ययः । तैः हासरूपैरित्यर्थः । अलकां कुबेरपुरीं प्रहसितुं शीलं यस्याः सा अलका प्रहासिनी तां तथाभूतामित्यर्थः । कुबेरनगरापेक्षया अधिकशोभाशालिनीमित्यर्थः । एतेन वाराणसीपुर्यां हर्म्याद्याश्रयत्वेन अर्थसमृद्धिमत्वं तथाविधहर्म्याद्युपभोक्तृजनाश्रयत्वेन विषयभोगरूपकामसमृद्धिमत्त्वञ्चेति पुरुषार्थद्वयं प्रदर्शितं इति ॥

इदानीं धर्मसमृद्धिं दर्शयति ॥

११० वितत्येति । वृषो धर्मः । 'वृषो धर्मे बलीवर्दे' इति मेदिनी । स एव मूर्तिमान् शरीरवान् । 'वृषो वृषभः धर्मो वृषरूप' इति स्मृतेः । किम्भूतः सः चत्वारि चतुःसङ्ख्यानि पदानि सत्यदानतपोदयारूपाणि चरणानि तानि वितत्य तत्र वाराणस्यां विस्तार्य उन्नतिं न गतः औन्नत्यं न प्राप्तवान् । तत्र साक्षात् परमार्थफलाभावादिति भावः । अत एव तत्र चतुर्ष्वपि पदेष्वित्यर्थः । निःस्पृहः नास्ति स्पृहा यस्य सः तान्यनीहमानः सन् इत्यर्थः । समाकुञ्च्य च तेषां पदानां सम्यगाकुञ्चनं कृत्वेत्यर्थः । परं नित्यनिरतिशयत्वादिना सर्वोत्कृष्टं पदं मोक्षपदं तदेव सर्वोन्नत्यसाधनभूतं चरणं तत् प्राप्तुमनाः लब्धुकामः तुं काममनसोरपीति मलोपः । तथा भूत्वा निषेदिवान् निषण्णः उपविष्टः सन्नित्यर्थः । भाषायां सदवसश्रुव इति । क्वसु प्रत्ययः । यां वाराणसीं निषेवते नितरां सेवते । तत्र विश्वेश्वरमन्दिरादौ वृषभस्य तथावस्थितत्वेन परिदृश्यमानत्वाद्धर्मएव तथा वर्तते । किं इत्यभिप्रायः । एतेन निखिल धर्माश्रयत्वमभिहितम् ॥

अथ स्वरूपान्तरेण तस्यैव वृषस्योपास्तिप्रकारं दर्शयति ।

१११. अथेति ॥ अथ पक्षान्तरे सः वृषः वर्षति कामानिति वृषो वृषभः वृषभः कामवर्षणादित्युक्तेः श्रुतिग्राह्य वपुः श्रुत्या श्रवणेन्द्रियेण ग्राह्यं वपुः शरीरं शब्दरूपं यस्य सः । श्रोत्रग्राह्यगुणः शब्दइत्युक्तेः शब्दग्रामस्वरूपइत्यर्थः वेदप्रतिपाद्यस्वरूपइत्यप्यर्थः । स किंम्भूतः तत्स्वरूपमेवोच्यते त्रिपादित्यादि त्रयः पादाः भूतभविष्यद्वर्तमानस्वरूपाः कालाः प्रथममध्यमोत्तमपुरुषाख्यो वा अस्य सन्तीति त्रिपात् सङ्ख्यासु

**११२. सुषुम्निकां यां जगदन्तवर्तिनीं चिदात्मिकां ब्रह्मविकासिनीं विदुः ।**
**दिवं परित्यज्य समर्त्यमूर्तिभिः श्रिताममर्त्यैरपि मृत्युमिप्सुभिः ॥**

---

पूर्वस्येति पादशब्दस्यान्तलोपः । चतुर्णां शृङ्गाणां समाहारश्चतुः शृङ्गं नामाख्यातोपसर्गनिपातरूपंतेन युतः संयुक्तः । द्वेशीर्षेकार्यताव्यङ्ग्यतारूपे यस्य स द्विशीर्षकः । त्रिधा निबद्धः । एकवचन द्विवचन बहुवचनैर्बद्धः । उरःकण्ठशिरोबद्धो वा । सप्त सप्तसङ्ख्यकाहस्ता विभक्तिरूपाः तेऽस्य सन्तीति सप्तहस्तवान् । तथा शब्दग्रामस्वरूपः सः परार्थवान् पराः प्रधाना येऽर्था अभिधेयरूपाः ते एव परार्थः परमपुरुषार्थरूपः तद्वान् सन् मर्त्यान् मनुष्यान् प्रविश्याविश्य मनुष्येषु प्रतिपाद्येत्यर्थः । मनुष्याधिकारत्वाच्छास्त्रस्येति न्यायात् । तथाभूतापि यां वाराणसीं नमस्यति पूजयतीत्यर्थः । नमोवरिवसित्यादिना नमः शब्दात् क्यच् । तथा च श्रुतिः 'चत्वारिशृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासोऽस्य । त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश' इति । एतद् व्याख्यानपरौ पाणिनीयमतदर्पणश्लोकौ यथा । 'नामाख्यातनिपातोपसर्गैश्शृङ्गैस्त्रिकालपात् । कार्यताव्यङ्ग्यता मूर्धाशब्दः सप्तविभक्तिदोः उरःकण्ठशिरोबद्धो वृषभः कामवर्षणात महान् देवोमहत्कायोज्ञातः स्यादिति च श्रुते' रिति । प्रकृते नमःशब्दंकरोति नमस्यतीत्यनेन रोरवीत्यर्थोलभ्यते । एवं परार्थवान् इति परशब्देन महत्वं अर्थवान् इत्यनेन सर्वेषामुपजीव्यत्वं च लभ्यत इति महोदेवइति पदसमानार्थतया श्रुतेः समानार्थता बोध्या । यद्वा स वृषो यज्ञरूपः । स किम्भूतः । त्रयः पादाः ऋग्यजुस्सामरूपा यस्य सः । चत्वारि शृङ्गाणि ब्रह्मोद्गातृहोत्रध्वर्युलक्षणानि तद्युतः । द्वे शीर्षे हविर्धानप्रवर्ग्याख्ये यस्य सः । शिरएवास्य हविर्धानम् । ग्रीवा घै यज्ञस्योपसदः शिरःप्रवर्ग्य इति श्रुतेः । सप्तहस्ता सप्तहोतारः सप्तच्छन्दांसि वा । तद्वान् त्रिधा त्रिप्रकारैः प्रातः सवनमाध्यंदिनसघनतृतीयसवनैर्निबद्धः । विस्तरस्तु वेदभाष्येषु द्रष्टव्यः । तथाविधो यज्ञरूपो वृषोपि परार्थवान् परप्रयोजनकः सन् यां नमस्यतीत्यर्थः । अन्यत्सर्वम् पूर्ववत् । एतदर्थद्वयेन विद्यासमृद्धिः यज्ञादिकर्मसमृद्धिश्च प्रदर्शिता ॥

मोक्षसमृद्धिं दर्शयति ।

११२. सुषुम्निकामिति ॥ यां वाराणसीं जगदन्तवर्तिनीं जगतः मन्ते प्रळयेऽपि विद्यमानां । उक्तञ्चकाशीखण्डे 'मुने प्रलयकालेऽपि न तत्क्षेत्रं कदाचन । विमुक्तं न शिवाभ्यां यदविमुक्तं ततो विदुः । न यदा भूमिवलयं न यदापांसमुद्भवः । तदा विहर्तुमीशेन क्षेत्रमेतद्विनिर्मितमि' ति । चिदेव आत्मास्वरूपं यस्याः सा चिदात्मिका । तां चिच्छक्तिरूपां अतएव ब्रह्मविकासिनीम् ब्रह्मसाक्षात्कारजननीं ज्ञानप्रकाशकत्वादिति भावः । सुषुम्निकां सुषुम्नानाडी स्वरूपाम् । जगद्रूपशरीरस्येत्यर्थः । आहुः वदन्ति प्रेक्षावन्त इति शेषः । पुनः किम्भूतां मृत्युं मरणं आप्तुमिच्छुभिरिप्सुभिः । काशीमरणान्मुक्तिरिति श्रुतेः । अत एव दिवं स्वर्गं परित्यज्य त्यक्त्वा समर्त्यमूर्तिभिः मर्त्यानां मूर्तिभिः सहितैः मानुषशरीरधारिभिरित्यर्थः । अमरैः देवैः अपि श्रितां सेवितां स्वर्गस्यापि क्षयित्वान्मुक्ति कामा देवा अपि या मुपासत इत्यर्थः । अस्याः सुषुम्नादिस्वरूपत्व मुक्तं काशीमुक्तिविवेके श्रीमद्भगवत्पूज्यपादपरमहंसपरिव्राजकाचार्य श्रीसुरेश्वरसूरिपादैः यथा इयं हि ब्रह्मप्रकाशरूपिणी चिन्मयी ज्ञानप्रकाशकतया अस्या स्तुत्यत्वं वेदतन्त्रादिज्ञानप्रतिपादकशास्त्रे सुषुम्नाया एव ब्रह्मनाडीत्वं प्रतिपादितं । तथा सर्वप्रकाशकतया चिच्छक्ते रेव स्वरूपं काशीत्वं विज्ञाप्यते । यथा ययेदं काश्यते सर्वं सा काशीपरिकीर्त्यत इति । यदि चिच्छक्तिरेव काश्याः स्वरूपार्थप्रापिका । तर्हि तस्या वाराणसीत्याख्यायां कागतिरिति संशयश्चेत्तनोऽवधार्यताम् । तदिदं मन्ये देवानां देवयजनं सर्वेषां

११३. परिक्रमन् तां बलिपुष्पसंकुल प्रवाहपातोत्थितवातसेवितम् ।
समन्ततस्तापससन्ततं ततो मरुत्तटिन्यास्तटमध्युवास सः ॥

११४. स तत्र नित्यं प्रयतो महेश्वरं निषेव्य वाङ्मानसकायकर्मभिः ।
समीरशेषानशनव्रतं दधत्क्रमेण शीर्णस्तृणसन्निभोऽभवत् ॥

---

भूतानां ब्रह्मसदनं अत्र हि जन्तोः प्राणैरुत्क्रममाणस्य रुद्रस्तारकं ब्रह्म व्याचष्टे । येनासावमृती भूत्वा मोक्षी भवति । तस्मादविमुक्तमेव निषेवेत । अविमुक्तं नविमुञ्चेदेवमेवैतद्याज्ञवल्क्यः । अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यम् । य एषोऽनन्तोऽव्यक्त आत्मा कथमहमिवं विजानीयामिति सोऽविमुक्त उपास्य इति । सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति वरणायामस्यां च प्रतिष्ठित इति का च वरणा भवति काचासिर्भवति । सर्वानिन्द्रियकृतान् दोषान् वारयति तेन वरणा भवति । सर्वाणींन्द्रियकृतानि पापान्यस्यति तेनासिर्भवति कतममस्याः स्थानं भवतीति । भ्रुवो घ्राणस्योभयसन्धिः मर्त्यांल्लोकस्य परस्य च सन्धिर्भवति । एवमेवैनं सन्धिं सन्ध्यां ब्रह्मविदउपासते । कोऽसौ रुद्र इति रुद्रस्तापत्रयात्मकं संसारदुःखं तद्धेतुर्वातत्सर्वं द्रावयति शरणागतानामुपासकानामिति । अत एव चिच्छक्तिमयः सर्वज्ञः परमेश्वरएव रुद्रः । तथा हि 'एको रुद्रो न द्वितीयायावतस्थुः इत्यादि ॥

११३ परिक्रमन्निति ॥ स विनायकः तां तथाभूतां वाराणसीम् पुरीम् परिक्रमन् तत्क्षेत्रपरिक्रमोक्त-विधिना तत्परिक्रमणं कुर्वन् ततः परिक्रमणानन्तरं बल्यर्थं पूजोपहारार्थं यानि पुष्पाणि तैः सङ्कुले व्याप्ते प्रवाहे गङ्गाया निर्झरे यः पातः पतनम् तस्मादुत्थितेन वातेन सेवितम् । वीजितमित्यर्थः । अत्र वातस्य पुष्पसम्बन्धात्सौरभ्यं प्रवाहसम्बन्धात् शैत्यं पतनोत्थितत्वान्मान्द्यं च लब्धम् । तद्विशिष्टस्यैव तस्य कवि-भिर्वर्णितत्वादिति । समन्ततः सर्वतः तापससन्ततम् तपस्विजनव्याप्तम् मरुताम् देवानाम् तटिनी नदी 'मरुत्तटिनी गङ्गा देवनदी स्वर्नदी सुरदीर्घिका' इत्यमरः । तस्याः तटं तीरं अध्युवास गङ्गातटे निवासं चकारेत्यर्थः । 'उपान्वध्याङ्वस' इत्याधारस्य कर्मत्वम् ॥

११४ स इति ॥ स विनायकः तत्र वाराणस्यां नित्यं प्रयतः पूतस्सन् । 'पवित्रः प्रयतः पूत' इत्यमरः । वाक्च मानसञ्च कायश्च वाङ्मानसकायाः तेषां कर्माणि वाक्कर्ममानसकर्मकायकर्मचेति त्रिविधकर्माणीत्यर्थः । द्वन्द्वान्ते श्रूयमाणपदस्य प्रत्येकं योगः । तत्र वाक्कर्म स्तुतिपाठादि मानसकर्म जपध्यानादि कायकर्म पूजा-प्रणामादि तैः महेश्वरं श्रीकाशीविश्वनाथं निषेव्य आराध्य शिष्यतइतिशेषः समीरएव शेषोऽवशिष्टो यस्मिन् तथाभूतं यत् । अनशनं निराहाररूपं व्रतं तत् । दधत् दधानः वायुमात्रभक्ष्यइत्यर्थः । उपासनाकाण्डे 'निराहारो नोपवसेदि'ति स्मृत्या वायुभक्षणस्यैव सर्वप्राधान्यादिति भावः । तथा च स्मृतिः 'नक्तं हविष्या-न्नमनोदनं वा फलं तिलाः क्षीरमथाम्बुवाज्यं । यत्पञ्चगव्यं यद्विवापि वायुः प्रशस्तमत्रोत्तरमुत्तरं स्यादि'ति । 'जलाशीमारुताहारो निराहारस्तथैवचे'ति । रामायणाद्यौ 'निराहारस्य पृथक्त्वेनोल्लेखाद्वायो-र्भक्ष्यत्वं कल्पित'मिति बोध्यम् । तथाभूतः अतएव क्रमेण दिनकालक्रमेण शीर्णः क्षीणशरीरः सन् तृणसन्निभः तृणतुल्यः अभवत् दुर्बलो बभूवेत्यर्थः ॥

९

११५. अथैकविंश्यां निशि कण्ठगासुना दशेन्द्रियेभ्यो विरतान्तरात्मना ।
दधद्वपुः स्वप्नवशात्तपस्विनो व्यलोकि लोकार्तिहरो हरोऽमुना ॥

११६. जगाद तं दर्शनमात्रनिर्गदं करेण संस्पृश्य ससस्मिताननः ।
समुत्सहस्वाशु विधित्सिते ध्रुवं मनोरथः सेत्स्यति वत्स तेऽचिरात् ॥

११७. प्रगाढदुर्गैरचलैरनुत्तरो निगूढमार्गो विषयोऽस्त्यनुत्तरः ।
प्ररूढसौराष्ट्रपदोऽप्यनुत्तरः स्वलीढगोदासरितोननूत्तरः ॥

ततः किमभूत्तदाह ॥

११५. अथेति ॥ अथ कियद्दिनानन्तरम् एकविंशति दिवसगमनानन्तरमित्यर्थः । एकविंशतेः पूरणी एकविंशी तस्य पूरणे डट् तिविंशतेर्डितीति टिलोपः । टिड्ढाणञीतिङीप् तस्यां निशि एकविंशदिवसावसान रात्रावित्यर्थः । कण्ठगासुना कण्ठगाः कण्ठगताः उत्क्रमसाणा इत्यर्थः । असवः प्राणा यस्य तेन आसन्नमृत्युनेत्यर्थः । अतएव दशेन्द्रियेभ्यः श्रोत्रादीनि पञ्चज्ञानेन्द्रियाणि वागादिपञ्चकर्मेन्द्रियाणि मिलित्वा दशेन्द्रियाणि तेभ्यः ज्ञानकर्मसाधनेभ्यः बाह्येन्द्रियेभ्य इत्यर्थः । विरतो निवृत्तव्यापारोऽन्तरात्मा मनोरूपमन्तरिन्द्रियं यस्य तेन तथाभूतेन अमुना विनायकदेवेन स्वप्नवशात् स्वप्नायत्ततया स्वप्नावस्थायामित्यर्थः । लोकार्तिहरः लोकानामार्तिः पीडा तां हरति आराधनानुसारेणापनयतीति तथा अत एव हरः तथान्वर्थनामा भगवान् विश्वेश्वर इत्यर्थः । तपस्विनः तापसस्य वपुः शरीरम् दधत् गृह्णानः सन् व्यलोकि विलोक्यते स्म । कर्मणि लुङ् । स स्वप्ने तपस्विरूपिणं शिवं ददर्शेत्यर्थः ॥

११६. जगादेति ॥ स्मितेन सहितं सस्मितं । ईषद्धासयुक्तं आननं वक्त्रम् यस्य स तथोक्तः । स तपस्विरूपो हरः दर्शनमात्रनिर्गदम् दर्शनमात्रेण ऐश्वरशरीरावलोकनेनैव निर्गतो गदो रोगो यस्य तं । निराहारादिजन्यक्लमशून्यमित्यर्थः । तं विनायकं करेण संस्पृश्य निजहस्त संवाहनेनाश्वास्येत्यर्थः । जगाद कथयामास कथनप्रकारमेवाह सार्धश्लोकत्रयेण समुत्सहस्वेत्यादिना–हे वत्स हे पुत्रक वत्सेति सम्बोधनम् । तस्मिन् प्रेमातिशयख्यापनार्थम् 'पुत्रादौ तर्णके वर्षे वत्सो वत्सन्तुवक्षसी'ति रुद्रः । विधित्सिते विधातुमिष्टे वस्तुनि आशु शीघ्रम् समुत्सहस्व सम्यक् उत्साहयुक्तो भवते तव मनोरथः अभिलाषः अचिरात् अविलम्बादेव सेत्स्यति सिद्धो भविष्यति । ध्रुवं निश्चितमेवैतदित्यर्थः ॥

तव प्राप्यो देशोऽस्तीति तं विशिष्य दर्शयति ॥

११७. प्रगाढेत्यादि ॥ अचलैः पर्वतैः कृत्वा प्रगाढानि प्रकर्षेण दृढानि यानि दुर्गाणि नगरप्रावरणानि तै र्हेतुभिः प्रगाढदुर्गभूतै रचलैर्वा अनुत्तरः उत्तरितुं शक्यो न भवतीति तथा दुर्लङ्घनीय इत्यर्थः । निगूढा आच्छन्नतया दुर्ज्ञेया मार्गा अन्तःप्रवेशपन्थानो यस्य स तथाभूतः अतएव अनुत्तरः नास्ति उत्तरं साम्यतया प्रतिवाक्यं यस्य सः अनुपम इत्यर्थः नास्ति उत्तर उत्तमो यस्मादिति वाऽनुत्तरः । 'उत्तरः प्रतिवाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवदि'ति विश्वः । तथाभूतः विषयो देशः अस्ति । 'देशविषयौतूपवर्तन' मित्यमरः । स किं नामा क्वास्तीत्यत आह । प्ररूढेति । प्रकर्षेण रूढं प्रसिद्धं सौराष्ट्रपदं सौराष्ट्र इति वाचकशब्दो यस्य सः । उत्तर उदीच्यो न भवतीत्यनुत्तरः । इतो दक्षिणइत्यर्थः । तथापि स्वेन लीढा आस्वादिता अभिव्याप्तेति यावत् । या गोदा सरित् गोदानाम्नी सरित् गोदावरीनदीत्यर्थः । ततः उत्तरः ननु इत्यवधारणे । उदीच्यएव गोदावरीनद्या उत्तरेतीरे दक्षिणसौराष्ट्रनामादेशोऽस्तीत्यर्थः ॥

११८. तदीश्वरो नन्दपुरेऽस्त्यनीश्वरः शिलाकुलस्याग्रतमोऽपि सोऽन्तिमः ।
अपुत्रिकः केवलमेकपुत्रिको जराप्रयुक्तोऽपि यथैव निर्जरः ॥

११९. वरान्मदीयात्परिणीय तत्सुतां वरां वयोरूपगुणैरशङ्कितः ।
परैरजय्यो विजयस्व राज्यभाक् चिराय तत्रौरसपुत्रपौत्रकैः ॥

११८ तदीश्वरइति ॥ तस्य दक्षिणसौराष्ट्रदेशस्य ईश्वरस्तदीश्वरः तदधिपतिः । अनीश्वरः नास्ति ईश्वरो यस्य सः । तदुपरि अन्यः कोऽपि स्वामी नास्तीत्यर्थः । तथाभूतः सन् नन्दपुरे नन्दपुरनाम्नि नगरे सौराष्ट्रदेशइत्यर्थः । अस्तिसराजाशिलाकुलस्य शिलावंशस्य तद्वंशीयानामित्यर्थः । अग्रतमः सर्वप्रधानोऽपि अन्तिमः अन्तेभवः । अन्तशब्दात् डिमच् प्रत्ययः । तद्वंशस्य चरमो राजेत्यर्थः । अन्तिमत्वे हेतुमाह अपुत्रिक इति नास्तिपुत्रो यस्य सोऽपुत्रः ततः स्वार्थे ठक् अपुत्रिकत्वादन्तिम इत्यर्थः तस्मादेव तद्वंशो लुप्यत इति भावः । पुत्रिकापि नास्तीत्याशङ्क्याह । केवलमिति केवलशब्दोऽन्यस्ववंशीयव्यवच्छेदार्थः केवलं एका पुत्रिका यस्य सः एकपुत्रिकः । एवमपि पुनः पुत्रोत्पत्तिस्स्यादित्याशङ्क्याह । जराप्रयुक्तइति । जरया वार्धक्येन प्रयुक्तः जरावस्थां प्राप्त इत्यर्थः । अपिस्समुच्चये । तेन च तस्य पुत्रान्तरोत्पत्तिसम्भावनापि नास्तीत्यर्थः । ननु ब्राह्मणद्रव्यापहारादिना हि वंशोच्छेदः स्मर्यते । तेन च पापकर्मा स्यादित्यतआह । यथेत्यादि यथा निर्जरो देवस्तथैव सः । सत्कर्मधर्मादिना देवतासमान इत्यर्थः । तथा च ईश्वरेच्छयैव तस्मात्तद्वंशविश्रान्तिः । न तु तद्दुष्कर्मजन्येति भावः । अग्रतमोऽप्यन्तिम इति जराप्रयुक्तोऽपि निर्जर इति च विरोधः । तत्परिहारस्तूक्तरूपः किन्नामायं राजा कस्य वा पुत्रइत्यादि किमपि न ज्ञायते । प्राचीनवंशावलीपुस्तकेष्वपि तदनुल्लेखात् । किन्तु शिलावंशीयो राजेत्येव वर्तते । कोऽयं शिलावंशस्तत्रापि मानं न लभामहे । किंत्वयं भारतमध्यभूमौ प्रसिद्धानां षड्त्रिंशद्राजवंशानामन्यतमः शिलारवंश इति लोके यः प्रसिद्धः स स्यात् स तु चन्द्रवंशान्तर्गत इति राजस्थानीयेतिहासादौ न तु वा शिलादित्यनाम्नः सूर्यवंशीयस्य राज्ञः सम्बन्धी स्यात् पूर्वोक्तवलभीनगरी यदा यवनैर्ध्वस्ता तदा शिलादित्यप्रभृतय इतस्ततो जग्मुरिति तत्रैवेतिहासादौ तेन तदुभयवंशयोर्मध्ये संशयः । अस्यराज्ञो नम गङ्गराजइति तत्पिता वत्सराज इति सिंहाचल श्रीकूर्मक्षेत्रस्थितप्रासादभित्तिलिखितशिलालेखो वर्तते इति केचिद्वदन्ति । तत्रै-वायं सप्तविंशाधिकचतुश्शतोत्तरसहस्रपरिमिते (१४२७) क्रिस्ताब्दे नन्दपुरराजसिंहासनारूढ आसीदिति लिखितमस्तीति च वदन्ति ॥

११९. वरादिति ॥ ममायं मदीयः । त्यदादीनिचेति वृद्धसंज्ञायां वृद्धाच्छ इति छ प्रत्ययः । अस्मात् मदीयात् वरात् 'वृतात् देवाद्वृतेवरः श्रेष्ठे' इत्याद्यमरः । मद्दत्त वराद्धेतोः अशंकितः शङ्कारहितः । 'यस्या न विद्यते भ्राता न च विज्ञायते पिता । नोपयच्छेत तां कन्यां पुत्रिका धर्मशङ्कये' त्यादिना अभ्रातृकायाः परिणयनिषेधेऽपि मद्वरेण हेतुना तव तादृशपरिणयोऽधर्माय नैव भविष्यति । अतस्त्वशङ्कानकर्तव्या इति भावः । वयोरूपगुणैः यौवनसौन्दर्यकुलशीलादिभिः वरां श्रेष्ठां त्वत्समानामित्यर्थः । तत्सुतां तस्य नन्द-पुराधिपते र्दुहितरम् परिणीय विवाह्य तत्र सौराष्ट्रदेशे राज्यभाक् राज्यं सप्ताङ्गमष्टाङ्गं वा पूर्वोक्तरूपं तद्भज-तीति तथा लब्धराज्यइत्यर्थः । परैः शत्रुभिः अजय्यो जेतुं शक्यो न भवति 'यः क्षय्यजय्यौशक्यार्थे' तथाभूतः सन् । औरसैः 'स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् तमौरसम् । विजानीयात्पुत्रम् प्रथम-

१२०. इति प्रसिक्तो वचनामृतैरसौ निशावसाने शयनात्समुत्थितः ।
ससम्भ्रमं सान्द्रतनुस्त्वगङ्कुरैर्मृगेन्द्रलीलामवलोकने दधौ ॥

१२१. अथेश्वरादेशविनिर्णयात्क्षणं प्रतीक्ष्य कन्यां तुलयाप्तुमुन्मनाः ।
जगाम भास्वानिव कर्कमारुहन् स सिंहविक्रम्यपि दक्षिणां दिशम् ॥

१२२. स्वदक्षिणा सङ्गितयानुकूल्यतश्चलत्सु वाय्वश्वभुजेषु तत्रिषु ।
सवाह वाहेत्यपि पामरोदितं सुशब्दयामास तदा प्रसन्नधीः ॥

---

कल्पित'मिति मनूक्तरूपैः । न तु दत्त क्रीतादिभिरित्यर्थः । पुत्रपौत्रादिपरम्परयेत्यर्थः । चिराय चिरकाल-पर्यन्तं विजयस्व सर्वोत्कर्षेण वर्तस्वेत्यर्थः ॥

१२०. इतीति ॥ निशाया अवसानम् प्रान्तभागस्तस्मिन् रात्रिचतुर्थयामे इत्यर्थः । तत्र स्वप्नस्य शीघ्रफलदत्वात् । उक्तञ्च 'स्वप्नस्तु प्रथमे यामे संवत्सरफलप्रदः । द्वितीये चाष्टभिर्मासैः स्त्रिभिर्मासैस्तृतीयके । चतुर्थे वार्धमासेन स्वप्नस्यात्तत्फलप्रदः । दशाहे फलदः स्वप्नोऽप्यरुणोदयदर्शने । प्रातः स्वप्नस्तु फलदस्तत्क्षणं यदिबोधितः" इति । कियत्कालविलम्बेन फललाभाच्चतुर्थयामे इति व्याख्यातम् इति उक्तरूपैः वचनामृतैः स्वप्नावस्थायां भगवतो वचो रूपपीयूषैः प्रसिक्तः आप्यायित इत्यर्थः । असौ विनायकदेवः शयनात् शय्यायाः समुत्थितः जाग्रदवस्थां प्राप्य शय्या या मुपविष्ट इत्यर्थः । यद्वा शयनादिति ल्यब्लोपे पञ्चमी । शयनं निद्रां परित्यज्येत्यर्थः । 'शयनं सुरते निद्राशय्ययोश्च नपुंसकमि'ति मेदिनी । समुत्थितः उत्थायोपविष्ट इत्यर्थः । त्वगङ्कुरैः त्वचोऽङ्कुरा इव त्वगङ्कुरा रोमाञ्चाः तैः पुलकैः सान्द्रतनुः सान्द्रा निरन्तरा तनुः शरीरं यस्य सः । हर्षादिति भावः । तथाभूतः सन् सम्भ्रमेण सह वर्तमानं यथा तथा ससम्भ्रमम् सत्वरं अवलोकने दर्शनक्रियायां मृगेन्द्रलीलाम् सिंहस्य विलासं दधौ । सिंहावलोकनन्यायेन उभयपार्श्वं विलोकयामासेत्यर्थः । स्वप्नभङ्गदशायां स्वप्नस्यैवायं वृत्तान्त इति निश्चयाभावादिति भावः ॥

१२१ अथेति ॥ अथ किञ्चित्क्षणानन्तरम् सविनायकः ईश्वरादेशविनिर्णयात् ईश्वरस्यादेशः । स्वप्नादेशः तस्य विनिर्णयात् ईश्वरस्यैवायं स्वप्नादेश इति विविच्य निर्णयं कृत्वेत्यर्थ' । ल्यब्लोपे पञ्चमी । अन्यत्र ईश्वराज्ञानुसारात् क्षणं यात्रामुहूर्तं प्रतीक्ष्य अवलोक्य । अन्यत्र दक्षिणायनसमयं ज्ञात्वा । तुलया निजतौल्येन स्वसमानामित्यर्थः । कन्यां राजकन्यां आप्तुं विवाहेन प्राप्तुं उन्मना उत्सुकितमनाः । अन्यत्र तुलाराशि सह गामिनीं कन्या राशिं गन्तुं त्वरितः । सिंहविक्रमी सिंहस्येव विक्रमः पराक्रमोऽस्यास्तीति तथापि पादगत्या गन्तुं समर्थोऽपीत्यर्थः । कर्कः श्वेताश्वः तं आरुहन् अधितिष्ठन् दूरदेशयात्रासौकर्यार्थमिति भावः । अन्यत्र कर्कराशि माश्रयन् सिंहराशि संक्रम्यपि अत एव भास्वान् सूर्यइव दक्षिणां दिशं जगाम दक्षिणदेशयात्रां चकारेत्यर्थः । सूर्योपि तथा दक्षिणगोळमालम्बते तद्वदयमपीति पूर्णोपमा ॥

अथ गमनसमये तेन शुभशकुनानि दृष्टानीत्याह ॥

१२२ स्वेति ॥ तदा यात्रासमये वाय्वश्वभुजेषु वायुश्चाश्वश्च भुजश्च वाय्वश्वभुजाः तेषु । सत्यर्थे सप्तमी । स्वदक्षिणा सङ्गितया स्वस्य दक्षिणम् दक्षिणपार्श्वम् तत्सङ्गितया तत्संसर्गितया हेतुना । अत्र स्वपदम् अश्वपक्षे अश्वपरम् अन्यत्र यात्रिपरम् बोध्यम् । आनुकूल्यतः अनुकूलताम् प्राप्य इत्यर्थः । ल्यवर्थे पञ्चम्याम्

१२३. नदीनदग्रामवनानि सञ्चरन्निरीक्ष्य शोभामकुतोभयो रयात् ।
प्रविश्य तत्तन्नगरीषु सश्रियास्स सार्वभौमोयमिति प्रतीयते ॥

१२४. पयोधरस्वर्णघटोद्वहा मुहुः कटाक्षनीलोत्पलवर्षणोज्झटाः ।
पताकयन्त्यो जघनाञ्चलान् पथि प्रधावमानास्तमुपासत स्त्रियः ॥

तसिल् । चलत्सु सञ्चरत्सु सत्सु । प्रसन्नधी प्रसन्नाधीर्बुद्धिर्यस्य सः । हर्षोत्फुल्लमतिः सविनायकः वाहवा-हेति अनुकरणपदमेतत् । अनुकार्यञ्च देशविशेष भाषारूपम् प्रशंसार्थकम् वाहवाह इत्याकारकम् यद्वचः तदित्यर्थः । पामरोदितम् प्राकृतजनभाषितमपि सुशब्दयामास । साधुशब्दं चकार । तत्करोत्यर्थे सुशब्दा-ण्णिच् । अयमाशयः अश्वमारुह्य यायिनः तस्य रूपलावण्यतेजोविभवादीन् अश्वगतिवैचित्र्यञ्चनिरीक्ष्य-द्रष्टृभिर्देशीयभाषया वाहवाहेति प्रशंसायाम् प्रयुज्यमानस्यापि वाहशब्दस्य 'वाहो भुजेपुमान् मानभेदेऽश्व वृषवायुषु' इत्यादि कोशात् वाय्वश्वभुजानामपि वाचकतया यात्रायां शुभसूचकानाम् तेषाम् नामसङ्कीर्तन-रूपेण चरितार्थत्वेन संस्कृतत्वात् सुशब्दत्वम् परिकल्पितमिति भावः । तेषाम् शुभसूचकतास्वरूपमुक्तम् । दीपिकायाम् यात्राप्रकरणे । 'अनुकूलगतो प्रदक्षिणे सुरभो देहसुखेऽनिलेगतिः । तिमिराणि गभस्तिमा-निव प्रसभम् हन्ति बलानि विद्विषाम् । आरोहति क्षितिपतौ विनयोपपन्नो यात्रानुगोऽन्यतुरगम् प्रति हेषमाणः । वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वम् योऽश्वः सयातुरचिरात्प्रतनोति लक्ष्मीम्" । दक्षिणपार्श्व-स्पन्दनमिष्टम् हृदयम् विहाय पृष्ठञ्चेति यात्रिणः । प्रसन्नधी रित्यत्रापि शुभाशुभानि सर्वाणि निमित्तानि स्यु रेकतः । एकतश्च मनोयातुस्तद्विशुद्धिर्जयावहेत्यादिना शुभावहत्वमुन्नेयम् ॥

१२३. नदीति ॥ नास्तिकुतोपि भयम् यस्य सः अकुतोभयः । मयूरव्यंसकादिः । भयरहितः सः विनायकः नदीनगग्रामवनानि । अत्राधारस्य कर्मत्वम् अकर्मकधातुभियोगे देशः कालइत्यादि वार्तिकोक्तेः । मार्गपतित तत्प्रधानदेशेष्वित्यर्थः । रयात् वेगात् नन्दपुरगमनेच्छयेति भावः । सञ्चरन् विचरन् शोभाम् नद्यादीनामित्यर्थः । निरीक्ष्यतत्तन्नगरीषु तासु तासु मार्गपतितासु पुरीषु प्रविश्य श्रिया निजतेजः सम्पत्या अयम् सार्वभौमः चक्रवर्ती इत्येव प्रतीयतेस्म लोकैरिति शेषः । स्म योगे भूतार्थेकर्मणि लट् यम् दृष्ट्वा लोकाः सार्वभौमोयमिति मेनिरे इत्यर्थः ॥

१२४. पयोधरेति ॥ पथि तद्गमनमार्गे स्त्रियस्तत्पुराङ्गनाः पयोधराः स्तनाएव स्वर्णघटाः क्षीरपूरित-सुवर्णकलशाः । 'स्त्रीस्तनाब्दौ पयोधरौ ' पयः क्षीरम् पयोम्बुचेत्यु' भयत्राप्यमरः । तेषामुद्वहा धारिण्यः । मुहुः पुनः पुनः कटाक्षाणि अपाङ्गदर्शनान्येव नीलोत्पलानि तेषां वर्षणे क्षेपणे उज्झटाः तत्पराः जघना-ञ्चलान् जघनलग्नवस्त्रप्रान्तभागान् पताकयन्त्यः पताकाः कुर्वन्त्यः तत्करोत्यर्थे णिच् । पताकावदुड्डीयमान जघनांशुका इत्यर्थः । तथाभूताः प्रधावमानाः धावुगता वित्यस्माच्छानच् । तद्रूपलावण्यमोहिता स्तमनु-धावन्त्य इत्यर्थः । तम् विनायकम् उपासत सेवन्तेस्म । मङ्गलार्थम् हि यात्रिणः पूर्णकुम्भादयः प्रदर्श्यन्ते इति भावः ॥

१२५. पुरे पुरे रूपगुणाभिमानिनः प्रशस्तिभाजः खलु शस्त्रशास्त्रयोः ।
अमुष्य सम्भाषणदर्शनोज्झितस्वपौरुषास्ते पुरुषा उदासत ॥

१२६. स इत्थमध्वस्थिततीर्थदैवतावगाहनालोकनपूतविग्रहः ।
कियद्दिनैर्नन्दपुरं निशामुखे प्रविश्य सर्वेश्वरमन्दिरेवसत् ॥

१२७. अथात्र संवेशनिदेशमैश्वरं यथाप तस्यां निशि तन्नरेश्वरः ।
तथा प्रभाते तमवेक्ष्य सादरं कथाप्रसङ्गाद्बुबुधे कुलादिकम् ॥

---

१२५. पुर इति ॥ पुरे पुरे प्रत्येकनगरीषु "नित्यवीप्सयोरिति द्विर्भावः । रूपम् सौन्दर्यम् गुणाः शौर्यादयश्च तै रभिमानिनः । शस्त्रम् शस्त्रविद्या खड्गसाधनादि शास्त्रम् धर्मार्थज्ञानसाधनम् स्मृतिनीतिवेदान्तादि शास्त्रम् तयोः प्रशस्तिभाजः प्रवीणाः । ते प्रसिद्धाः पुरुषाः जनाः अमुष्य विनायकस्य सम्भाषणदर्शनाभ्याम् उज्झितम् परित्यक्तम् पौरुषम् पुरुषस्य भावः कर्म वा यैस्ते तथाभूताः सन्तः । उदासत उदासीना बभूवुः । ते पुरुषाः तद्दर्शनेन तद्रूपलावण्य निर्जिताः कथोपकथनेन तेन निर्युक्तिकाः शस्त्रास्त्रविद्यालाघवेन च हीनाः तत्त द्विषयकाभिमानम् परित्यज्य तत्तत्कथाप्रसङ्गेषु औदासिन्यमेव स्वस्य प्रकटीचक्रुरिति समुदितोर्थः ॥

१२६. स इति ॥ सविनायकः इत्थम् अनेन प्रकारेण नानादेशपर्यटनं कृत्वेत्यर्थः । अध्वनि मार्गे स्थितानि यानि तीर्थानि पुण्यजलावताराः 'तीर्थम् शास्त्राध्वरक्षेत्रोपायनारीरजस्सु च । अवतारर्षिजुष्टाम्बु यात्रोपाध्यायमन्त्रिषु' इति मेदिनी । दैवतानि तत्तत्क्षेत्रस्थितदेवतामूर्तयः तेषामवगाहनालोकनैः तीर्थेष्ववगाहनैर्दैवतानाम् दर्शनैरित्यर्थः । पूतः पवित्रीकृतः विग्रहो देहो यस्य सः । तथा भूतः सन् कियद्दिनैः कतिपयदिवसैः आगत्येत्यर्थः । निशामुखे निशायाः प्रारम्भे सायम् समये इत्यर्थः । नन्दपुरम् ईश्वरनिर्दिष्टम् नन्दपुरनाम्नीम् नगरीमित्यर्थः । प्रविश्य तत्र प्रवेशम् कृत्वा सर्वेश्वरमन्दिरे सर्वेश्वरस्य मन्दिरम् सर्वेश्वरमन्दिरम् तस्मिन् नन्दपुरदुर्गस्थितस्य सर्वेश्वरनाम्नः शिवस्यालये तत्र स्थितनिवासगृहे इत्यर्थः । अवसत् निवासम् कृतवान् यतिसन्न्यासिब्रह्मचारिवैष्णवादिवैदेशिकजननिवासार्थम् तन्मन्दिरनिकटे यानिमठगृहाणि निर्मितान्यासन् तत्रैकस्मिन् गृहे समुत्तीर्य तत्र सायन्तनी क्रियाम् समाप्य यत्किञ्चित्फलमूलाद्याहारम् कल्पयित्वा तत्रैवशयानः सुखेन रात्रिम् निनायेति फलितार्थः ॥

ततः किमभूत्तदाह ॥

१२७. अथेति ॥ अथ अनन्तरम् अत्र नन्दपुरे तन्नरेश्वरः तस्य नन्दपुरस्य नृपतिः तस्याम् निशियथा तव कन्यानुरूपो वरः समागत्य मन्मन्दिरे तिष्ठति तस्मै स्वदुहितरम् स राज्यभारम् समर्प्य स्वाभीष्टम् साधयेत्यादि रूपेणेत्यर्थः । ऐश्वरम् ईश्वरसम्बन्धि सन्देशनिदेशम् स्वप्नादेशम् । 'स्वप्नः संवेश' इत्यपीत्यमरः । आपप्राप । तथा तेन रूपेण प्रभाते प्रातःकाले तम् विनायकम् अवेक्ष्य दृष्ट्वासादरम् आदरेण सह यथा तथा । कथाप्रसङ्गात् कथोपकथनादिना पृष्ट्वेत्यर्थः । कुलादिकम् सूर्यवंशोत्पन्न शुद्ध क्षत्रियवंशादिकम् । आदिपदेन नामगोत्रदेशादिकञ्च बुबुधे ज्ञातवान् ॥

१२८. प्रधानमुख्यै[illegible] प्रधार्य तमस्याखिलराजलक्षणम् ।
सदैवविद्भिर्विगणय्य सत्क्षणं व्यधत्त वैवाहिकमङ्गलक्षणम् ॥

१२९. अमुं भरद्वाजसगोत्रमर्चयन्वरं ततोऽसौ विधिनाऽग्निसाक्षिकम् ।
प्रदाय लीलावतिकामलङ्कृतां सुतामुष्मैकृतकृत्यतामगात् ॥

१३०. प्रशस्य रत्नाकरचारुविग्रहां धराधरोत्तुङ्गपयोधरां धराम् ।
रसप्रभूताञ्च चिरात्स्वरक्षितां सदक्षिणायार्पयतिस्म दक्षिणाम् ॥

---

तदनन्तरम् किङ्कृतवान् तदाह ॥

१२८. प्रधानेत्यादि ॥ सनन्दपुराधिपतिः प्रधानानि महामात्राः । 'महामात्राः प्रधानानी' त्यमरः । मन्त्रिणोधीसचिवाश्च । 'मन्त्री धीसचिवोऽमात्य' इत्यमरः । ते एव प्रमुखानि प्रधानानि । 'प्रधानम् प्रमुखम् क्लीबे' इत्यमरः । मुख्या इति यावत् येषाम् तैः । सामुद्रिकादि लक्षणविद्भिः कृतम् ईक्षणम् दर्शनम् यस्य तत् तथाभूतम् । अस्य विनायकस्य अखिलराजलक्षणम् सर्वम् राजचिह्नम् प्रधार्यप्राधान्येनावधार्य । दैवविदो दैवज्ञाः तैः सत्क्षणम् शुभमुहूर्तम् विगणय्य विशेषेण गणयित्वा वैवाहिकमङ्गलक्षणम् विवाहसम्बन्धि मङ्गलोत्सवम् व्यधत्त कारयामास । 'क्षण उद्धर्षोमहउद्धव उत्सव' इत्यमरः ॥

१२९. अमुमिति ॥ ततः वैवाहिकसामग्रीसङ्ग्रहानन्तरम् असौ नन्दपुराधिपतिः भरद्वाजसगोत्रम् । अत्र गोत्रप्रदर्शनम् वरगोत्राद्युच्चारणपूर्वकम् कन्याप्रदानमपीति सूचनाय । उक्तञ्च । 'वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम् । नाम सङ्कीर्तयेद्विद्वान् कन्यायाश्चैवमेवहि । मधुपर्कार्चितायैनाम् तस्मै दद्यात्सदक्षिणा' मिति । वरम् जामातृत्वेनोपकल्पितम् । 'वरो जामातरि वृताववि'त्यादि मेदिनी । अमुम् विनायकनामानम् अर्चयन् मधुपर्कादिना पूजयन् अमुष्मै वराय अलङ्कृताम् नानालङ्कारभूषिताम् लीलावतिकाम् लीलावतीनाम्नीम् । स्वार्थे ठक् । सुताम् निजपुत्रीम् । विधिना स्वगृह्योक्तविधानेन । अग्निः साक्षी साक्षाद्द्रष्टृत्वेनोपकल्पितो यस्मिन् दानकर्मणि । साक्षाद्द्रष्टरि संज्ञायामितीन् । तद्यथा तथा प्रदाय कन्यायाः प्रदानम् कृत्वेत्यर्थः । कृतम् कृत्यम् निजेप्सितरूपम् कार्यम् येनस' कृतकृत्यः तस्य भावस्तत्ताताम् अगात् प्राप कृतार्थो बभूवेत्यर्थः । भरद्वाजसगोत्रमित्यत्र भरद्वाजः सगोत्रो यस्येति विग्रहः । सगोत्रपदेन गोत्रपदेनवा वंशपरम्परा प्रसिद्धम् आदिपुरुषम् ब्राह्मणरूपमेवोच्यते । स्मृत्यन्तरे सकाररहितपाठश्रवणात् सकारेण तु कर्तव्यम् गोत्रम् सर्वत्र धीमतेति मत्स्याद्युक्तेः सकारसहितत्वस्यापि श्रवणात् गोत्रसगोत्रयोः पर्यायत्वाच्छाखाभेदेन व्यवस्थेति शूलपाणिः तेनपराशरसगोत्रस्य वृद्धस्य तु महात्मन इति । अमुकामुकगोत्रैतत्तुभ्यमन्नम् स्वधानम इत्यादिश्च प्रयोगः । भरद्वाजगोत्रस्य भरद्वाजाङ्गिरस बार्हस्पत्याः प्रवराः । क्षत्रियादेरतिदिष्ट गोत्रप्रवरत्वेन पुरोहित गोत्रप्रवरावेवेति सर्वसिद्धान्तः । अतएव पूर्वपुरुषेषु येन राज्ञा यः कुलपुरोहितत्वेन आचार्यत्वेन वा गृहीतः । तद्गोत्रेणैव तेषाम् व्यवहारः । तथा च अग्निपुराणे, 'क्षत्रिय वैश्य शूद्राणाम् गोत्रञ्च प्रवरादिकम् । तथावर्णे सङ्कराणाम् येषाम् विप्राश्च याजकाः' इत्यादि । तेन एकस्मिन् सूर्यवंशरूपे महावृक्षे शाखाभेदेषु वसिष्ठ, काश्यप, गौतम, भरद्वाजादि गोत्रभेददर्शनम् निर्विवादमेवेति बोध्यम् ॥ तस्मै दद्यात्सदक्षिणामित्युक्तेः कन्यादानाङ्ग दक्षिणादानम् प्रदर्शयति ॥

१३०. प्रशस्येति ॥ स राजा दक्षिणाय दाक्षिण्यगुणयुक्ताय । 'दक्षिणे सरलोदारा' वित्यमरः । अनेकमहिलासुसमरागो दक्षिणः कथित इत्युक्त दक्षिणनायकगुणयुक्तश्च । तस्मै वराय चिरात् चिरकालात्

१३१. प्रतिग्रहानन्तरवामदक्षिण प्रवेष्ट संश्लिष्ट वधूवसुन्धरः ।
स नूतनसारोहण षोडशद्वयाति तुङ्गसिंहासनगोऽभ्यसिच्यत ॥

१३२. तदा महाराष्ट्र कळिङ्गकोत्कलस्थिताः कियत् स्थायुक गोपभूमिपाः ।
स चामरच्छत्रकराः पुरस्कृत प्रदेशनास्तं परितोऽप्युपासत ॥

---

स्वरक्षिताम् स्वेन पालिताम् प्रशस्यैः प्रकृष्टशस्यैः व्रीह्यादिभिः रत्नानामाकरैः खनिभिश्च 'खनिःस्त्रियामाकरः' स्यादित्यमरः । चारुविग्रहाम् मनोहरशरीराम् । अन्यत्रप्रशस्यैः प्रशंसनीयैः रत्नानामाकरैः समूहैः 'आकरो निकरे खना' विति मेदिनी । चारुविग्रहाम् । धराधरेषु पर्वतेषु उत्तुङ्गा उच्छ्रिताः पयोधरा मेघायस्याम् ताम् । मेघसञ्चरणोचित महोन्नतपर्वतबहुळामित्यर्थः । अन्यत्र धराधराविव उत्तुङ्गौ समुन्नतौ पयोधरौ स्तनौ यस्यास्ताम् । 'स्त्रीस्तनाब्दौ पयोधरा' वित्यमरः । रसप्रभूताम् जलप्रचुराम् । 'रसोगन्धरसे जले' इति मेदिनी । अन्यत्र शृङ्गाररसभावाश्रयाम् नानागुणयुक्ताम् अनुरागिणीम् वा । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवेरस' इत्यमरः । तथाभूताम् धराम् पृथिवीम् दक्षिणाम् दक्षिणात्वेन परिकल्पितामित्यर्थः । दाक्षिण्यगुणयुक्ताम् काञ्चिन्नायिकामिवेति व्यज्यते । अर्पयतिस्म प्रददौ दुहितरम् दत्वा सर्वमपि राज्यम् समर्पितवानित्यर्थः ॥

१३१. प्रतिग्रहेति ॥ प्रतिग्रहानन्तरम् कन्या भुवोरादानादनन्तरम् वामदक्षिणयोः प्रवेष्टयोर्भुजयोः । 'भुज बाहू प्रवेष्टो दो'रित्यमरः । संश्लिष्टे आलिङ्गिते वधूर्जाया वसुन्धरा पृथिवी च ते यस्य सः । 'वधूर्जाया सुषास्त्री' चेत्यमरः । वामभुजालिङ्गितभार्यः दक्षिणभुजावलम्बितभूभार इत्यर्थः । तथाभूतः सविनायकः नूत्नम् नूतनत्वेन निर्मापितम् पूर्वपुरुषाणामपि विक्रमार्कसिंहासनाधिरूढत्वात् तत्सङ्केतप्रदर्शनायेति भावः । आरुह्यतेऽनेनेत्यारोहणम् सोपानम् । 'आरोहणम् स्यात्सोपान' मित्यमरः । षोडशानाम् द्वयम् षोडशद्वयम् आरोहणानां षोडशद्वयेन सहवर्तमानम् अतितुङ्गम् अत्युन्नतञ्च यत् सिंहासनम् नृपासनम् तत्र गच्छतीति तथा अन्येष्वपि दृश्यत इति डः । अभिनवद्वात्रिंशत्पावत्संयुक्त महासिंहासनोपविष्ट इत्यर्थः । तथा भूतः सन् अभ्यसिच्यत नृपोपचारेणाभिषिक्तो बभूवेत्यर्थः ॥

१३२. तदेति ॥ तदा तस्याभिषेकसमये कळिङ्ग एव कळिङ्गकः । स्वार्थेकन् । महाराष्ट्रश्च कळिङ्गश्चोत्कलश्च तेषु देशविशेषेषु स्थिताः स्थितिं कृतवन्तः कियन्तः नतु समस्ता इत्यर्थः । ये स्थायुकाः एकैकग्रामाधिकारिणः गोपाः बहुग्रामाधिकारिणः । 'स्थायुकोधिकृतो ग्रामे गोपोग्रामेषु भूरिषु' इत्यमरः । भूमिपाः सामन्ता राजानश्च ते । चामरैश्च छत्रैश्च सहिताः कराः पाणयो येषां ते तथोक्ताः । धृतच्छत्रचामरा इत्यर्थः । पुरस्कृतानि अग्रतः कृतानि प्रदेशनानि उपढौकनानि प्रभोस्तस्य दर्शनाय देयद्रव्याणीति यावत् प्राभृतन्तु प्रदेशनम् । 'उपायन मुपग्राह्य मुपहार स्तथोपदे' त्यमरः । यैः ते तथाभूताः सन्तः तं सिंहासनारूढं विनायक देवं परितः सर्वतोऽपि उपासत परिचेरुः अपिशब्दात् । स्वसौराष्ट्रदेशीया अपि यथा नियोगम् परिचेरुरित्यर्थः । अयं हि त्रिचत्वारिंशदधिक चतुःशतोत्तरसहस्रपरिमिते (1443) क्रिष्टाब्दे राजसिंहासन मारूढवान् । तदानीम् तस्य राज्यसीमा पूर्वेश्रिकाकोळनागराखाना पर्यन्तं दक्षिणे कम्बामेण्टु प्रभृति सर्वसिद्धि रायिवारपर्यन्तम् । पश्चिमे बस्तरदेशस्थितभास्करनदीपर्यन्तं । उत्तरेकलाहण्डी देशमभिव्याप्य बुडालिङ्गेति प्रसिद्धस्थानपर्यन्तो एवं वृहन् खेमुण्डी निकटस्थ स्फुटित पाषाण (फटाचञ्चडा) पर्यन्तं । पारलाखिमुण्डि समीपस्थ गुमागढाग्रामपर्यन्तम् । सामन्तराजानश्च माड्गुल । गुलगोण्ड । ङिप्पि । गुण्डुरु प्रभृति देशाधिपतयः । एतैः सेवित स्तावत्परिमिते भूमण्डले राज्यं कृतवानिति ज्ञेयम् ॥

**१३३. समेत्य सर्वोऽपि परम्परागतक्रियाभिरस्य प्रकृतिप्रजाव्रजः ।
तिलार्धमाज्ञामपि नात्यवर्ततार्णवस्य वेलामिव वीचिसञ्चयः ॥**

**१३४. ततः प्रभृत्यस्य भुवं प्रशासतो गतेऽथकाले श्वशुरे सुरालयम् ।
परस्परद्वेषितयाऽति दुर्धियो वनाश्रया देशमुपाद्रवन् प्रजाः ॥**

**१३५. स तच्छमोपायमुपायविद्वृदा विचार्य तत्पश्चिमदिङ्मुखो व्रजन् ।
द्विराहताष्टादशदुर्गमध्यगे मितानुगो रायपुरे प्रविष्टवान् ॥**

---

१३३ समेत्येति ॥ सर्वोऽपि निखिलोऽपि प्रकृतीनां मन्त्रिपुरोहितादीनां प्रजानां जनानाञ्च व्रजः समूहः परम्परया पितृपितामहाद्यनुक्रमेण आगताभिः प्राप्ताभिः क्रियाभिः स्वस्वनियोगकर्मभिः । अन्यत्र धारावाहिकागमनक्रियाभिरित्यर्थः । तदुपलक्षितः सन्नित्यर्थः । इत्थं भूतलक्षणे तृतीया । समेत्य तं विनायकदेवं सङ्गत्य अस्य विनायकदेवस्य आज्ञां शासनं तिलार्धमपि तिलार्धप्रमाणमपि स्वल्पमपीत्यर्थः । अर्णवस्य समुद्रस्य वीचिसञ्चयः वेलां समुद्रकूलमिव नात्यवर्तत नव्यतीयाय । सर्वोऽपि तदाज्ञावशवर्ती बभूवेत्यर्थः ॥

१३४ तत इति ॥ ततः प्रभृति भुवं प्रशासतः पालयतः तस्य विनायकदेवस्य श्वशुरे श्वशुरभूते पूर्वस्मिन् राज्ञिकाले समयान्तरे सुरालयं स्वर्गं गते प्राप्तेसति पञ्चत्वं प्राप्तेसति । अतिदुर्धियः । अतिशयेन दुष्टाधीर्येषां ते अतिदुर्धियः वनाश्रयाः अरण्यवासिनः प्रजाः परस्परद्वेषितया अन्योऽन्यविद्रोहितया देशं नन्दपुरराष्ट्रं उपाद्रवन् पीडयामासुः राजशासन मुलङ्घ्य स्वेच्छया दुराचारिणो बभूवु रित्यर्थः । अत्रायमभिसन्धिः - अस्मिन् नन्दपुरप्रदेशे पर्वतारण्यादिनिवासिनो म्लेच्छजातिविशेषा बहवः सन्ति । तेषां सोराकोन्ध इत्यादि देशिकनामानि प्रसिद्धानि । तेतु शूराः युद्धविद्याकुशलाः तत्सम्बन्धीया मन्त्रयन्त्रौषधादिप्रवीणाश्च तथाविधा अपि मूर्खतायदवधिरेव यैः निशितपरशुकुठारादीनां धारापरीक्षार्थम् निरपराधिनो जना अपिच्छिद्यन्ते । तथाभूतास्ते दुर्धियः । तस्मिन् प्राचीने नन्दपुराधिपतौ मृते सति नान्योस्माकमन्यः प्रभुरिति मन्यमानाः विनायकदेवं राजानं नैवमेनिरे । बुद्धिकुशलोऽयं विनायकः सामाद्युपायेन कियतीः प्रजाः स्वायत्तीकृतवान् । कियत्यश्चास्वाधीनाः तैः साकं विरुध्य देशोपद्रवं दधुरिति बोध्यम् ॥

ततः किं कृतवानित्याह ॥

१३५ सेति ॥ उपायान् सामदानभेददण्डरूपान् वेत्ति जानातीति उपायवित् । 'सामदानभेददण्डा वित्युपायचतुष्टय' मित्यमरः । स विनायकदेवः तच्छमोपायम् तेषां दुर्वृत्तप्रजानां तत्कृतराष्ट्रविप्लवस्य वा शमाय शान्तये उपायं बन्धनताडनादिरूप दण्डोपायं न तु वधरूपं निजप्रजानामनेकेषां वधस्यानुचितत्वात् । दण्डस्तावत्त्रिविधः । उक्तञ्च 'वधोऽर्थग्रहणं चैव परिक्लेशस्तथैव च । इति दण्डविधानज्ञैर्दण्डोऽपि त्रिविधः स्मृतः' इति । हृदा स्वबुध्या न तु विचारेऽन्यसहायापेक्ष इति भावः । विचार्यविचारेण स्थिरीकृत्य चतुर्थोपायसाध्या इमे इति निश्चित्येत्यर्थः । मितानुगः मिताः परिमिताः आवश्यकीयकार्योचिताः पञ्चषा इत्यर्थः । अनुगा अनुचरायस्य स तथाभूतः । दुष्टप्रजाभ्यो मार्गेऽनिष्टशङ्कया बहुजनराहित्येन तदज्ञातः सन्नित्यर्थः । तस्मान्नन्दपुरात् पश्चिमायादिक् । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्य इति पश्चिमशब्दस्य पुंवद्भावः । तन्मुखः तदभिमुखो भूत्वेत्यर्थः । व्रजन् यात्रां कुर्वन् द्विराहता द्विगुणिता अष्टादशसंख्या येषां

१३६. समृद्धमस्मिन् लवर्णि वणिग्वरं प्रणीतसौहार्दमुपेत्य सादरम् ।
नृपोपचारेण च तेन पूजितः प्रजोपजापं निखिलं व्यजिज्ञपत् ॥

१३७. तदीयसाहायकलब्धधुर्यगोऽयुतैतदर्धायुधभृत्पदातिकः ।
पुनस्ततोऽसौ प्रतिगम्य दुर्जनान् प्रदम्य राज्यं स्ववशं समानयत् ॥

१३८. चिराय विज्ञापयितुं कृतज्ञतां निजां तथा वाणिजिकोपकारिताम् ।
विधीयतेऽद्यावधि शासनेषु यत्प्रतिश्रुतं राजनदाम मुद्रणम् ॥

तानि षट्त्रिंशत्परिमितानीत्यर्थः । दुर्गाणि राजधान्यो यस्मिन् देशे स तथोक्तः । छत्तिशगड इति प्रसिद्धो देश इत्यर्थः । तन्मध्यगे तदन्तर्वर्तिनि रायपुरे रायपुरनाम्नि नगरे प्रविष्टवान् प्रविवेश । कियद्भिर्दिनैरिति शेषः ॥

तत्र किं कृतवान् तदाह ॥

१३६. समृद्धमिति ॥ अस्मिन् रायपुरे तन्निवासिनमित्यर्थः । समृद्धम् अधिकर्द्धिशालिनम् लवणिम् तन्नामानम् वणिग्वरम् वणिक्श्रेष्ठम् । किम्भूतम् प्रणीतसौहार्दम् सुहृदः सुहृदयस्य वा भावः । सौहार्दं सख्यं । हायनान्तयुवादिभ्योऽणिति अण् । हृदयस्य हृदादेशः । हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेति उभयपदवृद्धिः । प्रणीतं प्रापितं सौहार्दं येन तं तथा भूतं चिरमित्रमित्यर्थः । उपेत्य सङ्गत्य तेन च वणिजा नृपोपचारेण राजपूजनोचित सम्भारेण सादरम् आदरेण सह यथा तथा पूजितः सम्मानितः सन् निखिलं समग्रं प्रजानां निजदेशीयानामित्यर्थः । 'उपजापं 'भेदं भेदोपजापा' वित्यमरः । स्वाज्ञामुलङ्घ्य यथा च दुर्वृत्तानां तेषां राष्ट्रविध्वंसक परस्परभेदो जानन्स्तत्सर्वमित्यर्थः । व्यजिज्ञपत् विज्ञापयामास ॥

ततः किमभूत्तदाह ॥

१३७. तदीयेत्यादि ॥ असौ विनायकः सहायस्य भावः । साहायकं यो पधाद्गुरूपोत्तमा द्वुञ् इत्यत्र सहायाद्वेति वार्तिकोक्त्या पक्षिको वुञ् तदीयेन तस्य वणिजः सम्बन्धिना साहायकेन साहाय्येन हेतुना लब्धाः प्राप्ताः धुर्याणां धुर्वहानां गवां अयुतं अयुतपरिमितधुरंधरवलीवर्दा इत्यर्थः । धुर्वहे 'धुर्यधौरेय धुरीणाश्च धुरन्धरा' इत्यमरः । तदर्धमयुतार्धम् पञ्चसहस्रपरिमिता इत्यर्थः । आयुधभृतः शस्त्रास्त्रधारिणः पदातयः सेनाङ्गविशेषाश्च येन सः तथाभूतः । वणिक् सकाशात् शस्त्रास्त्रखाद्यद्रव्यादिभार वाहकानां गवामयुतं पञ्चसहस्रपरिमितान् शस्त्रधारिणः सैनिकांश्च लब्ध्वा तत्सहितः सन्नित्यर्थः । ततः रायपुरात् पुनः प्रतिगम्य स्वदेशं प्रत्यागत्य प्रतिगम्येति बाल्यपीति व्यवस्थितविभाषया मान्तानिटामनुनासिकलोपस्य वैकल्पिकत्वा दनुनासिक लोपाभावपक्षे रूपं । दुर्जनान् पूर्वोक्तान् प्रदम्य प्रकर्षेण दण्डयित्वा । 'साहसंतु दमोदण्ड' इत्यमरः । राज्यं निजराष्ट्रं स्ववशं स्वायत्ततां समानयत् प्रापयामास ॥

१३८. चिरायेति ॥ चिराय चिरकालपर्यन्तम् । निजां स्वकीयां कृतज्ञतां कृतं उपकृतं जानातीति कृतज्ञः । तस्यभावस्तत्ता तां उपकारितां विज्ञापयितुं बोधयितुं लोकानितिशेषः । वणिगेव वाणिजिकः । स्वार्थे ठन् । तस्य उपकारकारितां । तथा तद्वत् चिराय विज्ञापयितुमित्यर्थः । शासनेषु ताम्रपत्रादिषुलेखेषु । 'शासनं राजदत्तोर्व्यां लेखाज्ञा शास्त्रशास्तिष्वि'ति मेदिनी । यत् प्रतिश्रुतं येन विनायकदेवेन राज्ञा अङ्गी-

१३९. सनन्दपुर्यां प्रभवन्नरिन्दमो विपक्षपक्षानभिभूय भूयसः ।
अनिन्दिताचारचयं च शिक्षयन्ननन्द यन्नन्दनवन्निजाः प्रजाः ॥
१४०. सुकीर्ति दिव्योभयमूर्तिं भृद्भुवं दिवञ्च भोक्तुं चिरमर्चिताशयः ।
नवं स सर्वेश्वरमन्दिरं दृढं प्रघृष्टमृष्टैरुपलैरकल्पयत् ॥
१४१. स शङ्करस्यैव कृपाम्बुसेचनैः प्रवर्धमानो रविवंशजाङ्कुरः ।
अशङ्कितः क्वापि समुन्नतिं वहन् बभौ क्षितौ शङ्करवंशशब्दितः ॥

---

कृतं । 'अङ्गीकाराभ्युपगमप्रति श्रव समाधय' इत्यमरः । राजनदाममुद्रणं राज्ञ इदं राजनं । तस्येदमित्यण् । अनिति अणि टि लोपाभावः । राजसम्बन्धि यत् दाममुद्रणं । 'पशुबन्धनरज्जुविशेषो दामेत्युच्यते । नपुंसि-दामसन्दान' मित्यमरः । तदाकारं मुद्रणं मुद्रा तत् । अद्यावधि इदानींतनकालपर्यन्तमपि । विधीयते लेखपत्रेषु स्वाक्षरदानस्थलेऽङ्क्यते इत्यर्थः । वणिक्प्रदत्त साहाय्येन स्वराज्यं साधयता राज्ञा तत्पारितोषि-कदित्सया पृष्टोवणिक् स्वकथां चिराय संस्थापयितुं द्वयं याचितवान् । तत्र लेखपत्रेराज्ञः स्वाक्षरदानस्थले गोबन्धनरज्जुचिह्नदानमेकं द्वितीयं भाद्रपदामावास्यायां तद्वंशीयैः सर्वैरपि मृन्मयगवां पूजाकर्तव्याचेति चिरन्तनीयं वार्ता । ततश्च अद्यावधि तदुभयं यथास्वीकृतं परिपाल्यतेऽत्रराजप्रजादिभिरिति बोध्यम् ॥

१३९. स इति ॥ अरीन् दाम्यति उपशमयतीति अरिन्दमः । दमिः शमनार्था तेन सकर्मक इत्युक्तम् । अन्तर्भावितण्यर्थोवा ततः खश् मुम् । शत्रुशमनकर्ता स विनायकदेवः नन्दपुर्यां प्रभवन् प्रभुर्भवन् । भूयसः बहून् विपक्षपक्षान् शत्रुपक्षान् । पक्षः सहायः । अभिभूय पराभूय निजाः प्रजाः स्वकीयान् जनान् अनिन्दिताये आचाराः साध्वाचरणानि तेषां चयं समुदायं च शिक्षयन् उपदिशन् नन्दनेन निजपुत्रेण तुल्यं नन्दनवत् स्वपुत्रानि वेत्यर्थः । आनन्दयत् आनन्दयामास ॥

१४०. सुकीर्ति दिव्येत्यादि ॥ अर्चितः पूजितः प्रशंसनीय इति यावत् । आशयोऽभिप्रायो यस्य स तथा भूतः स विनायकदेवः शोभना सुदृढा वा या कीर्तिः प्रासादरूपा सा च दिव्या तज्जन्यपुण्यवशात् । दिवि भवा च तदुभयरूपा या मूर्तिः शरीरं तद्बिभर्तीति तथाभूतः सन् भुवं पृथिवीं दिवं स्वर्गं च कीर्ति शरीरेण पृथिवीं दिव्यशरीरेण स्वर्गमित्यर्थः । चिरं चिरकालपर्यन्तं भोक्तुं अनुभोगेन तत्र विलसितुमित्यर्थः । नवं नवीनं भूतपूर्वमपि जीर्णमुद्धृत्येत्यर्थः सर्वेश्वरमन्दिरं सर्वेश्वरनाम्नः । शिवस्य प्रासादं प्रघृष्टमृष्टैः प्रकर्षेण घृष्टाश्च ते मृष्टाश्च तैः स्निग्धसमीकृतैरित्यर्थः । उपलैः प्रस्तरैः 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृष' दित्यमरः । दृढं चिरस्थायी यथा स्यात्तथा अकल्पयत् ॥ कल्पयामास शिल्पिभिः कारयामासेत्यर्थः ॥

महत्यस्मिन् सूर्यवंशे शाखाभूतस्य शङ्करवंशस्य मूलभूतोऽयमेवेतिबोधयन् तस्य स्ववंशे शङ्करनाम-योजनप्रयोजनं दर्शयति ॥

१४१. सेति ॥ रवेः सूर्यस्य वंशएव वंशो वृक्षविशेषः तस्याङ्कुरः करीरस्वरूपः स विनायकदेवः शङ्करस्य श्रीकाशीविश्वेश्वरस्यैव कृपाम्बुसेचनैः । कृपादयाएवाम्बूनि जलानितेषां सेचनैः सेकैः प्रवर्धमानो वृद्धिं लभमानः अतएव क्वापि कस्मिंश्चिद्देशेऽपि अशङ्कितः परेभ्यश्छेदनभेदनादिशङ्कारहितः तथासमुन्नतिं वहन् औन्नत्यं लभमानः अतएवक्षितौ पृथिव्यां शङ्करवंशशब्दितः शङ्करस्यवंशएववंशोयस्य स इति । यद्वा शङ्करात् तद्वरप्रसादाद्धेतोः वंशो यस्य यस्माद्वा स शङ्करवंशः स इतिशब्दितः कीर्तितः सन् बभौ प्रकाशितो बभूव । ततः प्रभृत्येव तद्वंशः शङ्करवंश इति लोके प्रख्यातिं गत इत्यभिप्रायः ॥

१४२. अथैकपत्नी व्रतिनी सुतार्थिनी दृढं सिषेवे महिषी तमन्वहम् ।
व्रतादिनाऽलभ्यफलं हि लभ्यते नतत्सतीनां पतिसेवनात्परम् ॥

१४३. स्वकं भजन्त्यां परिशुद्धभावतः सदाप्रसन्नोऽखिललोकरञ्जनम् ।
यथा प्रसादं स्वरुचौ शरच्छशी सुतं स तस्यामुदपादयन्नृपः ॥

१४४. वलक्षपक्षाश्रितशीतदीधिति द्युतिर्वितन्वन्नतनुं तनुश्रियम् ।
क्रमादतिप्रीति तरङ्गसन्ततिं ततान तातस्य गुणार्णवस्य सः ॥

१४२ अथेति ॥ अथ कियत्कालानन्तरं महिषी कृताभिषेका राजपत्नी । 'कृताभिषेका महिषी'त्यमरः। सुतार्थिनी सुतः पुत्रएवार्थः । प्रयोजनमस्या अस्तीति । सुतमर्थयतेवा । तथा गृह्यादित्वाण्णिनिः ङीप् । पुत्रं *कामयमाना* अतएव एकः पतिर्यस्याः सा एकपत्नी पतिव्रता । नित्यं सपत्नादिष्विति । नांतादेशः नांतत्वात् ङीप् । एकपत्न्याः व्रतं मनोवाक्कायकर्मभिः पतिसेवनरूपं तदस्या अस्तीति । मत्वर्थीय इनिः ङीप् । पतिव्रता-धर्मचारिणी सतीत्यर्थः । अहन्यहनीत्यन्वहं प्रतिदिनं । वीप्सायामव्ययीभावः नपुंसका दन्यतरस्यामिति टच् । तं पतिं विनायकदेवं दृढमत्यन्तं सिषेवे स्वपुत्रसम्पत्तिमनवेक्ष्यतत्प्राप्तये सर्वतोभावेन निजभर्तारमेव उपचरितवतीत्यर्थः । न च मिथुनीभावस्यैव पुत्रोत्पत्तिहेतुत्वं । यत्किञ्चिद्दुरदृष्टविशेषस्यापि तत्र प्रतिबन्धकत्वेन तद्विघाताय सत्पुत्रप्राप्तिहेतुभूतशुभादृष्टसम्पादनाय च । तपोव्रताद्यनुष्ठानस्य विधेयत्वात् तस्या भर्तृसेवनरूपव्रताचरणं युक्तमिति तमेवविशेषं सामान्यरूपार्थान्तरोपन्यासेन द्रढयति । व्रतादिनेति । व्रतादिना नियमादिना हेतुना 'नियमोव्रतमस्त्री' त्यमरः । अलभ्यं लब्धुमशक्यमपि फलं इष्टफलं लभ्यते प्राप्यते । हि निश्चये । श्रुतिस्मृतिपुराणादिष्वभिहितमित्यर्थः । ननु पुत्रार्थिभिः देवद्विजाराधनं सन्तानगोपालमन्त्रोपासनं हरिवंशश्रवणं विनायकव्रतं पुत्रप्रदसप्तमीव्रतं चेत्यादि तत्तदुपायाः कर्तव्या इति तत्रतत्राभिहितमेव । तर्हिकिमनया भर्तृमात्रसेवया इत्याशङ्क्याह । नेति सतीनां तत् पतिव्रतानां व्रताराधनादिपतिसेवनात् पतिसेवां विहाय । ल्यब्लोपे पञ्चमी । परं न अन्यत् किमपिनास्ति पतिसेवैव सकलव्रतादिस्वरूपमित्यर्थः । यद्वा पतिसेवनापेक्षया परं श्रेष्ठं नेत्यर्थः । नास्ति स्त्रीणां पृथग्यज्ञो नव्रतं नाप्युपोषणमित्यादिना स्त्रीणां पतिशुश्रूषणमेव प्रधानमिति मन्वादिभिरुक्तत्वादिति भावः । तथैव फलमपि प्राप्तमित्याह ॥

१४३. स्वकमिति ॥ स नृपः विनायकदेवः स्वकं स्वमेव । स्वार्थेकन् । परिशुद्धभावतः । अव्यभिचारि स्वभावेन सदा अनवरतं भजन्त्यां सेवमानायां तस्यां निजपट्टमहिष्यां प्रसन्नः सन्तुष्टः सन् अखिललोकरञ्जनं सर्वजनमनोरमं सुतं पुत्रं शरच्छशी शरत्कालीन चन्द्रः स्वरुचौ ज्योत्स्नारूपायां प्रसादं नैर्मल्यगुणं यथातथेत्यर्थः उत्पादयामास । अत्रोपमानभूतेषु चन्द्रज्योत्स्नाप्रसादेषु पूर्वार्धोक्तान्यपि विशेषणानि यथायथं प्रयोज्यानि तत्र प्रसन्नो निर्मलः । अन्यत्सर्वमुभयत्र समानम् १४४९ क्रीस्ताब्देऽस्य जन्म ॥

१४४. वलक्षेत्यादि ॥ वलक्षपक्षः शुक्लपक्षः । 'शुक्लशुभ्रशुचिश्वेत विशदश्वेतपाण्डराः । अवदातः शितोगौरो वलक्षो धवलोऽर्जुन' इत्यमरः । तमाश्रितः । शीतदीधितिश्चन्द्रः शुक्लपक्षीय चन्द्र इत्यर्थः । तस्य द्युतिरिव द्युतिः कान्तिर्यस्य स तथाभूतः । सपुत्रः क्रमात् दिनेदिने वृद्धिक्रमेण अतनुं अकृशां वोतोगुण-

१४५. वयस्यमुष्याधिगतेऽथ मध्यमे विधापयामास सपट्टबन्धनम् ।
स्वयञ्च गीर्वाणगणैः पणायितोजगामनिर्वाणपदं निरापदम् ॥

१४६. बुभोज भूमिं स महौजसोर्जितो जयी महाजावरिवारदुर्जयः ।
व्यभाद्यदीयं विजयादि चन्द्रभाक् समन्ततोनामयशः समन्ततः ॥

---

वचनादिति वैकल्पिको ङीपोऽभावः तनुश्रियं कायशोभां । 'तनुः कायेत्वचिस्त्रीस्यात्त्रिष्वल्पेविरलेकृशे' इति मेदिनी । वितन्वन् विस्तारयन् गुणैः शौर्यादिभिः अर्णव इव गुणार्णवः । तस्य गुणसमुद्रस्य तातस्य जनकस्य । 'तातस्तु जनकःपिते' त्यमरः । अतिप्रीतितरङ्गसन्ततिम् अतिशयिता या प्रीतिरानन्दः सैवतरङ्गः उत्तरोत्तरवृद्धत्वेन तरङ्ग साम्यं तत्सन्ततिं तत्परम्परां उत्तरोत्तरप्रवृद्धानन्दोर्मिपरम्परामित्यर्थः । ततान विस्तारयामास ॥

१४५. वयसीति ॥ सविनायकदेवः अमुष्य पुत्रस्य मध्यमेवयसि यौवने अधिगते प्राप्तेसति पट्ट-बन्धनं । 'पट्टउष्णीषादि' रिति स्वामी । तस्य बन्धनं राज्यारोपणसमयोचित कौपेयबन्धनमित्यर्थः । विधापयामास । विधिना कारयामास । यद्वा राज्ञां किरीटविशेषस्वरूपस्य पट्टस्य बन्धनं विधापयामासे-त्यर्थः । राजादीनां पट्टलक्षणमुक्तम् । बृहत्संहितायां यथा । विस्तरशोनिर्दिष्टं पट्टानां लक्षणं यदाचार्यैः । तत्संक्षेपः क्रियते मयात्र सकलार्थसम्पन्नः । पट्टः शुभदो राज्ञां मध्येऽष्टावङ्गुलिविस्तीर्णः । सप्तनरेन्द्रमहि-ष्याः षड्युवराजस्य निर्दिष्टः । चतुरङ्गुलविस्तारः पट्टः सेनापतेर्भवति । मध्ये द्वे च प्रसादपट्टः पञ्चते कीर्तिताः पट्टाः सर्वे च शुद्धकाञ्चनविनिर्मिताः श्रेयसो वृद्ध्यै । पञ्चशिखो भूमिपते स्त्रिशिखो युवराज पार्थिव-महिष्योः । एकशिखः सैन्यपतेः प्रसादपट्टो विनाशिखया । क्रियमाणं यदि पत्रं सुखेन विस्तारमेतिपट्टस्य । वृद्धिजयौ भूमिपते स्तथाप्रजानां च सुखसम्पत् । जीवित राज्यविनाशङ्करोति मध्येव्रणः समुत्पन्नः । मध्ये स्फुटितस्त्याज्यो विघ्नकरः पार्श्वयोः स्फुटितः । अशुभनिमित्तोत्पत्तौ शास्त्रज्ञः शान्ति मादिशेद्राज्ञः । शास्त्रनिमि-त्तः पट्टोनृपराष्ट्रविवृद्धये भवतीत्यादि ॥ अथ पुत्रे राज्यभारार्पणानन्तरं स्वयं च विनायकदेवः गीर्वाणगणैः देववृन्दैः पणायितः अभिष्टुतः सन् । "ईडितशस्तपणायित पनायित प्रणुत पणितपनितानि अपिगीर्ण-वर्णिताभिष्टुतेडितानि स्तुतार्थानी" त्यमरः । निरापदं संसारापद्रहितं निर्वाणपदं मुक्तिस्थानं । 'मुक्तिः कैवल्यनिर्वाण' मित्यमरः । जगाम प्राप । स्वयं देहं विसृष्टवानित्यर्थः । अयं हि पट्सप्तत्यधिकचतुःशतो-त्तरसहस्रपरिमिते [1476] क्रीस्ताब्दे लोकान्तरं गतवानिति ॥

१४६. बुभोजेति ॥ ततः विनायकदेवस्य लोकान्तरगमनानन्तरं महौजसा सामर्थ्यातिशयेन ऊर्जितो बलदर्पित इत्यर्थः । महाजौ महायुद्धे । "समित्याजि समिद्युध" इत्यमरः । जयी जयनशीलः अरिवारैः शत्रुसमूहैः दुर्जयः पराजयरहितः सः प्राप्तराज्यो राजपुत्र इत्यर्थः । भूमिं पृथिवीं बुभोज पालया-मास । यदीयं यत्सम्बन्धि विजयशब्द आदौ यस्य तं चन्द्रशब्दं भजतीति तथोक्तं । नाम नामधेयं विजय-चन्द्र इति नामधेय मित्यर्थः । यशः समं शौर्यप्रशस्त्या सहेत्यर्थः । दानादि प्रभवा कीर्तिः शौर्यादिप्रभवं यश इत्युक्तेः । समन्ततः समन्तात् । चतसृष्वपि दिक्षु इत्यर्थः । व्यभात् विशेषेण बभौ ॥

१४७. अथैकदा श्रीपुरुषोत्तमाधिराट् प्रकृष्टधामा पुरुषोत्तमाभिधः ।
विजित्य कर्णाटममुष्य पर्यटन् विवेश राष्ट्रं सबलैर्भटैर्वृतः ॥

१४८. ततः सटाकेतनकेतनभ्रमन्मदोत्कटावारणवारणच्छटाः ।
विचार्य नो कार्यमकार्यमत्र ते व्यधुः प्रभूतावमतावमर्दनम् ॥

१४९. यथार्हवर्णैर्विदितोयथायथं निवेदयद्भिः परवीरसङ्क्रमम् ।
ययौ युयुत्सुर्बलिभिर्बलैर्वृतस्तदाक्रुधासौ परवीरमर्दनः ॥

---

१४७. अथेति ॥ अत्राथशब्दः कथान्तरारम्भबोधकः । अथानन्तरं एकदा एकस्मिन् काले । सर्वैकान्य किं यत्तदः काले दा इति दा प्रत्ययः । श्रीपुरुषोत्तमस्य तन्नामकक्षेत्रप्रधानभूमेः अधिराट् अधिराजः प्रकृष्टं धाम प्रभावो यस्य स प्रकृष्टधामा । गृह देहत्विट् 'प्रभावा धामानी'त्यमरः । पुरुषोत्तमाभिधः । पुरुषोत्तमनामा नृप इत्यर्थः । सबलैः बलसहितैः भटैर्योद्धृभिः । 'भटायोधाश्च योद्धार' इत्यमरः । वृतः वेष्टितः सन् कर्णाटं कर्णाटदेशं विजित्य तद्विजयं कृत्वा पर्यटन् परिवृत्यागच्छन् अमुष्य विजयचन्द्रस्य राज्ञः राष्ट्रं देशं विवेश प्रविष्टवान् । अत्रेयं चिरन्तनी कथा । दाक्षिणात्येकर्णाटाख्ये देशे काञ्चीनामनगर्यान्त दधिपते रेकापद्मिनी कन्या आसीत् । तदर्थं पुरुषोत्तमक्षेत्रनिवासिनः पुरुषोत्तमदेवनाम्नो राज्ञः उत्कलेश्वरस्य काञ्चीपुराधीश्वरेणसाकं विग्रहोजातः । स च पुरुषोत्तमदेवः महता सैन्येन परिवृतः सन् काञ्चीनगरीं गत्वा तदधिपतिं समरे पराभूय तत्पुत्रीं पद्मिनीकन्यां तत्पुराधिष्ठितगणेशगोपालप्रतिमाद्वयं तत्पुराधिष्ठात्रीं कनकमय जयदुर्गामूर्तिं कर्णाटमण्डलाधिष्ठित शिलासुघटित नारायणविग्रहं च गृहीत्वा स्वदेशं प्रत्यागमनसमये अस्य नन्दपुरराष्ट्रस्य दक्षिणसीमामार्गं गतवान् । इत्यादि तत्कथाबाहुल्यं उत्कलभाषानिबद्ध ओडिशेतिहास काञ्ची कावेरी युद्धनाटकादौ द्रष्टव्यम् । तत्समयस्तु क्रिष्टाब्दस्य [1479] एतत्परिमितः ॥

१४८. तत इति ॥ ततः एतद्देशप्रवेशानन्तरं ते जयोन्मत्ता भटादयः अत्र नन्दपुरप्रदेशे सटाः केसराः । 'सटा जटाकेसरयो'रिति मेदिनी । ते केतनं चिह्नं यस्य स सटाकेतनः सिंहः तस्यकेतने गृहे । 'गृहे चिह्ने च केतन" मिति हेमचन्द्रः । भ्रमन्तः सञ्चरन्तः मदोत्कटा मदोन्मत्ताः अतएव अवारणाः दुर्वारा ये वारणा गजाः तेषां च्छटा इव च्छटाः कान्तयो येषां ते तथाभूताः सन्तः कार्यमकार्यं नो विचार्य इदं करणीयमिदंमकरणीयमिति विचारमकृत्वेत्यर्थः । प्रभूतं भूयिष्ठं अवमतमवगणितं निन्दितमिति यावत् । यत् अवमर्दनं पीडनं देशोपद्रवदानमित्यर्थः । अवमर्दस्तु पीडनमित्यमरः । व्यधुः विदधुः पादचतुष्टयेऽपि यमकम् ॥

१४९. यथार्हवर्णै रिति ॥ तदा तस्मिन् समये परवीर संक्रमम् परवीराणां शत्रुवीराणां संक्रमोदुर्गप्रवेशनक्रिया । 'संक्रमो दुर्गसञ्चर' इत्यमरः । तं यथायथं यथास्वं यथात्मे यथायथमिति । निपातनात्साधुः । येनावमर्दनादिना परवीरै दुर्गसञ्चारः कृतस्तदनुरूपेणेत्यर्थः । निवेदयद्भिः विज्ञापयद्भिः यथार्हवर्णैः चारैः 'यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः, चारश्चगूढपुरुष' इत्यमरः । विदितः विदितं वेदनं भावेक्तः । तदस्यास्तीति विदितः । अर्शआद्यच् पीतागावो विभक्ता भ्रातरइत्यादिवत्साधुत्वं । परवीरसंक्रमरूपवृत्तान्तज्ञान-

१५०. चलद्रथाश्वेभपदातिसंहतेः पदाहतिक्षुण्ण चलाचलाचला ।
तदुत्थपांशुप्रकरो विसारयन् तदाऽभितोऽभ्रभ्रममभ्रमभ्रमत् ॥

१५१. निरीक्ष्य तत्तेऽद्भुतसैन्यमण्डलं परिक्षयोज्जृम्भितसिन्धुसोदरम् ।
दरीगिरिग्रामवनादिसङ्कुलं न लेभिरेऽन्यं शरणं पलायनात् ॥

१५२. निगृह्य तन्मार्गमयं बलाद्बली गजैकमध्यासितमश्मविग्रहम् ।
तदैव नारायणनाम सुग्रहं समग्रवर्गैकनिधानमग्रहीत् ॥

---

वानित्यर्थः । अतएव क्रुधा क्रोधेन युयुत्सुः योद्धुमिच्छुः । युधधातोः सन्नन्तादुः । परवीरमर्दनः शत्रुवीरसंहारकर्ता असौ विजयचन्द्रः बलिभिर्युद्धसमर्थैः बलैः सैन्यैः वृतः वेष्टितः सन् यथौ जैत्रयात्रां चक्रे इत्यर्थः ॥

१५०. चलदिति ॥ तदातस्य जैत्रयात्रासमये अचला पृथिवी । 'भूर्भूमिरचला' इत्याद्यमरः । सकिंभूतासीत । तदाह ॥ चलदित्यादि विशेषणेन । रथाश्च अश्वाश्च इभा हस्तिनश्च पदातयश्च रथाश्वेभपदातयः । एतेन सेनाङ्गचतुष्टयमभिहितम् । तथा च 'हस्त्यश्वरथपादातं सेनाङ्गंस्याच्चतुष्टयमि'त्यमरः । चलतां युद्धार्थं गच्छतां रथाश्वेभपदातीनां संहतेः वृन्दस्य 'संहतिर्वृन्दं निकुरम्बं कदम्बक' मित्यमरः । पदाहतिभिः पादताडनैः क्षुण्णा चूर्णिता च सा चलाचला कम्पमाना च तथाभूता आसीदिति शेषः । पदाहतीत्यस्य सापेक्ष्यत्वेऽपि गमकत्वात्समासः । पदाहति क्षुण्णेति चलाचलेति अनयोर्विशेषणत्वेपि अन्तरस्य विशेष्यत्वविवक्षया विशेष्यविशेषणसमासः । चलाचलेत्यत्र पचाद्यचि । चरिचलीत्यादिना वैकल्पिको द्वित्वादिः । युद्धार्थं गच्छतां चतुरङ्गसैन्यानां पादघातैः पृथिवी चूर्णिता कम्पमाना च बभूवेत्यर्थः । तदुत्थपांशुप्रकरः तस्या अचलायाः भूमध्यादित्यर्थः । उत्थः उत्थितः उत्पूर्वात्स्थाधातोरातश्चोपसर्गे इति कप्रत्ययः । 'उदःस्था स्तम्भोः पूर्वस्ये'ति पूर्वसवर्णः । सवर्णलोपश्च यः पांशुप्रकरो धूलिपटलः सैन्यपादघातोत्थित धूलिपटल इत्यर्थः । अभितः समन्तात् अभ्रभ्रमं मेघभ्रान्ति विसारयन् विस्तारयन् जनयन्नित्यर्थः । अभ्रमाकाशं अभ्रमत् आकाशदेशे बभ्रामेत्यर्थः । अकर्मकधातुभिर्योगेदेशः काल इत्यादि वार्तिकोक्त्या कर्मत्वम् । अभ्रं अभित इति योजनायां अभितः परित इत्यादिना कर्मत्वम् । 'अभ्रं मेघोवारिवाह इत्यादि द्यो दिवौ द्वे स्त्रियामभ्रमित्यादि' चामरः ॥

१५१. निरीक्ष्येति ॥ ते शत्रुपक्षीय भटाः दरीगिरिग्रामवनादिसङ्कुलं कन्दरापर्वतग्रामारण्यादिव्याप्तं । अतएव परिसर्वतोभावेन क्षयः प्रलयः । 'प्रलयः कल्पः क्षय' इत्यमरः । तस्मिन् महाप्रळये उज्जृम्भितस्य प्रवृद्धस्य सिन्धोः समुद्रस्य सोदरं सह समानमुदरं यस्य तत् सहस्य सः । तत्सदृशमित्यर्थः । घोषविस्तीर्णत्वादिना समुद्रसाम्यं । तत् तादृशं अद्भुतसैन्यमण्डलं विस्मय जनकसेनासमूहं निरीक्ष्य पलायनात् । अन्यं पलायनभिन्नं शरणं प्राणरक्षणोपायं न लेभिरे न प्रापुः । पलायनमेव शरणं जग्मुरित्यर्थः ॥

१५२. निगृह्येति ॥ तदा तस्मिन् समये एव बली शत्रुनिग्रहसमर्थः । अयं विजयचन्द्रः तन्मार्गं तेषां पलायमानानां शत्रुसैन्यानां पन्थानं बलात् बलं स्वसामर्थ्यम् । निजसैन्यं वा अवलम्ब्य । ल्यब्लोपे पञ्चमी । निगृह्य । स्वसैन्येन निरुध्येत्यर्थः । 'निग्रहस्तु निरोधः स्या'दित्यमरः । तेषां मार्गावरोधं कृत्वेति

१५३. चिराय काञ्चीपुरसञ्चितश्रियं शिवाञ्च पञ्चास्यनिकेतनाञ्चिताम् ।
चतुर्भुजां काञ्चनकाञ्चनात्मिकामकिञ्चनः काञ्चनसञ्चिकामिव ॥

१५४. ततो विनिर्वृत्य जयेति शब्दितो जयाख्य दुर्गां स्वजयायतां निजे ।
पुरे प्रतिष्ठाप्य समर्च्य भक्तियुक् शरद्वसन्तादि महोत्सवं व्यधात् ॥

यावत् । गजानामेको मुख्यो गजैकः । 'एको मुख्यान्यकेवलाः' इत्यमरः । निर्धारणे षष्ठी । न च ननिर्धारणे इति निर्धारण षष्ठ्याः समासप्रतिषेध इति वाच्यम् । यस्मान्निर्धार्यते यश्चैकदेशो निर्धार्यते यश्च निर्धारण-हेतुः । एतत्त्रितयसन्निधाने सत्येवायं निषेधइति । द्विवचन विभज्येति सूत्रे कैयटोक्त्या पुरुषोत्तम इत्यादि-वत्साधुत्वात् । विशेषणविशेष्यसमासाश्रयणे तु पूर्वकालैकेत्यादिना एकशब्दस्य पूर्वनिपातापत्तिः । तं गजश्रेष्ठं तस्मिन्नित्यर्थः । अधिशीङ् स्थासामित्याधारस्य कर्मत्वम् । अध्यासितम् अधिष्ठापितं गजोपरिस्थित-मित्यर्थः । समग्रवर्गैकनिधानं समग्राणां समस्तानां वर्गाणां धर्मार्थकाममोक्षाणां चतुर्णामपि एकमद्वितीयं निधानम् । निधीयन्तेऽस्मिन्निति निधानं । आश्रयभूतः तं निधानशब्दस्य नित्यनपुंसकत्वात् लिङ्गभेदेऽपि वेदाः प्रमाणमित्यादाविव विशेषणत्वम् । नारायण इति नाम्ना सुग्रहः सम्यग्ग्रहणं ज्ञानमित्यर्थः । यस्य ग्रह-वृद्धनिश्चिगमश्चेत्यप् । नारायणनाम्नासुष्ठु गृह्यत इतिवा विभाषाग्रह इत्यच् । तं अश्मविग्रहं शिलानिर्मित-विग्रहं शिलानिर्मित वल्लभनारायणाख्य मूर्तिमित्यर्थः । अग्रहीत् गृहीतवान् ॥

१५३. चिरायेति ॥ चिराय चिरकालादारभ्य । 'चिराय चिरात्राय चिरस्याद्याश्चिरार्थका' इत्य-मरः । काञ्चीपुरस्य काञ्चीनामनगर्याः सञ्चिता संगृहीता या श्रीः सम्पत् तद्रूपां पञ्चास्यः सिंहः । 'सिंहो मृगेन्द्रः पञ्चास्य' इत्यमरः । स एव निकेत्यतेऽस्मिन्निति निकेतनम् वाहनतया स्थानभूत इत्यर्थः । कित-निवासे इति धातो रधिकरणे ल्युट् । तत्राञ्चितां पूजितां सिंहोपरि स्थितामित्यर्थः । चतुर्भुजां चत्वारो भुजाः बाहवो यस्यास्तां बाहुचतुष्टय युक्तामित्यर्थः । काञ्चनात्मिकां काञ्चनघटित आत्मा देहो यस्यास्तां सुवर्ण-विग्रहामित्यर्थः । 'आत्माजीवेधृतौदेहे' इति वैजयन्ती । काञ्चन रूपलावण्याद्यनिर्वचनीयां शिवां दुर्गाञ्च चकारोऽत्र पूर्वश्लोकोपात्तक्रियासमुच्चायकः । कनकमयजयदुर्गामूर्तिमित्यर्थः । अकिञ्चनः नास्ति किञ्चन यस्यसः । मयूरव्यंसकादित्वात्समासः । दरिद्र इत्यर्थः । काञ्चन सञ्चिकां सुवर्णभरितमृत्पादिनिर्मिताधार-विशेषमिव । अग्रहीदिति पूर्वेण सम्बन्धः । कर्णाटविजयं कृतवता राज्ञा पुरुषोत्तमदेवेन तद्देशात् हस्ति-पृष्ठे समावेश्य आनीतां शिलासुघटित वल्लभनारायणाख्यमूर्तिं काञ्चीपुराधिष्ठात्रीं कनकमयदुर्गामूर्तिञ्च मार्गावरोधपूर्वकं अयं हस्तिनासह गृहीत्वा आनीय स्वदेशे नन्दपुरादा प्रतिष्ठापयामासेति पुरावृत्तमिद-मत्रानुसन्धेयम् । यथा च हस्तिसहित तन्मूर्त्यो रत्नावस्थानं श्रीपुरुषोत्तमक्षेत्रे कानगोयी गोपिनाथ इत्ये-तेषां गृहेस्थापित मादलावृहत् पञ्जीति प्रसिद्धपुस्तके द्रष्टव्यम् । तत्रैवायं सर्वोपि वृत्तान्तो वर्तत इति श्रीजगन्नाथमन्दिरस्य सेवकपण्डिताः ॥

१५४ तत इति ॥ ततः गजसहित मूर्तिद्वय ग्रहणानन्तरं । जयेति शब्दितः । जयजय इत्याकारक-शब्दाभिष्टुतः । अयं विजयचन्द्रः पूर्वतश्लोकादय मित्यनुवर्तते विनिर्वृत्य युद्धप्रदेशात्स्वदेशं प्रत्यागत्य स्वज-याय स्वस्य सर्वदा जयप्राप्त्यर्थम् । निजे आत्मीये । 'निजआत्मीय तुल्ययो'रिति विश्वः । पुरे निजराधानी

१५५. पुरेऽथ नारायणपट्टणाभिधे पुरं विनिर्माय नवं मनोहरम् ।
स तत्र नारायणमूर्तिमादरान्निधाप्य नित्यं विधिनाप्यपूजयत् ॥

१५६. रसोद्भवाभं गदयायुजं करौ निषेव्य यस्या दरदश्च वर्धकम् ।
दरञ्च चक्रं च दिवौकसां द्विषां स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥

---

भूते नन्दपुरे इत्यर्थः । तां पूर्वोक्तां जयाख्यदुर्गां जया इति आख्या नामधेयं यस्याः तां जयदुर्गामूर्तिमित्यर्थः । प्रतिष्ठाप्य प्रासादादि निर्मापणेन स्वेष्टतया तत्र संस्थाप्य भक्तियुक् देवादिषु परानुरक्तिर्भक्तिः। तद्युक्तः सन् सत्सृद्धिपेत्यादिना क्विप् समर्च्य सम्यक् पूजयित्वा शरद्धमन्तादि महोत्सवं शरत्कालीन षोडशाहः पूजावासन्तिक नवरात्र पूजाद्यात्मकं महोत्सवं व्यधात् विदधे कारयामासेत्यर्थः ॥

१५५. पुर इति ॥ अथ स्वपुरे दुर्गादेव्याः प्रतिष्ठापनानन्तरम् सविजयचन्द्रः नारायणपट्टणाभिधे नारायणपट्टणा इति अभिधा यस्य तस्मिन् तदाख्ये पुरे नन्दपुरान्तर्गतनारायणपट्टणाख्यशाखानगरे नवं नूतनं पुरं देवागार मित्यर्थः। मनोहरं सुन्दरं यथातथा विनिर्माय शिल्पिभिः कारयित्वा तत्र नूतनप्रासादे नारायणमूर्तिम् पूर्वोक्तवल्लभ नारायण प्रतिमामपि आदरात् भक्तिपूर्वक मित्यर्थः। निधाप्य संस्थाप्य नित्यं प्रतिदिनं विधिना वैष्णवतन्त्रोक्तानुसारेण अपूजयत्। पूजकैः पूजयामासेत्यर्थः । नन्दपुरस्य उत्तरदिग्भागे नारायणपुराख्यया एकानगरी वर्तते। विचारचतुरोयं विजयचन्द्रः मन्त्रिपुरोहितादिभिः सह विचार्य अयं हि नारायणविग्रहः नारायणपट्टणाख्ये पुर एवस्थातुं योग्यः। नामैक्यादिति निश्चित्य तत्र नारायणपट्टणाख्यपुरे अभिनवं मन्दिरं निर्माय तत्प्रतिष्ठाप्य तत्र तत्पुराधीश्वरतया तं भगवद्विग्रहं संस्थाप्य यथाविधि राजोपचारादिभिस्तं प्रतिदिनं पूजयामासेति चिरन्तनी वार्ता। एवमेवायं विजयचन्द्रदेव महाराजः षट्सप्तत्यधिक चतुः शतोत्तर सहस्रपरिमित १४७६ क्रिष्टाब्दमारभ्य त्रिंशद्वर्षपर्यन्तं स्वराज्यं परिपाल्य दशाधिकपञ्चदशशतमिते १५१० क्रिष्टाब्देदेहं विजहौ इति ॥

१५६. इतः प्रभृति षोडशभिः श्लोकैः तावेव दुर्गानारायणौ विशेषणैः प्रश्लिष्यस्तौति। रसेत्यादि। तं हरिं नारायणं तां हरिवाहिनीं सिंहवाहिनीं दुर्गां च स्मरेत्। अविशेषात् दौर्गोवा वैष्णवोवा सर्वोपि भावयेदिति सर्वत्रान्वयः। तत्र नारायणपक्षे किं भूतं हरिं दरं पाञ्चजन्यः शङ्खः चक्रं सुदर्शनं च द्वयं कर्तृ यस्य हरेः करौ हस्तौ निषेव्य दक्षिणवामक्रमेण संश्रित्यदिव ओकोयेषां ते दिवौकसो देवाः तेषां द्विषां देवविद्रोहिणां दैत्यानामित्यर्थः। आसर्वतो भावेन दरं ददातीति दरदम् भयप्रदं अदरम् अभयंद्यति खण्डयतीति वा तथा 'दोऽवखण्डने। उभयत्रापि आतोनुपसर्ग इति कः। 'दरत्रासो भीतिर्भीः साध्वसम्भय' मित्यमरः। तथा वर्धकं छेदकं च भवतीतिशेषः। वृधुछेदने इत्यस्मात् कर्तरि ण्वुल् वर्धनं छेदने वृद्धावित्यजयः। यत्कर द्वयमाश्रित्य शङ्खचक्रद्वयं दैत्यानां भयक्षयो भयकारकम्। तं रसोद्भवाभं रसाज्जलादुद्भवोजन्म यस्य तत्। रसोद्भवं जरजं तस्य करधृतपद्मस्येत्यर्थः। आभाकान्ति र्यस्मात् तं यत्करमवलम्ब्य पद्मं कान्तिमदिति भावः। रसोद्भवेन आभायस्येति विग्रहे नारायण शोभाजनकत्वेन पद्मस्यैव प्राधान्यं प्रतीयेत। नतु नारायणस्य तेन प्रथमव्याख्याप्रकारएव रुचिरः। गदया कौमोदक्या। 'कौमोदकी गदे' त्यमरः। युज्यत इति युक्। युजसमाधा वित्यस्माद्धातोः क्विप्च इति क्विप्। तं गदया सहयोगिन मित्यर्थः। तथाभूतं हरिं स्मरे-

१५७. स्वमूर्ध्नि शूलेन विशेषितोऽखिलं द्विषन् सवाहोचितविग्रहो व्यधात् ।
यदङ्घ्रिपाथो जगतोऽघखण्डनं स्मरेद्धरिं तं हरिवाहिनीश्च ताम् ॥

दित्यर्थः । रसोद्भवाभं गदया युजमित्येतद्विशेषणद्वयं दरचक्रयोर्वा क्रमेण समन्वेतव्यम् । रसोद्भवेन आभायस्य तथाभूतं दरन्तयोर्दक्षकरद्वय साहचर्यात् । तथागदया युजं चक्रं तयो वामकरद्वय साहचर्यात् । अत्र युजशब्दोऽदन्तः । इगुपधत्वात्क प्रत्ययेन निष्पन्नः । यद्यपि युजमित्यत्र क्विपिकप्रत्ययेवा । युजे रसमासे इतिनुम् । प्राप्नोति तथा च युञ्जमित्येवस्यात्तथाऽपि नुम्विधायकसूत्रे धातु पाठपठिते कारविशिष्टस्य युजिरयोगे इति धातोरेव ग्रहणान्ननुम् क्विप् स्यानेरुत्विक् दधृगित्यादिना क्विन्प्रत्ययेप्यविशेषः । यद्वा आसर्वतो भावेन युनक्ति युज्यतेवा । तथा सत्सुद्विषेत्यादिना क्विपि इगुपधज्ञेत्यादिना कप्रत्ययेपि आङ समस्तत्वान्ननुम् प्रसक्तिः । एवमन्यत्रापि ज्ञेयम् । अस्मिन् पक्षे भगवतोरायुधचतुष्टयं प्रदर्शितं । उक्तञ्च 'विष्णुं वन्देदरकमलकौमोदकी चक्रपाणि' मिति क्रमदीपिकायाम् ॥ दुर्गापक्षे दरंचक्रं च शङ्खचक्रद्वयमपि यस्याः हरिवाहिन्या दुर्गायाः करौ हस्तद्वयम् निषेव्यदिवौकसां देवानां दरम्भयं । द्यतीति दरदम्, भयापहं वर्धकम् वृद्धिजनकम् च तथाद्विषां शत्रूणां दरदम् भयप्रदम् वर्धकञ्छेदकञ्च भवतीति शेषः । तां तथाभूतां रसायां पृथिव्यो उद्भवो जन्म येषां ते रसोद्भवाः पृथिव्याश्रितजनाः । तेषु अभङ्गा अकुटिला या दया तां युनक्ति सङ्गच्छतीति रसोद्भवाभङ्गदयायुक् । तां हरिवाहिनीं । हरिः सिंहः "सिंहो मृगेन्द्रपञ्चास्यो हर्यक्षः केसरी हरि 'रित्यमरः । स एव बाहो वाहनमस्यास्तीति । इन् - ङीप् । तां दुर्गांस्मरेदित्यर्थः ॥

१५७. स्वमूर्ध्नीति ॥ वाहे वृषभोपरीत्यर्थः ॥ 'वाहो भुजे पुमान् मानभेदाश्ववृषवायुषु' इति मेदिनी ॥ उचितः उपयुक्तः विग्रहो देहो यस्य सः वृषभारूढ इत्यर्थः । शूलेन आयुधविशेषेण विशेषितः इतरेभ्यो व्यावर्तितः 'शिवः शूली महेश्वरः' इत्यादि कोशात् शूलिशब्दस्य शिवे एव योगरूढत्वात् तथाभूतः । सन् अखिलं जगज्जातं द्वेष्टीति द्विषन् द्विषोऽमित्रे इति कर्तरि शतृप्रत्ययः । द्विषः शतुर्वेति पक्षे षष्ठीप्रतिषेधात् द्वितीया । निखिललोकविध्वंसकर्ता ॥ सः प्रसिद्धः शिव इत्यर्थः । स्वमूर्ध्नि निजमस्तके जगतो लोकस्य अघखण्डनं अघानां पापानां खण्डनमपनोदनं । यस्मात् तत् भावे ल्युट् । यद्वा खण्ड्यतेऽनेनेति खण्डनं करणे ल्युट् । अघानां खण्डनं खण्डनसाधनम् ॥ अघानि खण्डयतीति वा ॥ अघखण्डने । बाहुलकात्कर्तरि ल्युट् ॥ तत्तथाभूतं यदङ्घ्रिपायः यस्य हरेः पादनिःसृतं नीरं गङ्गारूपं व्यधात् विधृतवान् । 'पाथोऽर्णतोयपानीयनीरक्षीराम्बुशम्बर' मित्यमरः ॥ तथाविधः संहारमूर्तिः शिवोऽपि जगत्संहरणजन्यपापापनुत्तये यस्य हरेः पादोदकभूतां गङ्गां शिरसि दधाति तं । सर्वोत्कृष्टं हरिं स्मरेदित्यर्थः ॥

दुर्गापक्षे ॥ अखिलं द्विषन् अखिललोकद्वेषकर्ता स प्रसिद्धः वाहेष्वश्वेपूचित उपयुक्तः शाश्वतिकवैरात् विग्रहः । कलहो यस्य स महिषः 'लुलायो महिषोवाहद्विषत्कासरसैरिभा' इत्यमरः ॥ महिषासुर इत्यर्थः ॥ यदङ्घ्रिपाथो जगतः यस्या दुर्गाया अङ्घ्रिपाथोजं पादपद्मं गतः प्राप्तः शूलेन देवीकरधृतत्रिशूलेन स्वमूर्ध्नि निजमस्तकभागे कण्ठप्रदेशे इत्यर्थः ॥ विशेषितः विच्छेदितः । उक्तं च मार्कण्डेयपुराणे—'पादेनाक्रम्य कण्ठे च शूलेनैनमताडय' दिति ॥ तथाभूतः सन् अघखण्डनं व्यधात् पापं खण्डितवान् । असुरभावान्मुक्त इति भावः । तां महिषमर्दिनीं दुर्गां स्मरेदित्यर्थः ॥ एतेन देव्या एकः पादो महिषोपरि अपरः सिंहोपरि करधृतत्रिशूलेन निर्भिन्नश्च महिष इति फलितम् ॥

१५८. विशीर्णनिर्णाशविशिष्टभाज्वलत्सुधावपुष्मच्छिरसंस्फुरच्छ्रियम् ।
गृहीतविद्युत्परिहासिभाससं स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥

१५९. त्रिनेत्रयुक्तामितदैवतास्तृतस्तुतिं कुमार्यादरलब्धसङ्गतिम् ।
परीतमुक्तावलिकल्पितद्युतिं स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥

१५८. विशीर्णेति ॥ नारायणपक्षे निष्क्रान्तो नाशान्निर्णाशः 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः । अमृतपानादविनाशीत्यर्थः ॥ अतएव विशिष्टा सर्वोत्कृष्टा या भा कान्तिः तया ज्वलन् प्रकाशमानश्च स्वर्भानुत्वात् । सुधामयं वपुः शरीरं यस्य स सुधावपुश्चन्द्रः तं मश्नातीति सुधा वपुष्मत् राहुः सत्सूद्विषेत्यादिना क्विप् । विशीर्णं विच्छिन्नं निर्णाशविशिष्टस्य भाज्वलतश्च सुधावपुष्मतः शिरः शीर्षं येन तं अविनाशिनोपि प्रदीप्तस्य राहोः शिरश्छेत्तारमित्यर्थः । स्फुरन्ती जाज्वल्यमाना श्रीर्लक्ष्मीर्यस्मिन् यस्माद्वा तं तथाभूतम् ॥ गृहीता विद्युतो येन स गृहीतविद्युन्मेघः । तटित्वानित्यभिधानात् तं परिहसितुं शीलं यस्य तथाभूतं भासो दीप्तिर्यस्य तं भासृदीप्ताविति धातोः सर्वधातुभ्योऽसुन्नित्यसुन् प्रत्ययः ॥ मेघातिश्यामद्युतिमित्यर्थः ॥ भासो दीप्तिरिति द्विरूपकोशः तथाभूतं तं हरिं स्मरेदित्यर्थः ॥

दुर्गापक्षे ॥ विशीर्णोऽतिसूक्ष्मः कलामात्रात्मकत्वात् । निर्णाशः कदाप्यविनाशी ॥ अतएव विशिष्टया वृद्धिक्षयादि राहित्येन विलक्षणया । भया कान्त्या ज्वलन् ॥ तथा भूतो यः सुधावपुश्चन्द्रः सोऽस्यास्तीति मतुप् तथाभूतं शिरो यस्यास्तां । अर्धेन्दुकृतशेखरामित्यर्थः ॥ स्फुरन्ती श्रीः शोभा यस्यास्तां । विद्युतं सौदामिनीं 'तडित्सौदामिनी विद्यु'दित्यमरः ॥ परिहसितुं शीलं यस्य तच्चासौ भासश्चेति विद्युत्परिहासि भासः गृहीतं निजशरीरे धृतं विद्युत्परिहासि भासो यया सा गृहीतविद्युत्परिहासिभासाः तां विद्युज्जितप्रभामित्यर्थः ॥ तां हरिवाहिनीं दुर्गां स्मरेदित्यर्थः ॥

१५९. त्रिनेत्रेति ॥ हरिपक्षे त्रीणिनेत्राणि यस्य स त्रिनेत्रः शिवः तेन युक्तानि सहितानि अमितानि अपरिमितानि च यानि दैवतानि तैरास्तृता विस्तृता स्तुतिर्यस्य तं निखिलदेवस्तुतमित्यर्थः ॥ कुः पृथिवी मालक्ष्मीः अर्ये स्वामिनि आदरः अर्यादरः 'स्यादर्यः स्वामिवैश्ययो'रित्यमरः ॥ कुमाभ्यामर्यादरेण स्वामिभक्त्या लब्धा सङ्गतिः संश्लेषो यस्य । यद्वा आर्यैः कर्तव्य आदरः आर्यादरः शाकपार्थिवादिः । कर्तव्यमाचरन् काममकर्तव्यमनाचरन् ॥ तिष्ठति प्रकृताचारे स तु आर्य इति स्मृत इति वसिष्ठः ॥ कुमयोरार्यादरेण लब्धासङ्गतिर्येन तं । श्रीधराश्लिष्टपार्श्वमित्यर्थः ॥ परिसमन्तात् इताः प्राप्ताः ये मुक्ताः सामीप्यमुक्तिभाजः तेषामावलिः पङ्क्तिः । तया तस्याः तस्यां वा कल्पिता द्युतिः कान्तिर्यस्य यस्मात् येन वा तं मुक्तजनसंसर्गिणमित्यर्थः ॥ तं हरिं स्मरेदित्यर्थः ॥

दुर्गापक्षे ॥ त्रयाणां नेत्राणां समाहारः त्रिनेत्रं तेन युक्तां ॥ त्रिनेत्रामित्यर्थः ॥ इतैः सङ्गतैः दैवतैः दैवगणैः आस्तृता स्तुतिर्यस्याः तां कुमारीभिः आदरेण लब्धासङ्गतिः सङ्गो यस्यास्तां कुमारीभिः सेवितामित्यर्थः ॥ परीता कण्ठादिषु व्याप्ता या मुक्तावलिः । मौक्तिकस्रक् तया कल्पिता विलक्षणीकृता द्युतिर्यस्यास्तां तथाभूतां हरिवाहिनीं स्मरेदित्यर्थः । एतैरुक्तैश्चतुर्भिः श्लोकैः । देव्याः ध्यायेत्सुवर्णवर्णाभामित्यादि ध्यानस्वरूपमुक्तं । तद्यथा ॥ 'ध्यायेत्सुवर्णवर्णाभां त्रिनेत्रां चारुहासिनीं । सर्वलक्षणसम्पन्नामर्धेन्दुकृतशेखरां ॥ चतुर्भुजां शङ्खचक्रधरां बालां सुरूपिणीं । उद्यत्त्रिशूलनिर्भिन्नमहिषां सिंहवाहिनीं । मुक्ता-

१६०. तनूं यदीयामपि मोहिनीं श्रियाविमुह्यसम्भोक्तुमना महेश्वरः ।
मनोभवोद्भावनकारणं पुनः स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥

१६१. श्रुतिं प्रतिष्टुत्य चलच्छवोचितां चितोत्सवं भैरवरोहितात्मकम् ।
अभीष्टदं कालिकमेव यद्वपुः स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥

---

दामलसत्कण्ठां मुनिभिः स्तुतिपाठकैः । सिद्धैर्देवगणैर्जुष्टां कुमारीभिश्च सेवितां । सर्वकामप्रदां दुर्गां वरदां भक्तवत्सला 'मिति दुर्गाकल्पादौ ज्ञेयम् ॥

१६०. तनूमिति ॥ विष्णुपक्षे महेश्वरः महांश्चासौ ईश्वरश्चेति तथा सर्वेश्वरोऽपि शिवः पुनः वारांतरे धृतामित्यर्थः ॥ यदीयां यस्य हरेः सम्बन्धिनीं मनोभवस्य कन्दर्पस्य उद्भावने प्रकाशने विषये कारणं हेतुभूतां कारणमिति नित्यनपुंसकत्वात् लिङ्गभेदेपि वेदाः प्रमाणमित्यादाविव विशेषणम् ॥ मोहिनीं मोहिनीरूपां तनूं मूर्तिं श्रिया तच्छोभयाविमुह्य मोहं प्राप्य सम्भोक्तुमनाः सम्भोक्तुं रन्तुं मनो यस्य स तथा भूतोऽभवदिति शेषः ॥ 'तुंकाममनसोरपीति' मलोपः ॥ पुरा किल विष्णुः विवदमानयोर्देवासुरयोः अमृतपरिवेषणावसरे मोहिनीरूपेण सर्वान् मोहयामास तथा समयान्तरेऽपि वशित्वादिगुणेनाभिमानिनं शिवं पुनस्तद्रूपं धृत्वा विह्वलयामासेति पुराणवार्ता ॥ मनोभवोद्भावनकारणमिति पृथक् विशेषणं वा हरेः॥ पुनः पक्षान्तरे कृष्णावतारे इत्यर्थः ॥ मनोभवस्य प्रद्युम्नरूपिणः कन्दर्पस्य उद्भावने उत्पादने कारणं हेतुभूतमिति तदर्थः ॥

दुर्गापक्षे ॥ महेश्वरः सर्वेश्वरोपि शिवः विमुह्य मोहं प्राप्य तद्वशीभूयेत्यर्थः ॥ यदीयां यस्या दुर्गायाः सम्बन्धिनीं श्रिया शोभया मोहयितुं शीलं यस्यास्तां मोहिनीं चित्ताकर्षिणीमित्यर्थः ॥ तनूं पार्वतीरूपां सम्भोक्तुमनाः रन्तुमनाः सन् पुनः । मनोभवस्य उद्भावने स्वनेत्रानलदग्धस्यापि कन्दर्पस्य पुनरुज्जीवने विषये कारणं हेतुभूत आसीदिति शेषः ॥ *तथा च कालिदासः ' परिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतोहरः । उपलब्धसुखः स्मरं तदा वपुषा स्वेन समग्रयिष्यति '* ॥ इति कुमारसम्भवे रतिविलापसर्गे ॥

इतः प्रभृति हरेर्दशावतारान् दुर्गाया दशमहाविद्याभेदांश्च प्रदर्शयन् क्रमेण तावेव विशिनष्टि ॥ दशावतारास्तु ' मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः । रामो रामश्च रामश्च बुद्धः कल्की च ते दश' ॥ इत्युक्तरूपाः दश महाविद्यास्तु ॥ 'काली तारा महाविद्या षोडशी भुवनेश्वरी । भैरवी छिन्नमस्ता च विद्या धूमावती तथा । बगला सिद्धविद्या च मातङ्गी कमलात्मिका एतादशमहाविद्याः सिद्धविद्याः प्रकीर्तिताः' ॥ इति चामुण्डा तन्त्रोक्तरूपाः । अत्रादौ मत्स्यावतारं कालीरूपं च प्रस्तौति—

१६१. श्रुतिमिति ॥ मत्स्यपक्षे । यद्वपुः यस्य हरेः वपुः मत्स्यशरीरं अभीष्टदं वाञ्छितवरप्रदमेव स्मर्तॄणां भवतीत्यर्थः ॥ किं भूतं तत् कालेभवं कालिकं भवार्थे ठञ् ॥ प्रळयकालीनमित्यर्थः ॥ भैरवोऽतिमहत्वाद्भयङ्करः । यो रोहितो मत्स्यविशेषः ॥ स एव आत्मा स्वरूपं यस्य तत् तथाभूतं सत् श्रुतिं वेदं । शङ्खासुरापहृतमित्यर्थः ॥ प्रतिष्टुत्य प्रळयसमुद्रजलादुद्धरणेन प्रत्येकं प्रस्तुत्य चलत्सु स्वस्य खेलनादुल्लोलत्सु शवेषु समुद्रपानीयेषु 'शवः स्यात्कुणपे पुमान् । नपुंसकं तु पानीये' इति मेदिनी ॥ उचितः युक्तः अञ्चितः पूजितश्च उत्सवो महो यस्य ॥ 'मह उद्धव उत्सव ' इत्यमरः । तत् चलच्छवोचिताञ्चितोत्सवम् ॥ उल्लोलित-

१६२. परा यदीयापि तनूः स्वकर्परोद्धृतत्रिलोकी जडतापहारिणी।
महोग्रताराजितगुह्यरूपिणी स्मरेद्धरिं तं हरिवाहिनीं च ताम्॥

प्रळयसमुद्रजले समुचितोत्सवीत्यर्थः॥ तथाभूतं यद्वपुः तं हरिं स्मरेदित्यर्थः॥ महारोहित मत्स्यरूपो हि भगवान् शाङ्खासुरापहृतान् वेदान् प्रळयपयोधिजलादुद्दधारेति पुराणम्॥

काळीरूपपक्षे॥ कालिकाया इदं कालिकं तस्येदमित्यण्॥ कालिकास्वरूपमित्यर्थः॥ यद्वपुः यस्या दुर्गाया मूर्त्यन्तरमित्यर्थः॥ अभीष्टदं भक्ताभीष्टवरप्रदमेव भवतीति शेषः॥ किं भूतं तद्वपुः चलन्तौ दोळायमानौ यौ शवौ कुणपौ 'शवःस्यात्कुणपे पुमा'निति मेदिनी॥ तौ उचितौ अवतंसत्वेन समुचितौ। यस्याः यस्यां वा तां चलच्छवयोरवतंसभूतयोरुचितां भूष्यत्वेन समुचितां वा तथाभूतां कृत्वा श्रुतिं कर्णयुगलं जातावेकवचनम्। 'वेदे श्रवसि च श्रुति'रित्यमरः॥ प्रतिष्टुत्य प्रस्तुत्य प्रकटय्येत्यर्थः। 'कर्णावतंसतां नीतशवयुग्मभयानका'मित्युक्तेः॥ चितायां चितौ उत्सवो यस्य तत् चितोत्सवं चितामध्यगतमित्यर्थः॥ प्रकटितचितायां हरवधूं प्रविष्टां सन्तुष्टामित्यादि कालिकर्पूरस्तोत्रे॥ भैरवं महाकालभैरवं भैरवे वा भैरवोपरीत्यर्थः॥ रोहित आरोहितः णिजन्तात् क्तः भैरवोपरि प्रादुर्भावित इत्यर्थः॥ आत्मा स्वरूपं यस्य तत् शवरूपमहाकालहृदयोपरि संस्थितामित्यादि तद्ध्यानम्॥ तथा भूतं यद्वपुस्तां हरिवाहिनीं स्मरेदित्यर्थः॥

अथ कूर्मावतारं ताराविद्यां च प्रस्तौति॥

१६२. परेति॥ यदीया यस्य हरेः सम्बन्धिनी परा अन्यापि तनूः द्वितीयावताररूपास्तीत्यर्थः॥ किं भूता सा महोग्रताराजितगुह्यरूपिणी महान् विपुलतरः उग्र उत्कटः 'ऊग्रः शूद्रासुतेक्षत्राद्रुद्रे पुंसि त्रिपूत्कटे' इति मेदिनी॥ भूभारवहनादि दारुणकर्मेत्यर्थः। महांश्चासौ उग्रश्च महोग्रः॥ यद्वा महसा वैष्णवतेजोविशेषेण॥ अग्रः प्रधानः तस्य भावस्तत्ता तया राजितं विराजितं यत् गुह्यरूपं कमठरूपं गुह्यं रहस्युपस्थे च 'गुह्यः कमठदंभयो'रिति विश्वः॥ तदस्या अस्तीति तथा। स्वकर्परे निजपृष्ठखर्परोपरि उद्धृतायास्त्रिलोक्यालोकत्रयस्य जडे जले डलयोरैक्यात् यस्तापो ब्रह्माण्डावरणरूपे जले आलम्बनाभावप्रयुक्तः सन्तापः तं हर्तुं शीलं यस्याः सा तथा भूता। अत्रेदं पौराणिकतत्त्वं ब्रह्माण्डमध्ये चतुर्दशभुवनानि वर्तन्ते तत्र सप्तपातालानामधस्तात् शेषो भूमण्डलं बिभर्ति। तस्मादधस्तात् ब्रह्माण्डस्याधः कपालं स्वपृष्ठे गृहीत्वा कमठरूपी भगवान्। ब्रह्माण्डावरणभूते महाकारुण्यजले वर्तते इति॥

तथा यदीया तनूः तं हरिं स्मरेदित्यर्थः॥

पक्षान्तरे॥ परा अन्यापि द्वितीया विद्यास्वरूपेत्यर्थः पराशक्तिरूपा वा यदीया यस्या दुर्गायाः सम्बन्धिनी तनूः स्वकर्परे निजकरधृतकपाले इत्यर्थः॥ उद्धृता गृहीता या त्रिलोक्याः लोकत्रयस्य जडता जाड्यं तामपहरतीति तथा। 'जाड्यं न्यस्य कपालके त्रिजगतां हन्त्यूग्रतारास्त्वय'मिति तद्ध्यानेऽभिहितत्वात्महोग्रामहोग्रस्वभावा तारयति लोकानिति तारा च। महोग्रतारापदवाच्येत्यर्थः॥ अजितमपराजितं देवदैत्यादिभिरित्यर्थः॥ गुह्यं गोपनीयं च सर्वतन्त्रेषु रहस्यभूतमित्यर्थः॥ यद्रूपं तदस्याअस्तीति तथाभूता यदोया तनूः तां हरिवाहिनीं दुर्गां स्मरेदित्यर्थः॥

**१६३. विधीशशेषाश्रितरुद्रदैवतैः समञ्चितोदग्रखरूपरिस्थिरः।**
**श्रियार्चितोयद्धृतकौलविग्रहः स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥**

वराहावतारं षोडशीविद्यां च प्रस्तौति ॥

१६३. विधीत्यादि ॥ यद्धृतकौलविग्रहः ॥ येन हरिणा धृतो गृहीतः। कोलस्य वराहस्यायं कौलः वराहः सूकरो घृष्टिः कोलः 'पुत्री किरिः किटि'रित्यमरः ॥ तस्येदमित्यण् वराहसम्बन्धीत्यर्थः ॥ विग्रहो देहः। विधिर्ब्रह्मा ईशो महादेवः ॥ शेषोऽनन्तः तान् आश्रिताः तत्प्रधाना इत्यर्थः ॥ ये रुद्रा रुद्रगणाः 'रुद्राश्चगणदेवता' इत्यमरः। दैवतानि देवगणाश्च ॥ तैर्ब्रह्मादिदेवगणैः समञ्चितः सम्यक् पूजितो य उदग्र उन्नताग्रः खरुर्दन्तः तस्योपरि स्थिराभूमण्डलं यस्य सः ॥ 'भूर्भूमिरचलानन्ता रसाविश्वंभरा स्थिरे'त्यमरः ॥ निखिलदेवनमस्कृतदन्ताग्रस्थितवसुन्धर इत्यर्थः ॥ श्रिया लक्ष्म्या शोभया वराहोचितवेषरचनया वा अर्चितः पूजितः ॥ 'श्रीर्वेषरचना शोभाभारतीसरळद्रुमे। लक्ष्म्यां त्रिवर्गसम्पत्तौ वेषोपकरणे मतौ'। इति विश्वमेदिन्यौ खरुरिति ॥ खरुशङ्कुपीयु नीलंगु लिगु इत्युणादि सूत्रेण खनतेः कुप्रत्ययोरश्चान्तादेशो निपातनात्। 'खरुर्दन्तेहरेदर्पेहये श्वेते तु वाच्यवत्' ॥ इति विश्वत्रिकाण्डशेषौ। यद्धृतकौलविग्रह उक्तरूपस्तं हरिं स्मरेदित्यर्थः ॥

पक्षान्तरे ॥ स प्रसिद्धः यद्धृतकौलविग्रहः। यया दुर्गया धृतः कौलाभिमतो विग्रहः कौलविग्रहः ॥ *शाकपार्थिवादित्वादुत्तरपदलोपः कौल इति कुले कुलाचारे रतः* ॥ कुलं कुलतत्वं वेत्तीति वा कौलः अण् *दिव्यवीरपशुभावत्रयान्तर्गतदिव्यभावरतः* ॥ *स तु ब्रह्मज्ञानी* ॥ उक्तं च कुलार्णवतन्त्रे '*दिव्यभावरतः* कौलः सर्वत्र समदर्शनः' इति ॥ *कुलमधिकृत्य कृतो ग्रन्थोपि कौल इत्युच्यते। स च कुलाचारतत्त्वविधि*-प्रतिषेधोपदेश साध्यसाधनव्यापारविशिष्टकुलोपनिषदादिग्रन्थविशेषः ॥ कौलग्रहणं तत्र तस्याधिक-प्राशस्त्यदर्शनात्। कोयं कौलविग्रहः श्रिया श्रीविद्या स्वरूपेण अर्चितः पूजितः ॥ अभेदे तृतीया श्री विद्या या एव षोडशी त्रिपुरा सुन्दरीत्यादि नामानि तन्त्रेषु प्रसिद्धानीति ज्ञेयानि ॥ किं स्वरूपोयं विग्रहः विधि-र्ब्रह्मा ईश ईश्वरः शेषमाश्रितः शेषाश्रितो विष्णुः ॥ शेषशायित्वात्। रुद्रस्तन्नाख्यो देवविशेषः ॥ तैश्चतुर्भि-र्दैवतैः सहसहार्थे तृतीया। मञ्चितो मञ्चः कृतः मचिधातोः क्तप्रत्ययः ॥ यद्वा मञ्चः सञ्जातोऽस्य मञ्चितः तारकादित्वादितच् पर्यङ्की कृत इत्यर्थः ॥ 'मञ्चपर्यङ्कपल्यंका' इत्यमरः। उदग्र उच्छ्रितश्च 'उच्चप्रांशून्नतो-दग्रोच्छ्रितास्तुङ्गे' इत्यमरः ॥ सर्वोपरिस्थितत्वात् सर्वप्राधान्याच्च तथा त्वं ॥ तथाभूतो यः खरुः शिवः खरुः शिवे हये दर्पे दन्ते चेत्यादिमेदिनी। परमशिव इत्यर्थः ॥ तस्योपरितिष्ठतीति मञ्चितोदग्रखरूपरिस्थिरः मञ्चितइत्यस्य सापेक्ष्यत्वेपि गमकत्वात्समासः। अत्रायं भावः ॥ ब्रह्मविष्णुरुद्रेश्वररूपान् चतुरो देवान् पल्यंकस्य पादचतुष्टयम् कल्पयित्वा तदुपरिभागे सदाशिवपदवाच्यं परमशिवं प्रच्छदपटीकृत्य तत्र विराजिते भगवती राजराजेश्वरी मूर्तिरिति बोद्धव्यम् ॥ उक्तं च 'ब्रह्माविष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ एते पञ्च महाप्रेताः शिवा मञ्चे व्यवस्थिता' इति। श्रीमच्छङ्कराचार्यपादैरप्युक्तमानन्दलहर्याम् ॥ 'शिवाकारे मञ्चे परमशिवपर्यंकनिलया'मित्यादि। तथाभूतो यद्धृतकौलविग्रहस्तां हरिवाहिनीं स्मरेदित्यर्थः ॥

१६४. ज्वलत्प्रभालीनखरांशुगोपितासुरासुरार्च्योच्छ्रितपञ्चवक्त्रका ।
यदात्मभूता भुवनाधिदेवता स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥
१६५. यदीयमूर्तिर्बलिपूजिताशयाऽभयप्रदानोन्नतभास्वदाकृतिः ।
जगत्त्रयाराध्यपदापि भैरवी स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥

---

इदानीं नृसिंहं भुवनेश्वरीं च प्रस्तौति ॥

१६४. ज्वलदित्यादि ॥ नृसिंहपक्षे ज्वलन्ती जाज्वल्यमाना प्रभाली प्रभापटलं यस्याः सा ज्वलत्प्रभाली ॥ नखरांशुभिः नखकिरणैः गोपित आच्छादितः व्याकुलीकृतो वा गुपगोपने इत्यस्मात् । गुपव्याकुले इत्यस्माद्वा धातोः कर्मणिक्तः ॥ असुरो हिरण्यकशिपुर्यया सा । सुरैः समस्तदेवैरर्च्या पूजनीया उच्छ्रितं सञ्जातं प्रवृद्धं वा । 'उच्छ्रितं त्रिषु सञ्जाते समुन्नद्धप्रवृद्धयो'रिति मेदिनी । पञ्चवक्त्रस्य सिंहस्य कं शिरो यस्याः सा 'कं शिरोऽम्बुनो'रित्यमरः ॥ पञ्चवक्त्र इति मुखं पादाश्च पञ्चवक्त्रमिव आस्यमिव आननमिवेत्यादि व्युत्पत्या पञ्चवक्त्र पञ्चास्य पञ्चाननेत्यादि नाम्ना व्यवह्रियते सिंहः ॥ तथाभूता भुवनाधिदेवता भुवनेष्वधिका महिमातिशायिनी देवता नरसिंहरूपेत्यर्थः ॥ यदात्मभूता । यस्य हरेरात्मस्वरूपा यदभिन्नेत्यर्थः ॥ तं हरिं स्मरेदित्यर्थः । हिरण्यकशिपोर्दैत्यस्य वधार्थं तत्सभायामाविर्भूतो नरसिंहाकारो भगवान् तं नखैर्विदारयामासेति पुराणम् ॥

भुवनेशीपक्षे ॥ ज्वलन्त्यो याः प्रभाः शरीरत्विषः ताभिर्लीनः निष्प्रभ इत्यर्थः खरांशुस्तिग्मांशुः सूर्य इति यावत् । यस्याः सा 'तिग्मं तीक्ष्णं खरं तद्व'दित्यमरः । सूर्याधिकप्रभेत्यर्थः ॥ उक्तं च तद्ध्याने 'उद्यदिनद्युतिमिन्दुकिरीटा'मित्यादि । गोपिता व्याकुलीकृता असुरा यया सा गुपव्याकुलत्वे इत्यस्मादेव कर्मणिक्तः ॥ ज्वलत्प्रभालीनखरांशुश्चासौ गोपितासुरा चेति विग्रहः ॥ उभयोर्विशेषणत्वेऽपि उत्तरस्य विशेष्यत्वविवक्षया समासः ॥ सुरार्च्या देवैः पूज्या यद्वा ज्वलत्प्रभया लीनो हतप्रभः खरांशुः सूर्यः गां नेत्रं पितः प्राप्तो यस्याः सा तथोक्ता । देव्या दक्षिणनेत्रस्य सूर्यात्मकत्वात् ॥ यत्तेजसाऽभिभूतः सूर्यः नेत्रमाश्रितवानित्यर्थः ॥ 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले लक्ष्यदृष्ट्याश्त्रियां पुंसि गौ'रित्यमरः ॥ पित इति तौदादिकस्य पिगताविति धातोर्गत्यर्थकर्मकत्वात्कर्तरिक्तः सुरैः असुरैश्चार्च्या सुरासुरपदं मनुष्याणामप्युपलक्षकम् । तेन देवदैत्यमनुष्यैः पूज्येत्यर्थः ॥ उच्छ्रित उन्नतिं प्रापितः पञ्चवक्त्रः शिवो यया सा उच्छ्रितपञ्चवक्त्रका । बहुव्रीहिद्योतकः कप्रत्ययः ॥ यद्वा उच्छ्रितं प्रवृद्धं पञ्चवक्त्रस्य कं सुखं यया यतो वा सा तथाभूता भुवनाधिदेवता भुवनेष्वधिकारिणी देवता भुवनेश्वरीत्यर्थः ॥ यद्वा भुवना तदाख्या अधिदेवता अधिका सर्वोत्कृष्टा देवीत्यर्थः ॥ 'भुवनाभुवनेशानि भुवनानन्दवर्धि'नीत्यादि तत्सहस्रनामादौ पाठात् यदात्मभूता यस्या दुर्गाया स्वरूपभूता तां हरिवाहिनीं दुर्गां स्मरेदित्यर्थः ॥

वामनं भैरवीं चाह ॥

१६५. यदीयेति ॥ यदीया यस्य हरेः सम्बन्धिनी मूर्तिः वामनरूपा बलेर्विरोचनपुत्रस्य दानवविशेषस्य पूजितः प्रशंसितो य आशयोऽभिप्रायः । आत्मना सह सर्वं भगवदर्पणं कृत्वा कृतार्थो भवेयमित्याकाररूपः 'छन्दोभिप्राय आशय' इत्यमरः ॥ तेनाभयप्रदा तस्यैवाभयवरप्रदायिनी । न उन्नतानोन्नतासुप्सुपेति समासः ॥ नैकधेत्यादिवत् । खर्वेत्यर्थः भास्वती ब्रह्मतेजसा जाज्वल्यमाना च आकृतिराकारो यस्याः

१६६. प्रतर्प्य सोद्रेकविराङ्गलासृजा मुखे पितृणां विपिने प्रमोदिनी ।
तनूर्यदीया जननी पृथक् शिराः स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥

सा तथाभूतापि जगतां त्रयं जगत्त्रयम् तस्मिन् एकदा स्वर्गमर्त्यपातालेषु त्रिषु स्थानेष्वित्यर्थः ॥ आराध्यानि पदानि त्रयः पादा यस्याः सा तथा भूता । अतएव त्रिविक्रमरूपत्वात् भैरवी भयङ्करस्वरूपा तथा यदीय मूर्तिः तं हरिं स्मरेदित्यर्थः ॥ पुरा किल कपटवामनरूपी विष्णुः बलिनामासुरं पादत्रयपरिमितां भूमिं याचयित्वा तेन प्रदत्तं त्रिभुवनं त्रिविक्रमरूपेण व्याप्नुवानिति पुराणवार्ता ॥

भैरवीपक्षे ॥ यदीय मूर्तिः यस्या दुर्गायाः सम्बन्धिनी भैरवीमूर्तिः बलिभिः पश्वाद्युपहारद्रव्यैः ॥ पूजिता लोकैरिति शेषः ॥ शययोः पाण्योः अभयं प्रदीयत इति प्रदानं वरश्च यस्याः सा 'पञ्चशाखः शयः पाणि'रित्यमरः वराभयकरेत्यर्थः । स्रक् पुस्तकयोरपि तस्याश्चतुर्भुजायाः करधृतत्वेऽपि अभयप्रदानद्वयप्रदर्शनं देव्या भक्तानुग्रहप्रद्योतनार्थम् ॥ यद्वा अभयप्रदानपदद्वयं तद्भिन्नयोरपि तयोरुपलक्षकं । तेन नशयद्वयमिति ॥ उन्नतभास्वदाकृतिः ॥ उन्नतः प्रभातिशायित्वेन उन्नतिं गतः यो भास्वान् सूर्यः तस्येवाकृतिर्यस्याः सा 'भास्वद्विवस्वत्सप्ताश्वे'त्यादि सूर्यपर्यायेऽमरः ॥ जगत्त्रये त्रिभुवनेपि आराध्ये सेवनीये पदे पादपद्मे यस्याःसा । भैरवी तदाख्यया प्रसिद्धा च तथाभूता यदीय मूर्तिः तां हरिवाहिनीं स्मरेदित्यर्थः ॥ भैरव्या ध्यानस्वरूपं यथा । 'उद्यद्भानुसहस्रकान्तिमरुणक्षामां शिरो मालिकां रक्तां लिप्तपयोधरां जपवटीं विद्यामभीतिं वरम् ॥ हस्ताब्जैर्दधती'मित्यादि ॥

अथ परशुरामं च्छिन्नमस्तां च प्रस्तौति ॥

१६६ प्रतर्प्येति ॥ तत्र परशुरामपक्षे । पृथक् कृतं विच्छिन्नं शिरो यस्याः सा पृथक् शिराः ॥ जननी पृथक् शिरा यया सा तथोक्ता । आहिताग्न्यादित्वाद्विशेषणस्य वैकल्पिको परनिपातः ॥ आहिताग्न्यादेराकृतिगणत्वात् । मातृ शिरश्छेत्त्रीत्यर्थः ॥ तथाभूता यदीया यस्य हरेः सम्बन्धिनी तनूः मूर्तिः । परशुरामरूपेत्यर्थः ॥ उद्रेकेण सहितं सोद्रेकम् । प्रवृद्धमित्यर्थः ॥ यत् विराजां क्षत्रियाणां 'क्षत्रियो विराड्' इत्यमरः । गलासृक् कण्ठनिःसृत रुधिरम् तेन पितॄणां जमदग्निप्रमुखानां निजपितृगणानां मुखे वक्त्रे प्रतर्प्य सन्तर्पणं कृत्वा विपिने वनाश्रमे प्रमोदिनी प्रमोदभाक् । तपस्विनी सती वनाश्रमे स्थितवतीत्यर्थः ॥ तथाभूता यदीया तनूः तं हरिं भजेदित्यन्वयः । दुष्टराजकुलनिग्रहार्थं परशुरामरूपेणावतीर्णो हि भगवान् पित्रा जमदग्निनादिष्टो मातू रेणुकायाः सभार्यं जलक्रीडारतं चैत्र रथनामानं नृपं दृष्ट्वा व्यभिचरन्त्याः शिरः चिच्छेद । तेन कर्मणा सन्तुष्टस्य पितुः सकाशात् मातुः पुनरुत्थानं वधास्मरणं चेत्यादि वरान् लब्धवान् । पुनरनेन बलदर्पात् स्वाश्रमवत्सापहरणापराधेन हतस्य कार्तवीर्यार्जुनस्य पुत्राः कदाचिद्रामविरहितमाश्रममागत्य अमर्षाज्जमदग्निं निजघ्नुः रामस्तु अस्मात् पितृवधामर्षात् त्रिसप्तकृत्वः पृथिवीं निःक्षत्रियां कृत्वा तद्रक्तधारया पितृतर्पणं कृतवानिति पुराणम् ॥

छिन्नमस्तापक्षे ॥ जनयति लोकानिति जननी । बाहुलकात् कर्तरि ल्युट् ङीप् जगज्जनयित्रीत्यर्थः ॥ पृथक् विच्छन्नं शिरो यस्याः सा पृथक् शिराः छिन्नमस्तेति नाम्ना प्रसिद्धेत्यर्थः ॥ सा यदीया यस्या दुर्गायाः सम्बन्धिनी तनूः मूर्तिः तां दुर्गां स्मरेदित्यर्थः ॥ किं स्वरूपा सा सोद्रेकमुच्छृङ्खलं प्रवृत्तं विशेषेण राजत इति विराट् विकाशमानं च यद्गलासृक् स्वकबन्धाद्गलमार्गेण निःसृतं रुधिरं तेन विराडिति गलविशेषणं वा सोद्रेक विराडिति पृथक् पदच्छेदात् देव्या विशेषणं वा यथायथं ज्ञेयम् । मुखे निज-

१६७. कुरूपशीलादृतसूर्पपाणिरुट् प्रतर्जनोद्वृत्तपरान्तकच्छविः ।
यतः सकाकाक्षि विकृन्नभिद्यते स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥

१६८. गदाग्रियाभिष्टुतपाणिकर्षितप्रलम्बसापत्न्यरसज्ञमुन्मदम् ।
यदीयरूपं किल कामपालकं स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥

---

वामकरधृत स्वकीयवक्त्रे प्रतर्प्य रुधिरेण स्वात्मसन्तर्पणं कृत्वा स्थितेत्यर्थः ॥ पितॄणां विपिने वने श्मशाने इत्यर्थः ' श्मशानं स्यात्पितृवन 'मित्यमरः प्रमोदिनी प्रीतिमतीत्यर्थः ॥ तद्ध्यानस्वरूपं यथा । ' प्रत्यालीढपदां सदैव दधतीं छिन्नं शिरः कर्तृकां दिग्वस्त्रां स्वकबन्धशोणितसुधाधारां पिबन्तीं मुदा ' इत्यादि ॥

अथ श्रीरामं धूमावतीं च प्रस्तौति ॥

१६७. कुरूपेति ॥ तत्र श्रीरामपक्षे काकाक्षि विकृत् काकस्य तन्नाम्नः पक्षिविशेषस्य अक्षि चक्षुः तद्विकरोति एकचक्षुपोपहरणेन विकृतिं करोतीति तथा । पुरा किल रामचन्द्रः सीताप्रद्वेषिणः काकस्य चक्षुरेकं बाणप्रयोगेण हृतवानिति रामायणम् । स तथा प्रसिद्धो राम इत्यर्थः । यतः हरेः ॥ न भिद्यते हरेरभिन्न एवेत्यर्थः । किं भूतः सः पाणौ करे रोहतीति पाणिरुट् नखः ॥ पुनर्भुवः 'कररुहो नरखोऽस्त्री'त्यमरः। शूर्पवत् पाणि रुट् यस्याः सा शूर्पपाणि रुट् शूर्पणखा नाम्नी रावणभगिनी कुत्सितं रूपं शीलं स्वभावश्च येषां तैः राक्षसैरित्यर्थः ॥ आदृता अर्चिता या शूर्पपाणि रुट् शूर्पणखा तस्याः प्रतर्जनेन नासाकर्णच्छेदनादिना भर्त्सनेन हेतुना उद्वृत्ता दुर्वृत्ताः स्वप्रद्वेषण सीतापहरणादिदुष्टकर्मरता इति यावत् । ये पराः शत्रवः खरदूषणप्रभृतय इत्यर्थः ॥ तेषु अन्तकच्छविः यमसदृश इत्यर्थः ॥

धूमावतीपक्षे ॥ कुत्सितं रूपं स्वरूपं शीलं स्वभावश्च यस्याः सा 'आदृतमर्चितं आदृतौ सा दराचिंता' वित्यमरः शूर्पं प्रस्फोटनं 'प्रस्फोटनं शूर्पमस्त्री'त्यमरः ॥ पाणौ यस्याः सा चासौ रुषा क्रोधेन प्रतर्जनं करविधूननेन भर्त्सनं यस्याः सा च रुषा तर्जयन्तीत्यर्थः ॥ उभयोर्विशेषणयोर्विशेष्यविशेषणसमासः । परस्य विशेष्यत्वविवक्षणात् । उद्वृत्ता दुर्वृत्ता ये पराः तेषामन्तकच्छविः यमोपमा काकेन सहिता सकाका काकारूढा 'काकध्वजरथारूढा वा । काकध्वजरथारूढे 'ति ध्यानान्तरोक्तेः ॥ अक्षिणी विकरोति विकारयुक्ते करोतीति अक्षिविकृत् कुटिलेक्षणत्वाद्धूम्राक्षित्वाच्च । एतैर्विशेषणैरुपलक्षिता धूमावती यतः दुर्गाया न भिद्यते तां स्मरेदित्यर्थः । यत्र विशेषणद्वारा विशेष्यलाभः स सुधर्मतानामार्थगुण इति काव्यप्रकाशादौ । धूमावत्या ध्यानस्वरूपं यथा—'काकारूढाऽतिकृष्णा प्रविरलदशना मुक्तकेशी विरक्ता धूम्राक्षी क्षुत्तृषार्ता प्रतिभटचकिता चञ्चला कामलोला । हृष्टा पुष्टालसाङ्गी श्रमजलमलिना व्यक्तदर्पा विरूपा भूतिं धूमावती वः प्रदिशतु विपुलां धूतसूर्पाग्रहस्ते'ति ॥

अथ बलरामं बगलां च प्रस्तौति ॥

१६८. गदेत्यादि ॥ तत्र बलरामपक्षे यदीयरूपं यस्य हरेः रूपान्तरं कामान् पालयतीति कामपालकं किलेति प्रसिद्धौ कामपाल इति प्रसिद्धाभिधानमित्यर्थः ॥ ' रामः कामपालो हलायुध ' इत्यमरः । किं भूतं तत् गदस्य वसुदेवपुत्रविशेषस्य अग्रियोऽग्रजः । श्रीकृष्ण इत्यर्थः ॥ 'पूर्वजस्त्वग्रियोऽग्रजः' इत्यमरः । 'गदः कृष्णानुजे' इति हैमः । तेन श्रीकृष्णेनाभिष्टुतमीडितम् अग्रजत्वात् पाणिना करेणाकर्षितः पीडितः

**१६९. अधिश्रिमातङ्गमतिप्रतिष्ठितं स्फुटं च खड्गादिभिरेव यद्वपुः ।**
**दयामयं वेदविगीतगौरवं स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥**

करमुष्टिना हत इति यावत् । यः प्रलम्बः दानवविशेषः तस्मिन् यः सापत्न्यरसः सपत्नस्य वैरिणः कर्म-भावो वा सापत्न्यं ब्राह्मणादित्वात् ष्यञ् 'रिपौ वैरि सपत्नारी'त्यमरः ॥ तदेव रसः स्वादविशेषः तं जानातीति तथा । आतोऽनुपसर्गे इति कः प्रलम्बासुरविनाशकमित्यर्थः ॥ गदाग्रियाभिष्टुतं च तत् पाणि कर्पितप्रलम्बसापत्न्यरसज्ञं चेति समासः । उन्मदं उद्गतमदं सर्वदा कादम्बरीपानरतत्वादिति भावः ॥ तथाभूतं यदीयरूपं तं हरिं स्मरेदित्यर्थः । प्रलम्बोनाम दानवविशेषः सचैकदा बाह्यवाहकलक्षणक्रीडायां गोपालैः सह क्रीडमानः समये पराजितः बलरामं वहन् कृष्णमसहमानो दूरं प्रागात् । तदभिप्रायं जानन् रामः तच्छिरसि मुष्टिप्रहारेण तं जघानेति भागवतम् ॥

बगलापक्षे ॥ कामं यथेष्टं पालयति भक्तानिति कामपालकं । यदीयरूपं यस्या दुर्गायाः सम्बन्धि बगलास्वरूपं गदा तन्नामायुधविशेषः सैवाग्रियं प्रधानं वस्तु तेन गदावरेणेत्यर्थः ॥ अभिष्टुतोबन्दितः पाणिर्दक्षिणकरो यस्य तत् यद्वा गदा अग्रिया अभिष्टुता च पाणौ यस्य तत् बहुपदो बहुव्रीहिः यत्करं प्राप्य गदायाः प्राधान्यमभिष्टुतत्वं चेत्यर्थः ॥ कर्पिता वामकरेणाकर्षिता अतएव प्रलम्बत इति प्रलम्बा लम्बमाना च पचाद्यच् सपत्नएव सापत्न्यो वैरी स्वार्थेष्यञ् । तस्य रसज्ञा जिह्वा येन तत् 'रसज्ञा रसना जिह्वे'त्यमरः ॥ उन्मदं मादकद्रव्येणोन्मत्तं तथाभूतं यदीयरूपं तां हरिवाहिनीं स्मरेदित्यर्थः ॥ अत्रापि विशेषणैर्बगलारूप-विशेष्यार्थलाभः तथा च 'जिह्वाग्रमादाय करेणदेवीं वामेन शत्रून् परिपीडयन्तीं । गदाभिघातेन च दक्षिणेन पीताम्बराढ्यां द्विभुजां नमामी'ति बगलाध्यानम् ॥

अथ बौद्धावतारं मातङ्गीविद्यां च प्रस्तौति ॥

१६९ अधिश्रीति ॥ बुद्धपक्षे यद्वपुः यस्य हरेः सम्बन्धि बौद्धशरीरं अधिश्रि अधिकाश्रीर्यस्य यस्मिन् वा तत् श्रीघनत्वात् ह्रस्वो नपुंसक इति ह्रस्वत्वं 'मुनीन्द्रः श्रीघनः शास्ता' इत्यादि तत्पर्यायेष्वमरः ॥ मातङ्गोऽर्हदुपासकविशेषः तथा हेमचन्द्रोक्तेः तस्य मत्या बुद्ध्या प्रतिष्ठितं सञ्जातप्रतिष्ठं । तारकादित्वादि-तच् गौरवान्वितमिति यावत् मातङ्गस्य मतिरिव मतिर्येषां ते मातङ्गमतयः तैः प्रतिष्ठितं वा यद्वा मातङ्गा म्ले च्छजातिविशेषाः ॥ 'चण्डालप्लवमातङ्गे'त्यादि अमरः तेषां मत्या प्रतिष्ठितं वेदविरुद्धार्थानुष्ठातृत्वात् खड्गो बुद्धभेदः 'खड्गो गण्डकश्रृङ्गासि बुद्धभेदे'ष्विति विश्वमेदिन्यौ । तदादिभिर्बौद्धावतारविशेषैरित्यर्थः तत्स्वरूपै-रित्यर्थः ॥ धान्येन धनं इतिवत् अभेदे तृतीया स्फुटं प्रव्यक्तं प्रख्यातमिति यावत् । दया परदुःख प्रहाणेच्छा तन्मयं तत्प्रचुरं दयापूर्णमित्यर्थः ॥ विगीतं निन्दितं गौरवं प्राशस्त्यं येषां ते विगीतगौरवाः वेदाः विगीत-गौरवा येन तत् वेदेषु पशुहिंसा दर्शनात् तन्निंदकमित्यर्थः ॥ विगीतशब्दः विरुध्य गीयत इति व्युत्पत्त्या निन्दितरूपार्थवाचकः । तथा च अविगीत शिष्टाचारविषयत्वादित्यादिमङ्गलवादादौ प्रयोगः ॥ तथाभूतं यद्वपुः तं हरिं स्मरेदित्यर्थः ॥ बुद्धानां तावत् बहुभेदाः सन्ति तत्र बौद्धशास्त्रसमूहेषु सम्प्रोक्ताः पञ्चविंशति-र्बुद्धा दृश्यन्ते तेष्वपि शुद्धोदनौरसात् मायादेवीगर्भजातः शाक्यसिंहसर्वार्थसिद्धार्कबन्धु गौतमेति नाम चतुष्टयेन प्रसिद्धोऽन्तिमतमोलोकविश्रुतो बुद्धः कपिलवस्तुनगरे कलेः चतुःशतषडशीत्यधिकेषु द्विसहस्र-मितेषु गतेष्वब्देषु शुक्रवासरे सुरद्विषां सम्मोहनाय साक्षाद्विवेकमूर्तिः स्वेच्छाविग्रहेण प्रादुर्बभूवेत्यादि तद्वि-वरणं ललितविस्तरादाववगन्तव्यम् ॥

१७०. अनेकपापात्मविसृष्टकल्किता स्फुटां श्रियाकाश्चनभासमावहन् ।
यदीयकायः कृतधर्मसंश्रयः स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥

मातङ्गीपक्षे ॥ मातङ्ग्या इदं मातङ्गं तस्येदमित्यण् । यस्येति चेतीकारलोपः मातङ्गीसम्बन्धि यद्वपुः यस्या दुर्गाया शरीरं अधिका श्रीः शोभा यस्य तत् अधिश्रि अतिप्रतिष्ठितम् अतिशयितप्रतिष्ठा-युक्तं खड्गादिभिरायुधविशेषैः वेदैर्बाहुदण्डैरसिखेटकपाशाङ्कुशवरामिति तद्ध्यानोक्तरूपैरित्यर्थः ॥ स्फुटं प्रव्यक्तमेव दयामयं भक्तानुकम्पि वेदेषु आगमेष्वपि वेदपदस्योपलक्षणात् विगीतं विशेषेणगीतं गौरवं यस्य तत् निखिलवेदागमप्रतिपाद्यमहिमेत्यर्थः ॥ तां तथारूपिणीं हरिवाहिनीं दुर्गां स्मरेदित्यर्थः ॥

अथ कल्किं लक्ष्मीं च प्रस्तौति—

१७०. अनेकेत्यादि ॥ कल्किपक्षे । यदीय कायः यस्य हरेः सम्बन्धी देहः पापविशिष्ट आत्मा येषां पापे अधर्मे आत्मा बुद्धिर्येषां वा ते पापात्मानोऽधार्मिकाः अनेकेषां पापात्मनां सम्बन्धे तेषां नाशार्थ-मित्यर्थः ॥ सम्बन्धमात्रविवक्षायां षष्ठीसमासः सम्बन्धश्चात्र नाश्यनाशकभावादिः क्रियार्थोपपदस्येत्या-दिना चतुर्थ्यां वा समासः ॥ विशेषेण सृष्टा कल्पिता या कल्किता कल्कित्वं । कल्क्यवतारस्वरूपमित्यर्थः ॥ तेन स्फुटां प्रव्यक्तां श्रिया शोभया सहितामित्यर्थः ॥ सहार्थे तृतीया काञ्चन अनिर्वचनीयामित्यर्थः । भासं कान्ति आवहन् दधत् कल्किस्वरूपेणावतीर्य पापिकुलोन्मूलनेन प्रकाशमानः सन्नित्यर्थः ॥ कृतस्य सत्ययु-गस्य ये धर्माः तपोयज्ञादिरूपाः तेषामाश्रयः प्रवर्तकत्वेन संश्रयः भविष्यतीत्यर्थः ॥ तं हरिं स्मरेदित्यर्थः । कल्किरूपो हि भगवान् कलियुगावसाने पापात्मनां विनाशाय शम्भलग्रामे भविष्यति । सत्ययुगीय-धर्मान् प्रवर्तयिष्यति च इत्यादि भागवतकल्किपुराणादावत्र गन्तव्यम् ॥

लक्ष्मीपक्षे श्रिया लक्ष्मीस्वरूपेण स्थित इत्यर्थः अभेदे तृतीया यदीयकायः यस्या दुर्गायाः सम्बन्धी देहः अनेकेन मुखेन करेण च पिबन्तीति अनेकपा हस्तिनः 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपोद्विपः' इत्यमरः ॥ तदुक्षिप्ताः तेषां सम्बन्धिनो वा आपो जलानि अनेकपापानि शाकपार्थिवादित्वादुत्तरपदलोपेन सम्बन्धसामान्यषष्ठ्या वा समासः ऋक् पुरब्धूरित्यादिना सर्वसमासान्तोऽच्प्रत्ययः क्लीबत्वं च लोका-दाश्रयणीयं तैर्हस्त्युत्क्षिप्तजलैर्हस्तिसम्बन्धिजलैर्वा आत्मनः स्वस्य विसृष्टा त्यक्ता धौतेति यावत् । या कल्किता मालिन्यं तया स्फुटां कल्कितेति कल्कशब्दान्मत्वर्थीयेन् प्रत्ययान्तात् तल् कल्कः पापाशये पापे दम्भे विट् किट्टयोरपीति विश्वः ॥ काञ्चनभासं काञ्चनस्य सुवर्णस्य भाः कान्तिः तां आवहन् दधानः कृतानि धर्माणि यैस्ते कृतधर्मा धार्मिकाः तेषां संश्रयः आश्रयभूतः धार्मिकैरेवोपलभ्यमान इत्यर्थः या श्रीः स्वयं सुकृतिनां भवनेष्वित्यादि मार्कण्डेयाद्युक्तेः तां तथा स्वरूपां दुर्गां स्मरेदित्यर्थः ॥ तद्ध्यानस्वरूपं च कान्त्या काञ्चनसन्निभां हेमगिरिप्रख्यैश्चतुर्भिर्गजैर्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियमित्यादि ज्ञेयम् ॥

एवं दुर्गा नारायणयोस्तदुभयभेदानां च क्रमेण परस्परशब्दसारूप्यमभिधाय इदानीं व्युत्क्रमेण यथायथमर्थसारूप्यमपि प्रमाणमावहतीति ध्वनयन् तत्तद्भेदविशिष्टौ तावेव प्रस्तौति ॥

१७१. प्रसिद्धविद्यादशकेन कालिकादिकेन कृष्णादिदशावतारभाक् ।
यदेकरूपं प्रकृतिः पुमानपि स्मरेद्धरिं तं हरिवाहिनीं च ताम् ॥

१७२. पदानवच्छिन्ननिषेवणाद्ययोः कदाप्यविच्छिन्नसमृद्धसन्ततिः ।
सदात्रसिंहासनकेळिलालसि श्रियान्ववायः सवितुर्निषेव्यते ॥

१७१. प्रसिद्धेत्यादि ॥ यदेकरूपं यस्य हरेः दुर्गाया वा 'एकमद्वितीयं रूपं एकमेवाद्वितीयं ब्रह्मे'त्यादि श्रुतिप्रतिपाद्यमित्यर्थः काल्येव कालिका सा आदिः प्रथमा यस्य तेन दशानां सङ्घः दशकं सङ्ख्यायाः संज्ञा सङ्घसूत्राध्ययनेष्विति कन् प्रसिद्धा या विद्या महाविद्या विशेषाः तासां दशकं तेन काल्यादि दशमहाविद्या स्वरूपेणेत्यर्थः ॥ कृष्णादयो ये दशावताराः तान् भजतीति तथा भजो ण्विः ॥ अतएव प्रकृतिः प्रकृतिपदवाच्या पुमान् पुरुषोपि उच्यते इति शेषः । ययोरेकमपि रूपं कल्यादिदशमहाविद्यास्वरूपेण प्रकृतिरित्युच्यते कृष्णादिदशावताररूपेण पुमानिति चोच्यते इत्यर्थः ॥ यद्वा यदेकरूपं परब्रह्मात्मकं प्रकृतिः पुमानपि द्विधाकृत्वात्मनो देहमर्धेन पुरुषो भवदर्धेननारीत्यादि स्मृत्या प्रकृतिपुरुषभेदेन द्विधाकृतशरीरमपि काल्यादिदशविद्यास्वरूपेण कृष्णादिदशावतारान् भजतीति तथा इत्यन्वयभेदः अर्थात् काल्यादिस्त्रीरूपमपि कदाचित् कृष्णादि पुंरूपतां लभते कृष्णादिपुंरूपमपि काल्यादि स्त्रीरूपतां च लभते तथा च स्वेच्छाविग्रहयोस्तयोरवतारभेदेन शरीरभेदसत्वेऽपि स्वरूपस्य वास्तवो भेदो नास्तीत्यर्थः ॥ उक्तं च चामुण्डातन्त्रे 'कृष्णरूपा कालिकास्या द्रामरूपाचतारिणी । बगळा कूर्ममूर्तिः स्यान्मीनो धूमावती भवेत् ॥ छिन्नमस्ता नृसिंहः स्याद्वराहश्चैव भैरवी ॥ सुन्दरी जामदग्न्यः स्याद्वामनो भुवनेश्वरी कमला बौद्धरूपास्यान्मातङ्गी कल्किरूपिणीत्यादि ॥ प्रकृतिशब्दव्युत्पादनमुखेन पुंप्रकृत्योरभेदोऽपि प्रदर्शितो ब्रह्मवैवर्ते प्रकृतिखण्डे यथा प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः ॥ सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता ॥ गुणे प्रकृष्टे सत्त्वे च प्रशब्दो वर्तते श्रुतौ । मध्यमे रजसि कृश्चतिशब्दस्तामसः स्मृतः त्रिगुणात्मस्वरूपाया सर्वशक्तिसमन्विता ॥ प्रधाना सृष्टिकरणे प्रकृतिस्तेन कथ्यते ॥ 'प्रथमे वर्तते प्रश्च कृतिश्च सृष्टिवाचकः । सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्तिता ' इत्यादि ॥ तथा योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः ॥ पुमांश्च दक्षिणार्धाङ्गा द्वामाङ्गात् प्रकृतिः स्मृता । सा च ब्रह्मस्वरूपा च या या नित्या सनातनी । यथात्मा च यथा शक्तिर्यथाग्नौ दाहिका स्मृता ॥ अतएव हि योगीन्द्रः स्त्रीपुम्भेदं न मन्यते सर्वं ब्रह्ममयं ब्रह्मन् शश्वत्पश्यति नारदेत्यादि ॥

एवं दुर्गानारायणौ प्रस्तुत्योपसंहरति ॥

१७२. पदेत्यादि ॥ सवितुः सूर्यस्य अन्ववायो वंशः 'वंशोन्ववाय' इत्यमरः ॥ ययोः दुर्गानारायणमूर्त्योः पदानवच्छिन्ननिषेवणात् पदयोः सन्तत भजनाद्धेतोः गमकत्वात्समासः ॥ कदापि कस्मिन्नपि काले इत्यर्थः ॥ अविच्छिन्ना अविनष्टा समृद्धा अधिकर्धियुक्ता च 'अधिकर्धिः समृद्धिः स्या'दित्यमरः ॥ सन्ततिः पुत्रपौत्रादिपरम्परा यस्य स तथा भूतः सन् अत्र नन्दपुरे यत् सिंहासनं राजासनं तस्मिन् या केळिः क्रीडा विलासः तत्र यो लालसो महाभिलाषः 'कामोऽभिलापस्तर्षश्च सोऽत्यर्थं लालसाद्वयो'रित्यमरः॥ सोऽस्यास्तीति इन् तथाभूता या श्रीः राजलक्ष्मीः तया सदा निषेव्यते परिचर्यते इत्यर्थः ॥

१७३. ततो भवद्भैरवनामलक्षितः क्षितेर्गुणोघैरवनैकदीक्षितः ।
जलाशयं बोब्बिलिदेश आशयन् स्वयाख्यया ख्यापयति स्म यः स्वयम् ॥

१७४. स विश्वनाथं स्वसुतं सदा रतं सदारमाराधनया रमापतौ ।
सुरैः समाराधिन ये धुरन्धरं धुरन्धरायाः समये समन्वयन् ॥

१७५. पितुःपथातिथ्यमथाशृणोद्यथा मनोरथान् प्रार्थयितुः स सार्थयन् ।
धराकरग्राहितया तदा तदासने व्यलासीद्बलरामनामवान् ॥

१७३. ततइति ॥ ततः विजयचन्द्रात् भैरवनाम्ना लक्षितश्चिह्नितः भैरवदेवनामेत्यर्थः अभवत् उद्भूत ॥ यः भैरवदेवः गुणोघैः दयादाक्षिण्यादिगुणसमूहैः तदुपलक्षित इत्यर्थः ॥ इत्थं भूतलक्षणे तृतीया क्षितेः पृथिव्याः अवने रक्षणे विषये एकदीक्षितः दीक्षा व्रतसंग्रह इति हेमचन्द्रः ॥ एका मुख्या दीक्षा सञ्जाता अस्य तारकादित्वादि तच् पृथ्वीपालनैकव्रतीत्यर्थः ॥ तथाभूतः सन् बोब्बिलिदेशे बोब्बिलिनाम्नो जनपदस्यैकस्मिन् प्रदेशे जलाशयं सरोवरमेकं आशयन् खनयित्वा प्रतिष्ठापयन् स्वया स्वकीयया आख्यया नाम्ना स्वयं आत्मनैवेत्यर्थः प्रख्यापयति स्म स्वनाम्ना तन्नामकरणं चकारेत्यर्थः ॥ भैरवसागरनाम्ना प्रख्यापयामासेति फलितार्थः ॥ अयं हि क्रिष्टस्य १४८६ परिमितेब्दे जातः ॥ १५१० मितेब्दे राज्यं पितुः सकाशाल्लब्ध्वा सप्तदशवत्सरपर्यन्तं भुवं प्रशास्य १५२७ मितेब्दे स्वर्गं गत्वा सुरैस्समाराधीति उत्तरश्लोकेन सम्बन्धः ॥

तत्पुत्रो विश्वनाथ इत्याह ॥

१७४. सेति ॥ स भैरवदेवः समये स्वस्य चरमदशायां रमापतौ श्रीमन्नारायणे आराधनया सेवया कृत्वा सदा सर्वदा रतं अनुरक्तं नये नीतिशास्त्रे धुरन्धरं धुरीणं प्रवीणमित्यर्थः ॥ तथाभूतं विश्वनाथं । तन्नामानं स्वसुतं निजपुत्रं धरायाः पृथिव्याः धुरं भारमित्यर्थः ॥ समन्वयन् सङ्गमयन् प्रापयन्नित्यर्थः। गतिबुद्धीत्यादिना द्विकर्मकत्वं सदारं दारैर्भार्याभिः सह यथातथा सुरैः देवैः समाराधि आराध्यते स्म कर्मणि तङ् चिण् चिणो लुगिति तलुक् स्वर्गं गत्वा देवैः सम्मानितो बभूवेत्यर्थः । सदारमित्यनेन स्वर्गं गतवतो राज्ञः स्त्रियोपि अग्निप्रवेशनेन तत्सहगमनं कृतवत्य इत्यर्थः ॥ सदारमिति पदं स्वसुते वा विशेषणीयं दारैः सह रमापतौ आराधनया रतमिति तत्रार्थः ॥

विश्वनाथदेवस्य पुत्रो बलरामदेव इत्याह ॥

१७५. पितुरिति ॥ स विश्वनाथः प्रार्थयितुः प्रार्थिजनस्य मनोरथान् अभिलाषान् यथा येन रूपेण मनोरथाः तथा तानित्यर्थः ॥ सार्थयन् सार्थान् कुर्वन् पूरयन्निति यावत् अथ कियत्कालानन्तरं पितुः निजतातस्य पथा मार्गेण येन मार्गेण पिता स्वर्गं गतवान् तेन मार्गेणेत्यर्थः ॥ आतिथ्यं अतिथये इदं अतिथेर्ञ्यः तत् अतिथिसत्कारमित्यर्थः ॥ आशृणोत् अङ्गीकृतवान् ॥ स्वर्गमार्गे आतिथ्यं प्रापेत्यर्थः 'ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञात'मित्यर्थः ॥ तदा तत्स्वर्गगमनसमये बलराम नामवान् अन्नामा तत्पुत्र इत्यर्थः ॥ धरायाः पृथिव्याः करः षष्ठांशरूपोबलिः ॥ 'स एव करो हस्तः बलिहस्तांशवः कराः' इत्यमरः ॥ तं गृह्णातीति धराकरग्राही ग्रह्यादित्वाण्णिनिः ॥ तस्य भावस्तत्ता तया भूपतित्वेनोपलक्षित इत्यर्थः ॥ तदासने तस्य

१७६. दिगन्तविश्रान्तयशास्तदन्तरे सुतो यशस्वान्नृपतामवाप्तवान् ।
अवेक्ष्य दुर्भिक्षमरं करं क्षितौ दयोदयादत्यजदब्दयोर्द्वयम् ॥

१७७. तदन्तरे तत्तनुजोऽतिविक्रमो निजेननाम्ना किल वीरविक्रमः ।
स्वनिष्क्रमासादितसिद्ध्युपक्रमः कुलक्रमाद्राजपदं समाक्रमत् ॥

१७८. प्रदाय भृङ्गारककोटदेशकं मुखाकरोद्यो मुखिवंशमादरात् ।
अनन्दयद्बाहुबलेन्द्रमर्पयन् तथा च भोगापुरपोट्टनरोर्द्वयम् ॥

विश्वनाथदेवस्य सिंहासने व्यलासीत् विललास भूपतिर्बभूवेत्यर्थः ॥ अयं हि बलरामदेवः क्रिष्टस्य १५४० मितेब्दे समुत्पद्य १५७१ अब्दे राज्यं प्राप्य १५९७ मितेब्दे देहं विसृष्टवान् ॥

बलरामदेवस्य पुत्रो यशस्वान् इत्याह ॥

१७६. दिगन्तेत्यादि ॥ तदन्तरे तस्य बलरामदेवस्य अन्तर्धानसमये 'अन्तरमवकाशावधिप्रणिधानान्तर्द्धिभेदतादर्थ्ये' इत्यमरः । दिगन्तेषु दिक् प्रान्तेषु 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयो'रिति हैमः ॥ विश्रान्तं विख्यातमित्यर्थः ॥ यशः कीर्तिर्यस्य सः अतएव यशस्वान् यशो विद्यतेऽस्येति अन्वर्थनामा सुतः यशोवान्तदेव इति प्रसिद्ध इत्यर्थः । नृपतां राजत्वमवाप्तवान्, प्राप्तवान् ॥ यः यशस्वान् देवः क्षितौ पृथिव्याम् अरमत्यर्थं अलमित्यव्ययस्य बालमूलेत्यादिना पक्षेरः भिक्षाया अभावो दुर्भिक्षं भिक्षायाः प्रार्था निष्फलत्वमित्यर्थः ॥ अव्ययं विभक्तीत्यादिनाऽभावार्थेऽव्ययीभावसमासः ॥ यद्देशे यत्काले तद्देश तत्काल-योग्यसस्यादिकं न जायते तद्देशे तदा याच्यमान द्रव्यालाभात् दुर्भिक्षं जातमिति व्यवह्रियते लोकैः तत् भिक्षाया अप्राप्तिमित्यर्थः ॥ अवेक्ष्य दृष्ट्वा दयायाः परदुःखप्रहाणेच्छायाः उदयात् स्वस्य लोकेषु कृपाप्रादुर्भावादित्यर्थः ॥ अब्दयोः द्वयं वर्षद्वयमभिव्याप्येत्यर्थः ॥ अत्यन्तसंयोगे द्वितीया करं कृषकेभ्यो ग्राह्यं षष्ठांशरूपं बलिम् ॥ 'भागधेयः करो बलि'रित्यमरः अत्यजत् तत्याज ॥ अयं हि १५८१ मिते क्रिष्टाब्दे जन्मलब्ध्वा १५९७ मितेब्दे पितुः सकाशाद्राज्यं लब्ध्वा १६२७ मितेब्दे स्वपुत्रे विक्रमदेवे राज्यलक्ष्मीं समर्प्य स्वयं लोकान्तरं गतवान् ॥

१७७. स्वनिष्क्रमासादितसिद्ध्युपक्रमः कुलक्रमाद्राजपदं समाक्रमत् तदन्तर इति ॥ तदन्तरे तस्य यशस्वतोऽनन्तरं तत्स्वर्गगमनानन्तरमित्यर्थः ॥ तत्तनुजः तस्य यशस्वतः पुत्रः कुलक्रमात् स्वकुलोचितविधिनेत्यर्थः राजपदं राजचिह्नं छत्रचामरादिकं राज्ञः पदं स्थानं सिंहासनमित्यर्थो वा समाक्रमत् सम्यक् आक्रमितवान् ॥ कोऽसौ किं भूतः अतिविक्रमः अतिशयितः विक्रमः पराक्रमो यस्य सः अतएव निजेन स्वकीयेन नाम्ना वीरविक्रमः वीरविक्रमदेवनामेत्यर्थः प्रकृत्यादिभ्य उपसङ्ख्यानमिति तृतीया किलेति 'प्रसिद्धौ पुनः किं भूतः स्वस्य निष्क्रमेण धीशक्त्या धीशक्तिर्निष्क्रम' इत्यमरः आसादिता प्राप्ता सिद्धिर्निष्पत्तिर्यस्मात् यस्मिन् वा तथाभूत उपक्रम आरम्भो यस्य सः यस्य बुद्धिशक्त्या निखिलकार्यारम्भः सफल एवेत्यर्थः । 'प्रक्रमः स्यादुपक्रमः स्यादभ्यादानमुद्धात आरम्भ' इत्यमरः अयं हि क्रिष्टीया १६१३ ब्दे जातः ॥

१७८. प्रदायेति ॥ यः विक्रमदेवनामा राजा मुखिवंशं मुखीनामा कश्चित्क्षत्रियः । तद्वंश तत्कुलं कांश्चित्तद्वंशीयानित्यर्थः ॥ आदरात् स्वोपकारित्वेन तेष्वनुरागात् शृङ्गारककोटदेशकं शृङ्गारकोटेति प्रसिद्धं

१७९. गृहीतभार्योऽपि पुनर्विवाह्य यः सुतां सुतार्थी खलु पारलेशितुः ।
गुमागडग्रामत आकिणेश्च तं भुवं प्रतिग्राहयति स साग्रहः ॥

१८०. सनन्दपुर्याजयपूर्विकां पुरीं चिरात्प्रसिद्धां स्वकुलाभिवृद्धये ।
परीक्षणाद्भूगुणजातिवेदिभिर्निरीक्ष्यतां क्षात्रभुवं समाश्रयत् ॥

---

जनपदं प्रदाय तेभ्यो दत्वेत्यर्थः ॥ सुखाकरोत् ॥ अनुकूलाचरणेन तानानन्दयति स्मेत्यर्थः ॥ सुखप्रियादानुलोम्ये इति कृञ् योगे डाच् प्रत्ययः तथा च तेन प्रकारेणापि आदरादित्यर्थः । बाहुबलेन्द्रं बाहुबलेन्द्र इति कश्चित् क्षत्रियः तद्वंशीया अपि बाहुबलेन्द्रा इत्युच्यन्ते । तन्मध्यात्कञ्चिदित्यर्थः ॥ भोगापुरपोट्नरोः द्वयं बोगापुरमिति पोट्नरु इति नामभ्यां प्रसिद्धयोर्देशयोर्द्वयमित्यर्थः ॥ अर्पयन् तस्मै प्रयच्छन्नित्यर्थः अनन्दयत् आनन्दयामास बाहुबलेन्द्र इति तद्वंशीया राजानः राजमहेन्द्रनाम्नि देशे राज्यमकुर्वन् ॥

१७९. गृहीतेति ॥ यः विक्रमः गृहीता परिगृहीता भार्या येन सोऽपि कृतदारपरिग्रहोऽपीत्यर्थः सुतमर्थयत इति सुतार्थी खल्वित्यवधारणे । पुत्राकांक्षी । एव न तु भोगाकांक्षीत्यर्थः पुनः द्वितीयवारं पारलेशितुः पारलाख्यनगराधिपतेः सुतां पुत्रीं विवाह्य उपयम्य साग्रहः आग्रहेण सहितः सन् तं पारलाधिपतिं निजश्वशुरमित्यर्थः ॥ गुमागडग्रामतः गुमागडानामकग्रामादारभ्य आकिणेः किणिनामकग्रामपर्यन्तमित्यर्थः ॥ आङ्मर्यादा वचने इति पञ्चमी । भुवं तन्मध्यवर्ति भूप्रदेशं प्रतिग्राहयति स्म प्रतिग्राहयामास । तस्मै प्रदत्तवानित्यर्थः ॥ अयं भावः स च विक्रमः प्रथमभार्यायां चिरकालपर्यन्तं पुत्रोत्पत्यदर्शनात् पुनर्द्वितीयविवाहार्थं पारलाधिपतेर्दुहितरं मध्यस्थैः याचितवान् । तस्य च यौवनातिक्रमं दृष्ट्वा निजदुहितरं दातुमनिच्छन्तं पारलाधिपतिं कियद्देशोत्सर्जनेन प्रलोभ्यतद्दुहितरमयं परिणीतवानिति ॥

१८०. सेति ॥ स विक्रमः नन्दपुर्याः नन्दपुरीं विहायेत्यर्थः यव्लोपे पञ्चमी चिरात् चिरकालात् प्रसिद्धां प्रख्यातां शाखानगरस्वरूपेण स्थितामित्यर्थः जयशब्दः पूर्वे यस्यास्तां पुरीं जयपुरनामनगरीमित्यर्थः ॥ भूगुणजातिभेदिभिः भुवः पृथिव्याः गुणाः स्थैर्यादयः जातयो ब्राह्मणक्षत्रियत्वादिरूपाः तद्वेदिभिः परीक्षणशीलैर्जनैरित्यर्थः ॥ परीक्षणात् परीक्षां कारयित्वेत्यर्थः ॥ तां जयपुरीं क्षात्रभुवं क्षत्रजातिसम्बन्धिभूमिं निरीक्ष्य ज्ञात्वा स्वकुलाभिवृद्धये निजवंशाभिवृद्ध्यर्थं समाश्रयत् समाश्रितवान् । नन्दपुरे स्वसन्तानप्रतिबन्धं मत्वा तद्विहाय जयपुरं गतवानित्यर्थः । भूमेर्गुणजात्यादय उक्ताः महाभारते शिल्पितन्त्रादौ च यथा । 'भूमेः स्थैर्यं गुरुत्वं च काठिन्यं प्रसवार्थता । गन्धो गुरुत्वं शक्तिश्च सङ्घातः स्थापना धृति'रिति महाभारते मोक्षधर्मे । अस्यार्थः स्थैर्यमचाञ्चल्यं गुरुत्वं पतनप्रतियोगी गुणः काठिन्यं प्रसवार्थताधान्याद्युत्पत्तिस्तदर्थता गन्धः गुरुत्वं पिण्डपुष्टिः शक्तिः गन्धग्रहणसामर्थ्यं सङ्घातः श्लिष्टावयवत्वं । स्थापना मनुष्याद्याश्रयं धृतिः पाञ्चभौतिके मनसि यो धृत्यंशः इत्यादिगुणाः । जातयस्त्वन्यत्र यथा 'ब्राह्मणाः क्षत्रिया वैश्या शूद्रा भूमिश्चतुर्विधा । शुक्ला रक्ता तथा पीता कृष्णवर्णा इति क्रमात् । आज्यगन्धा ब्रह्मभूमिः क्षत्रिया रक्तगन्धिका । क्षारगन्धा भवेद्वैश्या शूद्रा विड्गन्धिकास्मृता । कुशयुक्ता शरबहुला दूर्वाकाशावृता क्रमेण मही । अनुवर्णवृद्धिकरी कषायाम्ला कटुकामधुरा च । तिलानां वपनैस्तत्र ज्ञातव्या भूमिजातयः त्रिरात्रेणाङ्कुरो यत्र सा भूमिर्ब्राह्मणा मता । क्षत्रिया पञ्चरात्रेण वैश्या स्यात्सप्तभिस्तथा । नवभिः शूद्र-

१८१. प्रकुर्वतो नासिकनामकूटवत्तटे ततस्तत्पुटभेदनं नवम् ।
निजेष्टमस्मिन्नजनिष्ट च क्रमात्सुतद्वयं ज्येष्ठकनिष्ठयोः स्त्रियोः ॥

१८२. अभाणि कृष्णोति पुरोज ओजसा ज्वलन् यशस्वानिति सद्यशाः परः ।
बभार ताभ्यां परिभासयन् भुवं स पुष्पवद्भ्यामिव रत्नभूधरः ॥

१८३. विमर्दयन् प्रद्रवतः स्वदेशकं दुराशयान् यो यवनांश्च संयति ।
स्तुतश्च तैः काकुवचोभिरुच्चकैर्विधाय सन्धिं प्रणयं प्रणीतवान् ॥

---

*जातिः स्याज्ज्ञातव्यं भूमिलक्षणं । स्वजातौ सुखमाप्नोति सर्वासु ब्राह्मणस्तु ॥ । तिसृषु क्षत्रियश्चैव वैश्यो भूमिद्वये तथा । शूद्राणामेकभूमिश्च चतुर्थी परिकीर्तिते'त्यादि ॥*

१८१. प्रकुर्वत इति ॥ अस्मिन् जयपुरे कूटोऽस्यास्तीति कूटवान् शिखरी पर्वत इत्यर्थः ॥ 'कूटोऽस्त्री शिखरं शृङ्ग'मित्यमरः । नासिकनामा यः कूटवान् नासा दण्डाकारत्वान्नासिक इति नाकटिपर्वत इति च प्रसिद्ध इत्यर्थः ॥ तस्य तटे समीपभूमौ पश्चिमप्रदेशे इत्यर्थः ॥ नवं नूतनं तत्र प्रसिद्धं पुटभेदनं 'पत्तनं पत्तनं पुटभेदन'मित्यमरः । पुरीमिति यावत् । प्रकुर्वतः स्थापयतः ततः विक्रमात् ज्येष्ठकनिष्ठयोः स्त्रियोः निजराज्योः क्रमात् ज्येष्ठानुक्रमात् निजेष्टं निजेच्छाविषयीभूतं स्वेच्छानुरूपमिति यावत् ॥ सुतद्वयं पुत्रद्वयं अजनिष्ट जज्ञे दीपजनेति वैकल्पिकश्चिणभावः ॥

*१८२. अभाणीति ॥ ओजसा तेजसा ज्वलन् दीप्यमानः पुरोज सतद्रूपमप्यग्रज इत्यर्थः ॥ कृष्णेति कृष्णइति नाम्न्यः अनुकरणशब्दत्वाद्विभक्त्यपर्यन्ताभाव अभाणि भणितः कर्मणि तङ् स्त्रेश्चिण् तशब्दस्य लुक् परः द्वितीयपुत्र इत्यर्थः सद्यशाः शोभनं यशो यस्य सः अतएव यशस्वानिति यशस्वान् लोके* यशोवन्त देव इति नाम्ना प्रसिद्ध इत्यर्थः । अभाणीति सम्बन्धः स विक्रमदेवः ताभ्यां पुत्राभ्यां रत्नभूधरः रत्नप्रचुरपर्वतः सुमेरुरिति यावत् रत्नसानुत्वात् ॥ 'मेरुः सुमेरुर्हेमाद्रीरत्नसानु सुरालय' इत्यमरः । पुष्पवद्भ्यां दिवाकर निशाकराभ्यामिव 'एकयोक्त्या पुष्पवन्तौ दिवाकर निशाकरा'वित्यमरः॥ भुवं पृथिवीं परिभासयन् सर्वतो भावेन प्रकाशयन् बभार धृतवान् मेरुरिव स्वयं भूभारं धृत्वा चन्द्रसूर्याभ्यामिव पुत्राभ्यां शुभ्रयशः प्रतापयुक्ताभ्यां पर्यभासयदित्यर्थः ॥

१८३. विमर्दयन्निति ॥ यश्च विक्रमः दुराशयान् दुष्टस्वभावान् अतएव स्वदेशकं निजराष्ट्रं जयपुरीमित्यर्थः ॥ प्रद्रवतः उपद्रवतः यवनान् यवनजातीयान् संयति युधि 'संयत्समित्याजिसमिद्युध' इत्यमरः ॥ विमर्दयन् तान् पीडयन्नित्यर्थः तैर्यवनैः कर्तृभिः उच्चकैः काकुवचोभिः उच्चैः काकूक्तिभिः करणैः 'काकुः स्त्रियां विकारोयः शोकभीत्यादिभिर्ध्वने'रित्यमरः । स्तुतः वन्दितः सन् सन्धिं विधाय तैः साकं सन्धाय प्रणयं स्नेहं प्रणीतवान् कृतवान् प्रीति मुत्पादयामासेत्यर्थः ॥ अत्रेदं बोध्यं क्रिष्टस्य १६६४ परिमितेब्दे यवनचक्रवर्तिसम्बन्धिनो हैदराबादनवाबस्य वंशीयौ द्वौ नवाबपदवाच्यौ । सफदरजङ्गबहादूर् खान्बहादूर् नामानौ करग्रहणार्थं महता सैन्येन सह समागत्य निर्लुंठनादिना एतद्देशं पीडयामासतुर्यदा तदासौ विक्रमः निजचतुरङ्गबलमाश्रित्य युद्धे यवनसैन्यानि निहत्य हतबलाभ्यां ताभ्यां सन्धित्सुभ्यां सन्धाय मैत्रीं चकारेति चिरन्तनीकथा ॥

१८४. निशम्य तस्याद्भुतशौर्यसम्पदं स हैदराबादनबाव आदरात् ।
महीमरात् स्वर्णशिरोद्वयासि सद्गजैः सहास्मै बिरुदं महद्ददौ ॥

१८५. अथैकदा रामगिरेस्समागतः सुखोषितं संसदितं सखिव्रजैः ।
सविस्तरं कश्चिदिदं वचोमुदा जगाद पात्रोऽवनतः पुटाञ्जलिः ॥

१८६. अहो महाभाग्यमदृष्टमश्रुतं यथा च सौराष्ट्रभुवो महाप्रभो ।
निशम्यतां रामगिरिप्रदेशतो दिशि प्रतीच्यां शबरी नदीतटे ॥

---

१८४ निशम्येति ॥ स लोकप्रसिद्धः हैदराबादनबाबः हैदराबादनाम्न्या नगर्या अधीश्वरो नबाबपदवाच्यः सम्राट् तस्य विक्रमदेवस्य अद्भुता लोकातिशायिनी या शौर्यसम्पत् शौर्यगुणसम्पत्तिः तां निशम्य श्रुत्वा आदरात् तथाविधशूरस्य तस्य निजसहायभूतस्य स्वानुकूल्यसम्पादनायेत्यर्थः अस्मै विक्रमाय महीमरात् यवनभाषया तन्नाम्ना प्रसिद्धं । यत् स्वर्णशिरोद्वयं सुवर्णनिर्मितनरशिरोयुगळं तच्च असिः तीक्ष्णधारो बहुमूल्यो महानेको खड्गश्च 'खड्गे तु निस्त्रिंशचन्द्रहासासि रुष्टय' इत्यमरः । सन्नुत्तमो गजः सद्गजः महानेकोदन्तावलश्च तैः सह महत् पौरुषातिशयप्रबोधकं बिरुदं गुणोत्कर्षादिवर्णनं ताम्रपट्टलिखितमित्यर्थः । 'बिरुदं कवयः प्राहुर्गुणोत्कर्षादिवर्णन'मित्युक्तेः ॥ ददौ तत्प्रेषणेन तं सम्मानितवानित्यर्थः ॥ अत्रेदं बोध्यं सन्धिविधानानन्तरं कियत्कालपर्यन्तं पूर्वोक्तौ द्वावपि नबाबौ अत्र जयपुरे राज्ञा विक्रमदेवेन सम्मानितौ स्थित्वा समयान्तरे स्वदेशं हैदराबादं गत्वा तत्रस्थ सम्राजं नवाबपदवाच्यं एतस्य राज्ञो विक्रमस्य शौर्यौदार्यदयादाक्षिण्यादि गुणप्रख्यापनेनानुकूलयामासतुः । तच्छ्रुत्वा स च नबाबोऽमुंतत्तद्बहुमानप्रदानेन सम्मानितवानिति अद्यावधि महीमरात् नामकस्वर्णशिरोद्वयं खड्गः ताम्रपत्रलिखितयवनभाषानिबद्धबिरुदश्च वर्तते । व्यवह्रियते चेति बोध्यम् ॥ *

१८५. अथेति ॥ अथ शब्दोऽत्र प्रस्तावान्तरारम्भार्थकः अथानन्तरं एकदा एकस्मिन् समये क्रिष्टस्य १६६५ पञ्चषष्ट्युत्तरषोडशशताब्द्यामित्यर्थः ॥ सर्वैकान्येत्यादिनादाप्रत्ययः रामगिरेः रामगिरिनाम्ना प्रसिद्ध एकोग्रामः शाखानगरकल्पः जयपुरात् नैरुतिदिशि योजनत्रयान्तरे वर्तते । तस्मात् समागतः सम्प्राप्तः कश्चित् अनिर्दिष्टनामा पात्रः पात्रोपपदवाच्यः रामगिरिपात्र इति प्रसिद्ध इत्यर्थः ॥ पुटाञ्जलिः बद्धाञ्जलिः तथा अवनतः अवनम्रीभूयस्थितः सन् सखिव्रजैः सुहृत्समूहैः सह सहार्थे तृतीया । 'अथ मित्रं सखा सुहृ' दित्यमरः । 'संसदि सभायां सभासमिति संसद' इत्यमरः सुखोषितं सुखेनोपविष्टं तं विक्रमदेवं इदं वक्ष्यमाणं वचः अहो महाभाग्यमित्यादि वक्ष्यमाणरूपं सविस्तरं विस्तरेण सहितं यथातथा मुदा प्रीत्या सह जगाद कथयामास ॥

किं तत् तदेव प्रतिपादयत्येकादशभिः श्लोकैः ॥

१८६. अहो इत्यादि ॥ महाप्रभो इति राजसम्बोधनं । हे महाप्रभो महाराज अदृष्टंकेनाप्यनवलोकितं अश्रुतं श्रवणविषयतामप्राप्तं च अतएव अहो आश्चर्यजनकमित्यर्थः ॥ सौराष्ट्रभुवः दक्षिणसौराष्ट्रभूप्रदेशस्य

---

* आजम् महाराजा उदद् दौला मोहवत् आसारयदत् एमिन् सलतनर् समसामखेलाफत् ईशलाम श्रीझाडखण्डबादसाहबहादुर । इत्यादि ॥

१८७. त्रिकूटवत् कूटवतां त्रयं समं चकास्ति तत्रोन्नति विस्तृति स्फुटं ।
वनैः परीतं परितोऽपि दुर्गमैरनेकहिंस्रैकनिवाससंश्रयः ॥

१८८. वनाद्वनं सञ्चरतां यदृच्छया वनेचराणां मृगया विधित्सया ।
इहैकमेकः प्रविलोक्य शल्यकं तमन्वधावद्धनुरात्तसायकः ॥

१८९. अनुप्रविष्टश्च तथा तदन्तरा गिरेरुदग्द्वारमहागुहान्तरे ।
तमोवरुद्धप्रसरोत्रकेवलं गिरं स शुश्राव निजावमर्पिणीं ॥

---

एतज्जयपुराधिष्ठानस्येत्यर्थः ॥ महाभाग्यं निखिलभूमण्डलातिशायि भागधेयं यथा येन प्रकारेण समुत्पन्नमित्यर्थः ॥ तदित्यध्याहार्यं । निशम्यतां श्रूयतां त्वया श्रीमतेत्यर्थः ॥ प्रार्थनायां कर्मणि लोट् । तन्महाभाग्योत्पत्तिकारणप्रबोधकस्य मद्वचनस्य बहुवक्तव्यत्वात् श्रवणे कालविलम्बोऽपि सह्य इति प्रार्थनाभिप्रायः ॥ कुत्रेत्याह रामगिरीत्यादिना रामगिरिप्रदेशतः उक्तरामगिरिग्रामप्रदेशात् प्रतीच्यां दिशि पश्चिमदिग्विभागे शबरीनदीतटे शबरीनाम्न्या नद्याः पूर्वतटे य ॥ महाभाग्यं तन्निशम्यतामिति योजना इयं हि शबरी नदीनन्दपुरान्तर्गतखुलापनामकग्रामात् शबरपल्लीभूतात् समुत्पन्नेति खुलाप इति शबरीति च नाम्नाव्यवह्रीयते सदानीराचेयं गोदावर्यां मिलति ॥

तत्र शबरीनदीतटे किमस्ति तदाह ॥

१८७. त्रिकूटवदिति ॥ तत्र पूर्वोक्तनदीतटे दुर्गमैः दुष्प्रवेशैः वनैः काननैः अन्यत्र सलिलैः समुद्रमध्यस्थितत्वात् वने सलिलकानने इत्यमरः परीतं व्याप्तं परितो वेष्टितमिति यावत् । अतएव अनेकेषां हिंस्राणां व्याघ्रभल्लुकादीनां घातुकजन्तूनां अन्यत्र राक्षसादीनां निवाससंश्रयो वासस्थानं । उन्नतिविस्तृतिभिः स्फुटं प्रव्यक्तं । औन्नत्यविस्तारादि युक्तमित्यर्थः समं तुल्यरूपं कूटवतां कूटाः शिखराणि सन्त्येषामिति कूटवन्तः ॥ शिखरिणः 'कूटोऽस्त्री शिखरं शृङ्गमिति महीध्रे शिखरिक्ष्मा भृदहार्यधरपर्वता' इति चामरः । तेषां त्रयं पर्वतत्रयमित्यर्थः त्रिकूटेन लङ्काधिष्ठानपर्वतविशेषेण तुल्यं त्रिकूटवत् 'तेन तुल्यं क्रियाचेद्वति' रिति वति प्रत्ययः ॥ 'त्रिकूटस्त्रिककुत्समा,' वित्यमरः चकास्ति शोभते ॥

तत्र यत्प्रवृत्तं तदाह ॥

१८८. वनादिति ॥ मृग्यन्ते मृगा अत्रेति मृगया 'आखेटः परिचर्या परिसर्या मृगये'त्यादिना साधुः 'आखेटो मृगया स्त्रिया' मित्यमरः तां विधातुमिच्छा मृगया विधित्सा तया हेतुना वनात् एकस्मादरण्यात् वनं अपरमरण्यं सञ्चरतां सञ्चारं कुर्वतां वनेचरन्तीति वनेचराः किराताः चरेष्ट इति टः । तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् तेषां तन्मध्ये इत्यर्थः निर्धारणे षष्ठी एकः किरात इत्यर्थः इह पर्वतत्रयसमीप वनप्रदेशे इत्यर्थः एकं शल्यएव शल्यकः स्वार्थे कन् तं श्वाविधं प्रविलोक्य प्रकर्षेणावलोक्य धनुषि आत्तो गृहीतः सायको बाणो येन स तथा भूतःसन् तं शल्यं अन्वधावत् अनुलक्षीकृत्यधावति स्मेत्यर्थः ॥

१८९. अन्विति ॥ स वनेचरः तथा तेन प्रकारेण तमनुधावमानः सन्नित्यर्थः ॥ तदन्तरागिरेः तन्मध्यपर्वतस्य पूर्वोक्त शबरीनदी तटस्थितपर्वतत्रयस्य मध्ये मध्यस्थपर्वतस्येत्यर्थः ॥ उदगुत्तरप्रदेशे द्वारः

१९०. क्व मूढ निर्भीकतयाभिगच्छसि व्रजव्रजाशुत्वमितो यथागतः ।
यदेदमन्यत्र निवेदयिष्यसि ध्रुवं तदैवान्तदशामवाप्स्यसि ॥

१९१. इति श्रुतिं चुम्बति वाक्कदम्बकेऽभितः सभीतश्चकितो विलोकयन् ।
समं महाकायप्रमेयसौष्ठवं ददर्श पार्श्वे शिवलिङ्गमव्ययं ॥

१९२. अथ क्षमा प्रार्थनया प्रणम्य तं ततो बहिर्भूय भयाद्विमूढधीः ।
सहायहीनश्च समेत्य सद्मगं निगद्य मां सर्वमसून् विसृष्टवान् ॥

---

प्रवेशनिर्गममार्गो यस्याः सा तथाभूता 'या महागुहा अकृत्रिमं महत् पर्वतबिलं 'देवखातबिले गुहा' इत्यमरः । तस्या अन्तरे मध्यप्रदेशे अनुप्रविष्टश्च तं शल्यमनुसृत्य कृतप्रवेश इत्यर्थः चकारेण पलायमानः शल्यः गुहां प्रविवेश अयमपि तमनुप्रविष्टवानिति फलितोऽर्थः ॥ ततः किमभूत्तदाह । तम इत्यादि अत्र महागुहान्तरे तमसा अन्धकारेणावरुद्धः प्रतिहतः प्रसरो गतिर्यस्य स तथाभूतः सन् गुहामध्ये कियद्दूरं गत्वा अन्धकारेण व्याकुलीभूयस्थितः सन्नित्यर्थः ॥ निजावमर्षिणीं स्वावमानदायिनीं गिरं वाचं आकाशवाणीमित्यर्थः । केवलं शुश्राव । श्रुतवान् । निजावमर्षिणीमिति निजं स्वात्मानं अवमर्षयति अवमत्य धर्षयतीति मृषधातोरवपूर्वात् सुप्यजातावििति ताच्छील्ये बहुळमाभीक्ष्ण्ये इति णिनिः मृषधातोस्तादृशार्थत्वे परस्वहारे परदारमर्षणे अघाघमर्षणं स प्रत्यवमर्षं इत्यादयः प्रयोगा ज्ञेयाः ॥

तद्गिरः स्वरूपमेवाह ॥

१९०. क्वेति ॥ रे मूढ अज्ञ गम्यागम्यविवेकशून्येति यावत् 'अज्ञे मूढ यथा जात मूर्ख वैधेय बालिशा' इत्यमरः । निर्भीकतया निर्भयतया क्व इहेत्यर्थः अभिगच्छसि अभिमुखेनागच्छसि यथा येन मार्गेण आगतः सम्प्राप्तोऽसि तथेत्यध्याहार्यं यत्तदोर्नित्यसम्बन्धात् तेन मार्गेणैवेत्यर्थः इतः गह्वरमध्यात् आशु शीघ्रं व्रज व्रज । नित्यवीप्सयोरिति द्विर्भावः सर्वतो भावेन गच्छेत्यर्थः । यदा यस्मिन्काले इदं रहस्यस्थानं अन्यत्र जनसन्निधावित्यर्थः निवेदयिष्यसि कथयिष्यसि तदैव तस्मिन्काले एव अन्तदशां चरमदशां मृत्युमित्यर्थः अवाप्स्यसि प्राप्स्यसि ध्रुवं निश्चितम् ॥

१९१. इतीति ॥ स वनेचरः इति अनेनोक्तप्रकारेण वाक्कदम्बके वचनसमूहे श्रुतिं कर्णयुगळं चुम्बति सति श्रोत्रप्रदेशं गच्छति सतीत्यर्थः । भीतः भययुक्तः अतएव चकितः इति कर्तव्यतायां प्रतिहतः चकप्रतिघाते इति धातुः तथाभूतस्सन् । अभितस्समन्तात् विलोकयन् पश्यन् पार्श्वे निजपार्श्वभागे समीपे इत्यर्थः समं सर्वावयवेषु स्थौल्यस्थैर्यादिभिः तुल्यरूपं महाकायं बृहच्छरीरं अमेयं अनुपमेयसौष्ठवं अतिशायित्वं यस्य तं अव्ययं अविनाशिस्वरूपं तथाभूतं शिवलिंगं लिङ्गाकार शिवरूपमित्यर्थः । ददर्श दृष्टवान् ॥

१९२. अथेति ॥ अथ शिवलिङ्गदर्शनानन्तरं क्षमाप्रार्थनया हे प्रभो अज्ञानादहमत्र प्रविष्टः तत्क्षमस्वेति प्रार्थनां कृत्वेत्यर्थः तं शिवविग्रहं प्रणम्य । तत्प्रणामं कृत्वा भयात् भयं प्राप्य ततः गह्वरमध्यात् बहिर्भूय तत आगत्येत्यर्थः विमूढा सदसद्विवेकशून्या धीर्बुद्धिर्यस्य सः सहायहीनः सहचर किरातसङ्गम

१९३. प्रतीत्य तद्वाचमहं ततो गतः कुटीमधिष्ठाय तदद्रिसन्निधौ ।
उपासनाभिः परितोषयन् भवं सहानुगैर्गह्वरमध्यगोऽभवं ॥

१९४. तदन्धकारं परिधूय दीपनैः प्रदीपकानां परितः प्रलोकयन् ।
तदीयशोभाहृतनेत्रमानसः क्वचास्मि कोऽहं नकिमप्यवेदिषं ॥

१९५. अहो महेशालयशिल्पवैभवं भवातिगं यच्च शिलैककल्पितं ।
सहस्रशः स्तम्भवितानभित्तिभिर्बिलैश्च पाताळगतैर्विजृम्भते ॥

इश्च स वनेचर इत्यर्थः । सद्मगं स्वगृहस्थितं 'गृह गेहोदवसितवेश्म सद्म निकेतन 'मित्यमरः । मां समेत्य संगत्य सर्वं निगद्य कथयित्वा च असून् प्राणान् विसृष्टवान् विससर्ज गह्वराद्बहिरागत्य स्वसंगि वनेचरानपश्यन् । भयात्तत एकाकीसन् अस्मद्गृहमागत्य मत्सन्निधौ विमूढत्वेन निजमरणहेतुभूतमपि तद्वृत्तकथनं सर्वमामूलं शिवलिङ्गदर्शनादि कथानकं मां कथयित्वा तत्रैव घूर्णित इव स्थित्वा पञ्चत्वं गतवानिति फलितोऽर्थः ॥

१९३. प्रतीत्येति ॥ अहं तद्वाचं तस्य वनेचरस्य वचनं प्रतीत्य कथनानुरूपप्राणत्यागदर्शनात् विश्वस्य । 'प्रत्ययोधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । ततः स्वगृहात् गतः उक्तशबरी नदीतटं प्राप्तस्सन् । तदद्रिसन्निधौ सचासौ अद्रिस्तदद्रिः वनेचरोक्त शिवलिंगाधिष्ठानपर्वतः तस्य सन्निधौ समीपभूमौ । कुटीं पर्णादिरचितशालां 'वासः कुटीद्वयोः शाले 'त्यमरः । अधिष्ठाय तत्र स्थित्वेत्यर्थः अधि शीङ् स्थासां कर्मेति कर्मत्वं भवं उमापतिं भवो भीम स्थाणू रुद्र उमापति'रित्यमरः उपासनाभिः निराहारादि व्रतचरणेन सन्ततनामकीर्तनादिभिः परितोषयन् परितोष्यानुकूलयन् गह्वरान्तः प्रवेष्टुं स्वप्नादिष्टस्सन्नित्यर्थः । अनुगैः स्वानुचरवर्गैः सह गह्वरमध्यगः गह्वरमध्यं प्राप्तः । अभवं अभूवं लङि रूपं ॥

गह्वरमध्यप्रवेशानन्तरकृत्यमाह—

१९४. तदिति ॥ प्रदीपकानां दीपनैः दीपान् प्रज्वाल्येत्यर्थः तदन्धकारं तस्य गह्वरस्य मध्यध्वान्तमित्यर्थः । अन्धकारं ध्वान्तं परिधूय परिसर्वतोभावेन अपसार्य परितः समन्तात् प्रलोकयन् प्रकर्षेण पश्यन् यदीया तस्य गुहान्तः प्रदेशस्य सम्बन्धिनी या शोभा तया हृतं विषयान्तराव्यापृतं नेत्रं चक्षुः मानसं चित्तं च यस्य स तथाभूतस्सन् । कोऽहं क्वचास्मि कुत्र वा वर्ते किमपि किंचिदपि नावेदिषं न ज्ञातवानस्मि तद्वंजितमनोनयनः स्वात्मानं स्वस्थितिमपि नावबोधितवानस्मीत्यर्थः ॥

तस्यानुरञ्जकतामेवाह ॥

१९५. अहो इति ॥ महेशालयशिल्पवैभवं महेशालयस्य तस्य शिवनिकेतनस्य विभवएव वैभवं शिल्पस्य रचनाविशेषस्य वैभवं सम्पत्तिः अहो आश्चर्यजनकमित्यर्थः । यत्र निकेतनं शिलैककल्पितं सुदृढैकशिलया निर्मितमित्यर्थः पर्वतमध्यस्थितगुहा चतुः पार्श्वमपि अखण्डितैकपाषाणमयत्वेन परिदृश्यमानत्वादिति भावः अतएव भवातिगं शिल्पसंसारातिशायि लोकातिशायीत्यर्थः सहस्रशः बहुभिरित्यर्थः बह्वल्पार्थाच्छस्कारकादन्यतरस्यामिति शस् प्रत्ययः । सहस्रशब्दो बहुत्ववाची सहस्रशीर्षा इत्यादि श्रुतेः स्तम्भवितान-

१९६. सुवृत्त सुस्निग्धतनुः स्वयं भवन् विभाति शंभुर्भगवान् तदन्तरे ।
न वाचि तादृक् दृशि यादृशी विधिप्रदत्तशक्तिर्ननु तन्निरूपणे ॥

१९७. इति क्षितीपस्य तदुक्तिचन्द्रमाः प्रवर्ध्य साश्चर्यरसं सुखाम्बुधिं ।
तदीक्षणोत्साह तरङ्गभङ्गिभिर्निवेश वेळा नियतिं व्यलङ्घयत् ॥

१९८. सभानिवृत्तावथ तत्कथाक्रमाद्गता पुरान्तः पुरमार्गवीथिषु ।
प्रवादसोद्रेकतया मुखे मुखे समुद्रघोषस्य चकार मुद्रणम् ॥

भित्तिभिः स्तम्भैः स्थूणाकारैः वितानैरुल्लोचाकारैः भित्तिभिः कुड्यैश्च पाताळगतैः अतिदूरगतैः दुष्प्रवेशैरित्यर्थः । बिलैः गुहाभिश्च विजृम्भते प्रकाशते सर्वमेव देवनिर्मितत्वादलौकिकत्वेन आश्चर्यजनकमिति भावः ॥

१९६. सुवृत्तेति ॥ तदन्तरे तस्य गह्वरस्य मध्यप्रदेशे स्वयं भवन् स्वयमुत्पद्यमानः सुवृत्तं शोभनवर्तुलाकारं सुस्निग्धं सुष्ठुमसृणं च तनुर्लिङ्गशरीरं यस्य स तथाभूतः । भगवान् भगं माहात्म्यमस्यास्तीति तथा इच्छानुरूपवरप्रदत्वेन तत्र कृतसान्निध्य इत्यर्थः । शम्भुः लिङ्गाकारः शिवः विभाति प्रकाशते तन्निरूपणे तन्निरूप्यप्रतिपादने विषये विधिप्रदत्तशक्तिः विधिना विधात्रा प्रदत्ता या शक्तिः, सामर्थ्यं सा दृशि चक्षुषि यादृशी यद्रूपा वर्तते इति शेषः तादृक् तद्रूपा सा शक्तिः वाचि न वचसि नास्ति । तत्सर्वं दर्शनीयमेव न कथनीयमित्यर्थः यादृशी तादृगित्यत्र त्यदादिषु दृशो नालोचने कञ् च इति एकत्र कञ् अन्यत्र चात् किन् आसर्वनाम्न इति आकारान्तादेशश्च ॥

१९७ इतीति ॥ इति उक्तप्रकारः तदुक्तिचन्द्रमाः तस्य रामगिरि पालस्य उक्तय एव चन्द्रमा वचोरूपचन्द्रः क्षितीपस्य भूपतेर्विक्रमस्य आश्चर्यरसोऽद्भुतरस एव रसोजलं तेन सहितं साश्चर्यरसं सुखांबुधिं सुखसमुद्रं । प्रवर्ध्य प्रकर्षेण वर्धयित्वा चन्द्रोदये हि समुद्रो वर्धत इति प्रसिद्धिः तदीक्षणोत्साह तरङ्गभङ्गिभिः तस्य शिवलिंगस्य तत् स्थानादेश्च ईक्षणे दर्शने विषये य उत्साहः औत्सुक्यं सएव तरंगो लहरी = सामान्यं तस्य भंगिभिः विच्छित्तिविशेषैः व्याजच्छलनिभे भंगिरिति रभसः निवेशवेळा नियतिं निवेशस्य निवेशनस्य या वेळा कालः सभायामुपवेशनसमय इत्यर्थः । तस्या नियतिर्नियमः सा एव समुद्रनिवेशमर्यादा नियतिः तां व्यलङ्घयत् अतिक्रामयामास तदद्भुतकथाप्रस्तावैर्दीर्घकालएव सभाभङ्ग आसीदित्यर्थः । ' अब्ध्यम्बु विकृतौ वेळा कालमर्यादयो 'रपीत्यमरः ॥

१९८. सभानिवृत्ताविति ॥ अथ तदद्भुतकथोपकथनानन्तरं । सभानिवृत्तौ समिति भङ्गेसति तत्कथा तस्येश्वरस्याविर्भावादि तत् स्थानवैचित्र्यकथा पुरान्तःपुरमार्गवीथिषु नगरावरोधवर्त्मे गृहराजिषु गता प्राप्ता सती मुखे मुखे प्रत्येकजनमुखे वीप्सायां द्विर्भावः प्रकृष्टो वादः प्रवादः परस्परोपकथनं तस्य सोद्रेकतया उद्रिक्ततया अतिशयिततयेति यावत् समुद्रघोषस्य समुद्रगर्जनस्य मुद्रणं मौनीभावं चकार समुद्रघोषवत् तत्कथा परितोऽपि घुष्यते स्मेत्यर्थः ॥

१९९. ततः शिवप्रीतिकरोपहारयुक् शिवागमस्फीतमना नृपोत्तमः ।
तपस्यमासस्य तिथिं शिवप्रिया मनूद्ययात्रां विदधे शिवप्रियः ॥

२००. पदातयः केचन यानयायिनो गजाश्वदोलाशिबिकाविकाशिनः ।
सबालकस्त्री सवयो वयोधिका ययुः पुरस्थाश्च समे समेत्य तम् ॥

२०१. धराटवी ग्रामनिकायनिर्गतैरयात्पयोमूलफलोपहारिभिः ।
मनुष्यवारैरपि मार्गसङ्गतैः क्रमेण सेना ववृधे नदीव सा ॥

---

१९९ तत इति ॥ ततः कियद्दिनानन्तरं शिवप्रियः । शिवः प्रियो विशिष्टत्वेन सेवनीयो यस्य सः अतएव शिवस्य अद्भुताकारशिवलिंगस्य आगमेन आविर्भावेण हेतुना स्फीतं हर्षोत्फुल्लं मनो यस्य स तथाभूतः नृपोत्तमः नृपश्रेष्ठः स विक्रम इत्यर्थः । शिवप्रीतिकरोपहारयुक् शिवप्रीतिकरा ये उपहाराः सुवर्णबिल्वपत्रगङ्गोदकादय उपग्राह्याः 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । तद्युक् तद्युक्तः 'सत्सु द्विषे' त्यादिना क्विप् गृहीतशिवार्चनोचितसम्भार इत्यर्थः तपस्यमासस्य फाल्गुनिकमासस्य 'स्यात्तपस्यः फाल्गुनिक' इत्यमरः । शिवप्रियां तिथिं शिवरात्रिचतुर्दशीमित्यर्थः 'माघमासस्य शेषे या प्रथमे फाल्गुनस्य च । कृष्णचतुर्दशी सा तु शिवरात्रिः प्रकीर्तिता' इत्याद्युक्तेः शिवप्रिया रात्रि' शिवरात्रिरिति व्युत्पत्त्या तस्यास्तिथेः शिवप्रियत्वात् तथा च ईशानसंहितायां । 'माघे कृष्णचतुर्दश्यामादिदेवो महानिशि । शिवलिङ्गतयोद्भूतः कोटिसूर्यसमप्रभ' इति । एवं 'माघफाल्गुनयोर्मध्ये या च कृष्णाचतुर्दशी । तस्यां जागरणाद्रुद्रः पूजितो भुक्तिमुक्तिदः' इति गारुडाद्युक्तेश्च माघफाल्गुनयोर्ग्रहणं मुख्यगौणमासद्वयाभिप्रायं तथा च शिवरात्रौ शिवार्चने बहुफलश्रवणात् तां तिथिं अनूद्य उद्दिश्य यात्रां विदधे ययावित्यर्थः ॥

अन्येपि तमनुजग्मुरित्याह ॥

२००. पदातय इति ॥ पद्भ्यामतन्तीति पदातयः पादचारिणः । 'अत सातत्यगमने' इत्यस्मात् पादे चेतीणपादस्य पद' त्यादिना पदादेशश्च यान्त्येभिरिति यानानि रथगजादीनि तैः यातुं शीलं येषां ते तथाभूतः केचन जना इत्यर्थः । गजा हस्तिनः अश्वा घोटकाः दोला प्रेङ्खा डोलीति ख्याता 'शिबिका च । 'शिबिका याप्य यानं स्याद्दोला प्रेङ्खादिकास्त्रिया'मित्युभयत्राप्यमरः । तासु विकासन्ते इति विकाशिनः तदारूढा इत्यर्थः बालकैः सहिताः स्त्रियश्च । वयसा यौवनेन सहिताः सवयसो युवानश्च वयोधिका वृद्धाश्च ते समे सर्वे पुरस्था नगरवासिनः चकारेण अन्त- पुरादिवासिनश्च तं विक्रमदेवं नृपोत्तमं समेत्य सङ्गत्य तत्सहिता भूत्वेत्यर्थः । ययुः यात्रां चक्रुः समे इति सर्वादिगणपठितः सर्वपर्यायोयं समः तेन जसः शि भावः ॥

यात्रिणस्तस्य मार्गेऽपि बहुजनसमागम आसीदित्याह ॥

२०१ धरेत्यादि ॥ सा इनेन प्रभुणा राज्ञा सहवर्तमाना सेना सैन्यं । 'इनः सूर्ये प्रभा'वित्यमरः चतुरङ्गसैन्यमित्यर्थः रयात् राजदर्शनोत्सुक्यवेगात् अन्यत्र प्रवाहवेगात् पयः क्षीरं मूलानि कन्दमूलादीनि फलानि कदलीनारिकेलादीनि तदुपहारिभिः उपहारत्वेन तानि गृह्णद्भिः अन्यत्र पयसा प्रवाहजलेन सह मूलफलाद्युपहारिभिः 'पयः क्षीरं पयोम्बु'चेत्यमरः धराटवी ग्रामनिकायेभ्यः पर्वतारण्यसम्बन्धिनिलयेभ्यः

२०२. रयाद्भयाद्दूरमरण्यजन्युषु द्रवत्सु निश्वापदके निरापदः ।
स्वयूथभिन्नान् मृगशावकान् वने निगृह्य पाशैः शिशवो विजह्रिरे ॥

२०३. अचारिषुः साचि पुरस्सरा जरातुराः करालम्बनदण्डखण्डनैः ।
सुवंशकाण्डान् धनुरादिसाधने प्रधावनैः काण्डभृतोऽप्यरुण्डयन् ॥

२०४. सुपल्लवौष्ठस्फुटसौमहास भासुराद्विरेफावलिकोमलालकाः ।
रसाल पुन्नाग कदम्बमङ्गता गताः सखीत्वं वनिता लताश्च ताः ॥

---

निर्गतैः आगतैः अन्यत्र 'निस्सृतैः निकायस्तु पुमाल्लक्ष्ये सधर्मिप्राणिसंहतौ । समुच्चये संहतानां निलये परमात्म'नीति मेदिनी मार्गसङ्गतैः पथिमिलितैः मनुष्याणां वाराः समूहा एव वाराणि वारिसमूहा इव वारिशब्दात् समूहार्थेऽण् प्रत्ययः तैः क्रमेण उत्तरोत्तरवृद्धिक्रमेणापि नदीव आपगेव ववृधे वृद्धिं प्राप ॥

गच्छतः मार्गे वनविहारप्रकारं दर्शयति ॥

२०२. रयादिति ॥ अरण्यजन्युषु वनजन्तुषु 'जन्तुजन्यु शरीरिण' इत्यमरः भयात् बहुजनागमनदर्शनजभ्साध्वसाद्धेतोः रयात् वेगात् दूरं जनशून्यदूरप्रदेशं द्रवत्सु पलायमानेषु सत्सु निर्गताः श्वापदा हिंस्रपशवो यस्मात् शुनोदन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेष्विति वार्तिकोक्त्या दीर्घः श्वापदो हिंस्रपशुरिति हेमचन्द्रः तस्मिन् तथाभूते वने मार्गे विपिने निरापदः नास्ति आपत् येषां ते तथाभूताः शिशवो बालकाः। स्वयूथभिन्नान् स्वमातादि विमुक्तानित्यर्थः मृगशावकान् पलायनासमर्थान् मृगशिशूनित्यर्थः 'शावकशिशु'रित्यमरः पाशैः निगृह्य पाशीकृतरज्जुभिः । बध्वेत्यर्थः विजिह्रिरे विहारं चक्रुः ॥

२०३. अचारिषुरिति ॥ जरया वार्धक्येन आतुरा जरातुरा वृद्धाः करालम्बनदण्डखण्डनैः हस्तालम्बनभूतानां हस्तेग्रहणार्थं वा यष्टीनां छेदनैः उपलक्षिताः दुर्गममार्गसुखसन्तरणार्थमिति भावः तथाभूताः पुरस्सरा अग्रगामिनः सन्तः साचि तिर्यक् यथातथा 'तिर्यगर्थे साची'त्यमरः अचारिषुः सञ्चरितवन्तः काण्डभृतः शस्त्राजीवा अपि धनुरादिसाधने आदिपदेन काण्डादीनां परिग्रहः। धनुर्बाणादिकरणे विषये शोभना ये वंशकाण्डा वेणुदण्डास्तान् 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारि'ष्वित्यमरः। प्रधावनैः गमने विलम्बासहत्वेन शीघ्रगमनैः अरुण्डयन् संगृहीतवन्तः एतेन तन्मार्गे बहवः। सुदृढा वंशवृक्षा अपि वर्तन्ते इति फलितम् ॥

२०४. स्विति ॥ सुमस्य कुसुमस्यायं सौमः 'प्रसूनं कुसुमं सुम'मित्यमरः यद्वा सोमस्य चन्द्रस्यायं सौमः उभयत्रापि तस्येदमित्यण् सौमो हास इव हासः सौम हासः स्वार्थेऽणि सोमस्येव हासः सौमहास इति वा शोभनानि आरक्तस्निग्धकोमलत्वादि गुणविशिष्टत्वादिति भावः यानि पल्लवानि किसलयानि तेष्विव ओष्ठेषु स्फुटैः प्रव्यक्तैः सौमहासैः कुसुमहासैः चन्द्रहासैर्वा भासुराः प्रकाशमानाः अन्यत्र सुपल्लवा एव। ओष्ठा इव तेषु स्फुटैः कुसुमसम्बन्धिहासैः। भासुराः 'द्विरेफावलिर्भ्रमरपङ्क्तिरिव कोमलाः'। सुकुमाराः अलकाश्चूर्णकुन्तला यासां ताः। अन्यत्र द्विरेफावलिरेव कोमलालका यासां ताः रसानालंति

२०५. गुरुप्रधानैः कविमित्रपण्डितद्विजेशमुख्यानुगतैः समावृतः ।
हराद्रियायी विजहार नन्दने वने नराधीश इवामरेश्वरः ॥

२०६. निजोन्नतिं दर्शयतः समुन्नतान् विलोकयन्नध्वनि सालशाखिनः ।
स कीचकैः श्रावितवंशसद्गुणान् तुतोष शृण्वन् रविवंशजाग्रणीः ॥

२०७. शिरोऽवनम्राः फलिनो द्रुमाः पुरः समर्प्य पक्वानि फलान्यतर्पयन् ।
प्रसूनगुच्छं नवपल्लवाञ्जलौ प्रदायतं कुन्दलताप्यमोदयन् ॥

---

गृह्णन्तीति रसाला रसिका ये पुन्नागाः । पुरुषश्रेष्ठाः 'नागः पन्नगमातङ्ग क्रूराचारिषु तोयदे' नागकेसर पुन्नाग नागदन्त प्रभेदके । देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थित इति मेदिनी तेषां कदम्बेन समूहेन सङ्गताः मिलिताः अन्यत्र । रसाला आम्रवृक्षाः 'आम्रश्चूतो रसालोऽसा'वित्यमरः पुन्नागाः वृक्षविशेषाः कदम्बानीपवृक्षाः तैः सङ्गताः वनिताः स्त्रियः । ताः प्रसिद्धाः लताश्च सखीत्वसमानधर्मत्वात् परस्परसौख्यं गताः प्राप्ताः रसिक पुरुषसहिता रसिकाः स्त्रियोपि पुष्पावचयादिना लता निकेतनादिषु विजहुरिति भावः ॥

२०५. गुरुप्रधानैरिति ॥ गुरुर्मन्त्रदः सएव प्रधानं येषां पुरोहितादीनां तैः अन्यत्र बृहस्पतिप्रमुखैः । मन्त्रदो गुरुरित्यागमः । 'बृहस्पतिस्सुराचार्यो गीर्पतिर्धिषणो गुरु'रित्यमरः कवयः कवयितारः मित्राणि सुहृदः पण्डिताः शास्त्रोज्वलबुद्धयः द्विजेशा ब्राह्मणश्रेष्ठाः मुख्यानुगताः प्रधानानुचराः सेनाधिपतिमन्त्रिप्रमुखाः तैः अन्यत्र शुक्रसूर्यबुधचन्द्रप्रधानैर्देवतैः समावृतः वेष्टितः हरः पूर्वोक्तशिवलिङ्गरूपः तद्युक्तोऽद्रिः पर्वतः हराद्रिः तं यातुं शीलं यस्य स तथाभूतः अन्यत्र हराद्रिः कैलासः तद्यायी नराधीशः नरपतिः स विक्रमदेवः नन्दयतीति नन्दनं तस्मिन् आनन्ददायके वने विपिने अन्यत्र नन्दनाख्ये वने अमरेश्वर इन्द्र इव विजहार क्रीडितवान् ॥

२०६. निजोन्नतिमिति ॥ अग्रे नीयत इत्यग्रणीः श्रेष्ठः क्विप् अग्रग्रामाभ्यां चेति णत्वम् । रविवंशजानां सूर्यवंशप्रसूतानामग्रणीः स विक्रमः अध्वनि मार्गे समुन्नतान् । अतिप्रांशून् अतएव निजोन्नतिं स्वकीयमौन्नत्यं दर्शयतः तत्रौन्नत्यमीदृगिवेति प्रदर्शयत इव स्थितानित्यर्थः व्यङ्ग्योत्प्रेक्षा सालशाखिनः सर्जवृक्षान् सालः सर्जतरौस्मृत इति कोशात् विलोकयन् पश्यन् कीचकैः अनिलोद्धतत्वेन स्वनद्भिः वेणुभिः कर्तृभिः 'वेणवः कीचकास्तेस्युर्येस्वनन्त्यनिलोद्धता' इत्यमरः श्राविताः । श्रवणविषयतां प्रापिताः ये वंशानां वेणूनां सद्गुणाः मधुरध्वनिमत्तादयः ते एव गीयमान निजसूर्यवंशसद्गुणा इव तान् शृण्वन् तुतोष । तुष्टिं प्राप ॥

वृक्षलतादिभिरपि पूज्यतेस्मेत्याह—

२०७. शिर इत्यादि ॥ फलिनः फलवन्तः अतएव शिरसा अग्रभागेन अवनम्राः नतमस्तका इति यावत् । उपायन युक्तविनयिजना इवेति व्यज्यते तथाभूताः द्रुमाः वृक्षाः पुरोऽग्रभागे तं नृपं । पक्वफलानि समर्प्य उपायनानीव दत्वा अतर्पयन् । तर्पयामासुः कुन्दलतापि माधवत्वेन तत्रैव तस्याः

२०८. भ्रमन् समन्ताद्बहुपुष्पगन्धभृन्निपीयखेदाद्गिरिनिर्झरोदकम् ।
श्रितस्तरुच्छायमनाकुलः शनैरमुं सिषेवेऽनुगतो वनानिलः ॥

२०९. इति क्षितीशो दिवसद्वयान्तरे तमिस्रसञ्चारिकया सरागया ।
अभीष्टदेशे त्वरितोऽथ सन्ध्यया प्रविष्टवानिष्टकथाकुतूहलात् ॥

२१०. प्रदीप्ततारावलिदीपसङ्कुले स विष्णुमानीह रहस्थले मिलन् ।
गिरित्रयं तन्नवसङ्गमे शिरः स्तनद्वयासक्तमिवैक्षत क्षितेः ॥

प्राचुर्यात् नवपल्लवांजलौ नवपल्लवान्येवांजलिरिव तस्यां स्थितमित्यर्थः प्रसूनगुच्छम् पुष्पस्तबकम् 'स्याद्गुच्छस्तबके स्तम्बे हारभेद कलापयो'रिति मेदिनी। प्रदाय तमेव ग्राहयित्वा अमोदयत् आनन्दयामास 'रिक्तहस्तो न सेवेत राजानं दैवतं गुरु'मित्यादि स्मरणात् वृक्षादयोऽपि फलपुष्पादिना यं सेवन्ते स्मेत्यर्थः ॥

वनानिलोऽपि तं सिषेवेति तत्सेवाप्रकारं दर्शयति—

२०८. भ्रमन्निति ॥ समन्तात् परितः भ्रमन् पर्यटन् बहूनाम्। नानाविधानां पुष्पाणाम् गन्धभृत् गन्धवाहकः। अतएव खेदात् परिभ्रमणजन्य परिश्रमाद्धेतोः गिरिनिर्झराणां पर्वतनिस्सृत वारिप्रवाहाणां 'वारिप्रवाहे निर्झरो झर' इत्यमरः उदकम् जलम्। निपीय पीत्वा तरूणां छाया तरुच्छायम् छायाबाहुल्ये इति क्लीबत्वं तत् श्रितः सेवितः यथा कश्चिद्भ्रमणपरिश्रान्तः तृषितो जलं पीत्वा छायामाश्रित्य शनैर्गच्छति तद्वदेवेत्यर्थः। न आकुलोऽनाकुलः जलपानादिना परिहृतखेदत्वेनाव्याकुलित इत्यर्थः तथाभूतो वनानिलः अरण्यमध्यसञ्चारी वायुः अमुम् विक्रमदेवम्। अनुगतः पृष्ठसञ्चारित्वेन अनुकूलतां प्राप्तस्सन्। शनैः सुखतयेत्यर्थः 'अद्रुते शनै' रित्यमरः सिषेवे सेवितवान्। राज्ञोऽपि गमनपरिश्रमजन्यखेदं व्यपनोदयामासेत्यर्थः वायोरनुकूलगतिर्हि प्रशस्ता इह वायोर्वनानिल इत्यनेन वनबहिर्भूतस्य मान्द्योपलंभेपि वनमध्यगतस्य तस्य गतौ। कदाचिदौद्धत्य प्रातिकूल्यादिशङ्कायां तन्निरासाय उत्तरोत्तरत्र हेतुत्वप्रदर्शनाय च तरुच्छायाश्रितत्वादिविशेषणमुपात्तमिति न व्यर्थविशेषणतेति बोध्यम् ॥

२०९. इतीति ॥ क्षितीशः क्षितिपतिः स विक्रम इत्यर्थः इति । अनेन प्रकारेण दिवसद्वयान्तरे दिवसद्वयानन्तरम्। तमिस्रमन्धकारम् सञ्चारयति प्रापयतीति तमिस्रसञ्चारिका सैव तमिस्रे सञ्चारिका दूती। दूती सञ्चारिके समे' इत्यमरः तया सरागया रक्तिमा गुणयुक्तया अनुरागसहितयेति च व्यज्यते तथाभूतया सन्ध्यया सायंकालेन हेतुना स्त्रीलिङ्गाक्षिप्तया दूतीकर्मकारिण्या कयाचित् स्त्रियेवेति च व्यज्यते । त्वरितः त्वरां प्रापितस्सन्नित्यर्थः इष्टकथाकुतूहलात् इष्टैस्सह रहस्यकथोपकथनकौतुकात् नर्मकथा कौतुकात्। इति च व्यज्यते । अभीष्टदेशे पूर्वोक्तशिवलिङ्गाधिष्ठानभूमौ रतिसङ्केतनिकेतनप्रदेश इवेति च व्यज्यते। प्रविष्टवान् प्रविवेश ॥

२१०. प्रदीप्तेति ॥ विष्णुम् आत्मानं मन्यत इति विष्णुमानी आत्ममाने खश्चेति चकारात्सुप्युपपदे णिनिः। 'नाऽविष्णुः पृथिवीपति'रित्यादि स्मरणात्। स्वात्मानं विष्णुं मन्यमान इत्यर्थः। स विक्रमः प्रदीप्त तारावलय एव दीपाः तैः सङ्कुले आकीर्णे इहास्मिन् रहस्थले एकान्तस्थाने मिलन् प्रविशन् सन्

२११. व्यलोकयत्तत्र च तद्वलित्रयाकृतिं त्रिधारां शबरीं सरिद्वराम् ।
लुठन्ति बाणोपलकल्पमेखला गळच्छिलारत्नचया यदन्तरे ॥

२१२. निवेशयोग्ये जघनश्रियात्मनो मनोरमे तत्पुलिने कृतश्रयः ।
निजाङ्गसङ्गात्परितः प्रकम्पयन् सुखेन रात्रिं गमयाम्बभूव सः ॥

२१३. पुरः प्रभातप्रहरिण्यथो हरित्सुरक्षित क्षेत्र भुवि स्मरद्विपः ।
निरीक्ष्य सम्यक् तमगम्य गामिनं बभूव कोपादिव लोहितानना ॥

---

तत् पूर्वोक्तरूपम् गिरित्रयम् पर्वतत्रयम् कर्म नवसङ्गमे स्वस्य प्रथमसङ्गमसमये क्षितेः भूदेव्याः स्तनद्वया-सक्तम् कुचद्वयमभ्यावलम्बितं लज्जयेति भावः शिरो मस्तकमिव ऐक्षत दृष्टवान् शिवदर्शनार्थं गतस्यापि भूपतेस्तस्य विष्णु मानित्वेन 'क्षित्यंशे' साद्दश्यमहिम्ना तथा ऐक्षत किमित्युत्प्रेक्षाया कवि गतत्वेन कल्पनया न प्रकृतेश्वर भक्तेरपकर्षः एवमुत्तरत्रापि बोध्यम् ॥

२११. व्यलोकयदिति ॥ तत्र तत्पर्वतत्रयस्य पश्चिमप्रदेशे तिस्रोधारा जलप्रवाहरूपा यस्यास्तां अतएव तस्या भूदेव्याः वलित्रयस्य त्रिवल्या आकृतिरिव आकृतिर्यस्यास्तां शबरीम् तन्नाम्नीम् पूर्वोक्तां सरिद्वरां सरितां नदीनां वरा श्रेष्ठा तां व्यलोकयत् विलोकयामास यदन्तरे यस्यास्त्रिवलीरूपायाः सरिद्वरायाः अन्तरे मध्यप्रदेशे बाणेन पूजिता उपला बाणोपलाः । बाणलिङ्गानि तत्कल्पास्तत्सदृशा इत्यर्थः । ईषदसमाप्तौ कल्प प्रत्ययः मेखला शैलनितम्बम् सैव काञ्ची 'मेखला खड्गबन्धे स्यात् काञ्ची शैल नितम्बयो'रिति मेदिनी ततो गलन्तः स्खलन्तः ये शिलारत्नचयाः पाषाणश्रेष्ठसमूहा ते एव अश्मजाति मणिसमूहा इव लुठन्ति विलसन्ति 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसक'मिति मेदिनी। पर्वतनितम्बस्खलित पाषाणा यदन्तरे बाणलिङ्गाकृतयो भूत्वा दृश्यन्ते तएव काञ्ची विलुलित रत्नचया इव परिदृश्यन्त इत्यर्थः तत्र तस्याम् नद्याम् बह्व्यः बाणलिङ्गाकृतयः शिलाः लभ्यन्त इति ज्ञेयम् ॥

२१२. निवेशयोग्य इति ॥ जघनश्रिया । स्त्रीकट्याः पुरोभाग लक्ष्म्या स्त्रीकट्याः 'क्लीबे तु जघनं पुरः' इत्यमरः मनोरमे शोभने अतएव आत्मनः स्वस्य निवेशयोग्ये प्रवेशनार्हे तत्पुलिने तस्याः शबरी नद्या तोयोत्थित वालुकामयप्रदेशे कृतश्रयः कृतस्थितिः गमकत्वात्समासः सविक्रमः निजानि स्वकीयानि यानि अङ्गानि चतुरङ्गसैन्यरूपाणि तान्येव अवयवविशेषा इति व्यज्यन्ते तेषां सङ्गात् संसर्गात् तानि सङ्गमय्येत्यर्थः ल्यब्लोपे पञ्चमी परितः तद्व चतुः पार्श्वं प्रकम्पयन् सैन्ययातायातमुखघोषैः पूरयन्नित्यर्थः भूशरीरं परिचालयन्निति च व्यज्यते रात्रिं तां निशां सुखेन गमयाम्बभूव प्रापयामास सुखेनेत्यत्रप्रकृत्यादिभ्य उपसंख्यानमिति तृतीया ॥

इतःप्रभृति पञ्चभिः श्लोकैः प्रातःकालं वर्णयति ॥

२१३. पुर इति ॥ अथो निशावसाने इत्यर्थः 'प्रभातप्रहरिणीप्रभातप्रहरविशिष्टा 'द्वौ यामप्रहरौ समावित्यमरः । पुरो हरित् पूर्वादिगित्यर्थः 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता' इत्यमरः । सैव पुरोऽग्रे विद्यमाना प्रभाते प्रहरिणी यामिका यामरक्षिणीति यावत् काचिन्नायिकेव सा स्मरं कन्दर्पं

२१४. निशाचरञ्चौरं भुजङ्गसङ्गिनीं कुकर्मिणीं कुञ्च कुकारमुच्चरन् ।
तमः पटोत्फेटनदृष्टविग्रहां व्यगर्हत स्पष्टतयैव कुक्कुटः ॥

२१५. प्रबोध्यमानो ननु सत्यवाक्स्वनैर्भुजङ्गघाती क्षितिभृत्समाश्रितः ।
विभेद्यपुंसो वनिताश्च कुत्सयन् चकार केकाध्वनिमुच्चकैर्मुहुः ॥

---

द्वेष्टीति स्मरद्विट् शिवः तस्य कन्दर्पद्वेषिणोऽपि शिवस्येत्यर्थः सुष्ठु रक्षिता या क्षेत्रभूः तस्यां सुपालितसिद्ध स्थानभूतपृथिव्यामित्यर्थः 'क्षेत्रं शरीरे केदारे सिद्धस्थान कळत्रयो'रिति मेदिनी अगम्ये तस्मिन् भूप्रदेशे गामी गमनशीलः सएव अगम्यस्रोजनगामी तं तथाभूतं तं विक्रमं सम्यक् निरीक्ष्य याथातथ्येनावलोक्य कोपात् क्रोधादिव लोहिताननाः आरक्तवदना बभूव अरुणोदये हि पूर्वदिङ्मुखम् रक्तवर्णं भवति रक्तौ च क्रोधरागावित्यादि कविसमयसिद्धत्वात्तद्युक्तस्यापि तथात्वं प्रतिपत्तव्यमिति ॥

२१४. निशाचरदिति ॥ कुक्कुटः कुं पृथिवीं कुटतीति । पृषोदरादित्वात्साधुः तथा प्रसिद्धनामा चरणायुधश्च निशायाम् चरन्तीति निशाचरन्तो रात्रिंचराः राक्षसादयः चौरास्तस्कराः भुजङ्गाः सर्पाः पिङ्गाश्च । 'भुजङ्गस्सर्पविङ्गयो'रिति हैमः । तत्सङ्गिनी तत्संसर्गिणी सैव निशायां सञ्चरतः चौरवत् प्रच्छन्नकामुकस्य पिङ्गस्य संसर्गिणी ताम् । अतएव कुकर्मिणीम् कुत्सितानि कर्माणि चौर्यादीनि परपुरुषसंसर्गादीनि च अस्याः सन्तीति तां तथाभूतां तमोऽन्धकारएव पटः प्रच्छादनपटः यवनिकास्वरूप इति यावत् तस्योत्फेटनेन परिहरणेनेत्यर्थः । दृष्टविग्रहां प्रकाशितस्वरूपां कुं पृथिवीम् । 'गोत्रा कुः पृथिवी पृथ्वी'त्याद्यमरः । कुकारं कुत्सार्थक कुशब्दमित्यर्थः वर्णात्कार इति कारप्रत्ययः 'पापकुत्सेषदर्थे कु' इत्यमरः उच्चरन् उच्चैः शब्दयन्नित्यर्थः । स्पष्टतयैव प्रव्यक्तत्वेनैव व्यगर्हत निनिन्द 'कुत्सा निन्दा च गर्हणे' इत्यमरः कुक्कट रुते हि कुकार श्रुतेरिति भावः ॥

२१५. प्रबोध्यमान इति ॥ क्षितिम् बिभर्तीति क्षितिभृत् पर्वतः स एव क्षितिपोषकः तं समाश्रितः पर्वतशिखरारूढ इत्यर्थः । अस्य च क्षितिपोषकसमाश्रितत्वेन क्षिति रक्षणसमुचिततापि व्यज्यते तथाभूतो भुजङ्गघाती भुजङ्गान् सर्पान् हन्तीति णिनिः मयूर इत्यर्थः तस्य भुजङ्ग भुक्तत्वात् सएव पिङ्गघाती सत्या वाक् येषां ते सत्यवाचः काकाः सत्यवाक्काक इति त्रिकाण्डशेषः ते एव तथ्यवादिनः तेषाम् स्वनैः ध्वनिभिः कथनरूपैरित्यर्थः प्रबोध्यमानः विनिद्र इत्यर्थः स एव प्रकर्षेण जानानश्च तथाभूतः ननु इत्यवधारणे पुंसः पुरुषान् वनिताः स्त्रियश्च विभेद्य पृथक्कृत्य कुत्सयन् निन्दयन् सन् कुत्सधातुः क्वचित्परस्मैपदीति दुर्गादासः मुहुः पुनः पुनः उच्चकैरुच्चैः अव्ययसर्वनाम्नामित्यादिना टेः प्रागकच् केका ध्वनिम् चकार कृतवान् 'केकावाणी मयूरस्ये'त्यमरः' किम् शब्दस्य कुत्सार्थकत्वम् मनसि निधाय के इत्यनेन पुंलिङ्ग निर्दिष्टाः पुरुषाः कुत्सिताः का इत्यनेन स्त्रीलिङ्गनिर्दिष्टाः स्त्रियश्च कुत्सिता इति विभेद्य केकाध्वनिम् प्रवर्तयामासेत्यर्थः । 'किं कुत्सायाम् वितर्के च निषेध प्रश्नयोरपी'ति मेदिनी ॥

२१६. द्विजालि कोलाहलशब्दसूचनैः प्रचण्डरश्मिश्च करं प्रसारयन् ।
विनिस्सृतानामलिनां छलात्समुत्चकर्ष निस्त्रिंशकमब्जकोशतः ॥

२१७. व्यधत्त तत्त्रास वशात्कुमुद्वती ततिस्तदेन्दीवरनेत्रमुद्रणम् ।
अकीर्तयन् कृष्ण शिवेश माधवाच्युतेति दुर्गेति च साधवो मुखे ॥

२१८. अथोत्थितोऽसौ पुरुषोत्तमः शयात्सशङ्खशब्दं त्वरया गदाशयः ।
शिवं स्मरन् सङ्गतचक्र चङ्क्रमात्स्वभूपदेऽर्कं रजसाप्यधापयत् ॥

---

२१६ द्विजेत्यादि ॥ सूच्यते ज्ञायते एभिरिति सूचनानि द्विजाः पक्षिणस्ते एव 'विप्राः दन्तविप्राण्डजाद्विजा' इत्यमरः तेषामालीनां श्रेणीनां कोलाहलशब्दा एव सूचनानि तैः सह प्रचण्डारश्मयो यस्य सः उष्णरश्मिः सूर्य इत्यर्थः स एव तीक्ष्णरश्मिवान् पुरुष इत्यर्थः स च करः किरणमेव करो हस्तः तं प्रसारयन् वर्धयन्नित्यर्थः अब्जानाम् पद्मानां कोशः कुड्मलमेव कोशः खड्ग पिधानम् ततः पञ्चम्यां तसिल् 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघ दिव्ययो'रित्यमरः विनिस्सृतानाम् निर्गतानाम् 'अलीनाम् भ्रमराणां मधुलिट् मधुपालिन' इत्याद्यमरः। छलात् व्याज्यात् निस्त्रिंश एव निस्त्रिंशकः खड्गस्तं समुत्चकर्ष उत्कृष्टवान् 'खड्गे तु निस्त्रिंश' इत्याद्यमरः ॥

२१७. व्यधत्तेति ॥ तदा तस्मिन् समये कुमुद्वतीततिः। कुमुदिनीकुलम् तस्मात् प्रचण्डरश्मेः त्रासवशात् भयवशात् इन्दीवराण्येव नेत्राणि नयनानि । तेषाम् मुद्रणम् निमीलनम् व्यधत्त चकार साधवः सज्जनाः कृष्ण शिव ईश माधव अच्युत इति ईश्वरनामानीत्यर्थः दुर्गेति च उपलक्षणत्वादितरदेवीदेवनामानि च मुखे निजवक्त्रे अकीर्तयन् कीर्तयामासुः शुभाकांक्षिणो हि सज्जनाः प्रातःकाले परोपघातसमयेऽपि । ईश्वरनामकीर्तनम् कुर्वन्तीति ॥

२१८. अथेति ॥ अथ अनन्तरं शयात् शय्यायाः 'शयः शय्या हि पाणिषु' इति मेदिनी। त्वरया अभ्युदितत्वभिया सम्भ्रमेणेत्यर्थः अनिष्टदर्शनजन्ययेति च व्यज्यते शङ्खशब्देन सह यथा तथा सशङ्खशब्दं उत्थितः शिवालये राजभवनादावपि प्रातः शङ्खान् वादयन्तीति प्रसिद्धिः शङ्खसंयोगेन विष्णुरूपार्थोऽपि स्मर्यते। उक्तं च संयोगो विप्रयोगश्च साहचर्यम् विरोधिता अर्थः प्रकरणं लिङ्गम् शब्दस्यान्यस्य सन्निधिः सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृति हेतव इति। अगदोऽरुगणः स्वच्छ इति यावत् आशयोऽभिप्रायो यस्य सः नास्ति गदा शये करे यस्य स इत्यनेनापि गदावियोगो विष्णुरूपार्थं स्मारयति उक्तप्रामाण्यात् असौ पुरुषोत्तमः पुरुषश्रेष्ठः क्षितीश इत्यर्थः स एव पुरुषोत्तमो विष्णुः शिवं स्मरन् शिवनामोच्चरन् यद्वा पूर्वोक्तं शिवलिङ्गम् चिन्तयन्नित्यर्थः खड्गोत्तोलनादि रूपानिष्टं दृष्ट्वा स्वस्य शिवं मङ्गलम् चिन्तयन्निवेति च व्यज्यते सङ्गतं स्वानुगतं यच्चक्रम् सैन्यम् तदेवायुधविशेषरूपम् 'चक्रः कोके पुमान् क्लीबम् व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयो'रिति मेदिनी तस्य चङ्क्रमात् पुनः पुनः भ्रमणात् परिभ्रामणेनेत्यर्थः अर्कम् समुदयन्तम् उक्तरूपम् प्रचण्डरश्मिमित्यर्थः स्वभूपदे विष्णुपदे आकाशे इति यावत् 'केशवो माधवस्स्वभू'रिति 'विष्णुपदं वा तु पुंस्याकाश

२१९. लताप्रतानैर्जटिलाः स वल्कलाः शिलाकुलोत्सेधविवृद्धशाखिनः ।
वसन्तमन्ते तमबोधयन् तदा पिकास्य निर्यत्स्वरसामसूक्तिभिः ॥

२२०. स तान् समीक्ष्य प्रतिपक्षिणो मनुप्रगल्भिनो ह्रीङ्कृत हुङ्कृतस्वनैः ।
लता कुटीरेषु च मौनमास्थितान् वनेस्थितान् तत्र तुतोष धर्मवित् ॥

२२१. पुरस्कृतैः कोमलबिल्वपल्लवैः फलैश्च पुष्पैश्च पृथग्विधैस्तदा ।
हरार्चनाय त्वरयाञ्चकार तं वनस्थली मालिककन्यका यथा ॥

---

विहायसी'ति चामरः । तस्मिन्नेव स्वकीय भूसंलग्नपादस्थाने रजसा स्वसैन्यचक्रोत्थितधूलिपटलेनेत्यर्थः तेनैव निजपादस्थानीय रजसा अप्यधापयत् आच्छादयामास ' अपिधान तिरोधान पिधानाच्छादनानि ' चेत्यमरः ॥

२१९. लतेति ॥ तदा तस्मिन्समये लतानां प्रतानाः शाखाः पल्लवच्छयाः तन्तुरूपास्तैः जटा एषाम् सन्तीति जटिलाः पिच्छादित्वादिलच् 'मूले लग्नकचे जटे' त्यमरः वल्कलैः त्वग्भिः सह वर्तमानाः सवल्कलाः शिलाकुलानां पाषाणसमूहानां उत्सेधेषु उच्छ्रायेषु उन्नतप्रदेशेषु इत्यर्थः विवृद्धाः विशेषेण उच्छ्रिताः वयोधिकाश्च ये शाखिनः वृक्षाः ते एव अधीतत्वेन वेदांशा एषां सन्तीति वेदशाखैकदेशाध्यायिन इत्यर्थः । 'शाखाद्रुमांशे वेदांशे भुजे पक्षान्तरेऽन्तिके' इति हैमः पिकास्येभ्यः कोकिलवक्त्रेभ्यो निर्यन्तः निर्गच्छन्तो ये स्वरा ध्वनिविशेषाः ते एव सामसूक्तयः सामवेदोक्त मन्त्रपाठाः सान्त्ववचनानि च तैः अन्ते निकटे वसन्तं पुष्पसमयं तदानीमेव कोकिलरुतस्य प्रसिद्धेः अथ च वसतीति वसन् तं स्वनिकटोपविष्टम् तम् विक्रमम् अबोधयन् प्रबोधयामासुः तत्त्वमजानाना नैते वनवासिनस्तपस्विनो हिंस्याः नाप्ययं शरणापन्नोपीति प्रबोधितवन्त इवेत्यर्थः प्रकृते वसन्ततुप्रादुर्भावं प्रबोधितवन्त इत्यर्थः ॥

२२०. सेति ॥ धर्मं वेत्ति जानातीति धर्मवित् स विक्रमः तत्र वनेस्थितान् अरण्यवासिनः ते एव वानप्रस्थाश्रमावलम्बिन इत्यर्थः ह्रीम् कृत हूम् कृत स्वनैः ह्रींकार हूङ्कार ध्वनिभिः मनुशब्दो मन्त्रसंज्ञेत्यागमः ह्रीङ्कारस्य शक्तिबीजत्वात् हूङ्कारस्य रुद्रबीजत्वात् तद्रूपान् मनून् मन्त्रानित्यर्थः प्रगल्भितुं शीलमेषामिति प्रगल्भिनः उच्चैर्मन्त्रजल्पनशालिनः मन्त्राणामितरासंवेद्यतया जपत्व्यत्वेऽपि प्रगल्भिन इत्यनेन तत्प्रकटनकथनम् भयात् स्वस्येश्वरोपासकत्व ज्ञापनेन स्वात्मसंरक्षणार्थमिति वेदितव्यं लता एव कुटीराः स्वल्पगृहाः कुटीशब्दादल्पार्थे रप्रत्ययः तेषु मौनं आस्थितान् आलम्बितान् ध्याननिष्ठांश्चेति यावत् । कांश्चिदित्यर्थः तथाभूतान् तान् प्रतिपक्षिणः प्रत्येकाश्चते पक्षिणश्च ते एव प्रतिकूलः पक्षोऽस्त्येषामिति विरोधिनः । तान् समीक्ष्यावलोक्य तुतोष नैते वधार्हा इति शमं प्रापेत्यर्थः प्रकृते अहो महेशविपिनस्य माहात्म्यम् यत्र पक्षिणोऽपि मन्त्रपाठकाः ध्याननिष्ठाश्चेति तुष्टिं प्रापेत्यर्थः ॥

२२१. पुरस्कृतैरिति ॥ तदा तस्मिन् समये वनस्थली सैव वनभूमिः पुरस्कृतैरग्रतः प्रदर्शितैः कोमलबिल्वपल्लवैः अभिनवबिल्वपत्रैः पृथग्विधैः नानाप्रकारैः फलैः कदल्यादिभिः पुष्पैः अर्कद्रोणादिभिश्च हरार्चनाय शिवलिङ्गपूजनाय तं विक्रमं मालिककन्यका यथा मालाकारकन्येव त्वरयांचकार

२२२. अलौकिकालोकनष्टकृमानसोऽप्यसौ मनीषीकृतनित्यसत्क्रियः ।
गृहीतसम्भारचयः शिवार्चने महोत्सवैस्तद्विशतिस्म गह्वरम् ॥

२२३. तमन्वगात्तत्र बहिः समुद्रवत् स्थितो जनानां निवहो महास्वनैः ।
बिले सुमेरोः सुरदन्तिकल्पिते भगीरथं त्रैपथगप्रवाहवत् ।

२२४. घृतप्रदीपान् पुरतः प्रदीपयन् सहार्दभक्त्या पदमस्तकं नृपः ।
अपूपुजत्क्षिप्त दृगब्जमालया लयादुपेत्य प्रथमं तमीश्वरम् ॥

---

त्वरयामास स्वयमेव शुचिर्भूत्वा वनं पर्यटन् बिल्वपत्राद्यवचयम् कृतवानित्यर्थः राज्ञोऽस्य बहुभृत्यस्यापि पुष्पाद्याहरणे स्वयं प्रवृत्तिस्तु । 'याचितं निष्फलं पुष्पं क्रयक्रीतञ्च निष्फलं' । इत्यादिना परोपहृत पुष्पादेर्निष्फलत्व श्रवणात् । समित्पुष्पकुशादीनि ब्राह्मणस्स्वयमाहरेदिति हारीत शातातपाद्युक्तेः स्वयमाहरणीय त्वस्यापि तस्य तस्य विहितत्वाच्चेति बोध्यम् ॥

२२२ अलौकिकेति ॥ मनीषा अस्यास्तीति मनीषी विद्वान् कर्मणाम् पौर्वापर्यज्ञानवानिति यावत् अतएव अलौकिकस्य लोकोत्तरभूतस्य पूर्वोक्तरूपस्य । शिवलिङ्गस्य तत्स्थानादेश्च आलोकने दर्शने विषये तदिच्छयेत्यर्थः कृष्टं आकर्षितं मानसं मनो यस्य स तथा भूतोऽपि कृताः क्रमेणाचरिता नित्याकरणे प्रत्यवायसाधनभूताः सत्क्रियाः स्नानसन्ध्यावन्दनादिरूप प्रातःकृत्यानि येन स तथाभूतः असौ विक्रमदेवः शिवार्चने तस्य शिवलिङ्गस्य पूजने विषये गृहीतः सम्भारचयः पूजोपकरणद्रव्यसमूहो येन स तथाभूतः सन् महोत्सवैः गीतवादित्रनृत्यादिभिः सह तत्र पूर्वोक्तं शिवाधिष्ठानभूतं गह्वरम् गुहाम् विशति स्म प्रविवेश स्म योगे भूतार्थे लट् ॥

२२३. तमन्वगादिति ॥ तत्र गह्वरद्वारं बहिः बाह्यप्रदेशे महास्वनैः मुखरावैः अन्यत्र कल्लोलादिजन्यैः समुद्रवत् समुद्रेण तुल्यः स्थितः जनानां निवहः समूहः तं गह्वरप्रविष्टं विक्रमदेवं सुरदन्तिना ऐरावतेन गजेन कल्पिते दन्ताघात निष्पादिते सुमेरोः मेरुपर्वतस्य बिले छिद्रप्रदेशे । भगीरथम् भगीरथनामानम् नृपं त्रिपथगायाः गङ्गाया अयं त्रैपथगः स चासौ प्रवाहश्च तेन तुल्यः गङ्गायाः निर्झर इव अन्वगात् अनुप्रविवेश ऐरावतस्फोटितमेरुपर्वतबिले प्रयान्तं भगीरथं गङ्गाप्रवाहवत तत्र गह्वरे तं विक्रमं जनसमूहोऽनुययावित्यर्थः ॥

२२४. घृतप्रदीपानिति ॥ नृपः स विक्रमः तं ईश्वरं महालिङ्गाकारं उपेत्य तत्समीपं प्राप्य पुरतः अग्रे घृतप्रदीपान् घृतपूरितप्रदीपान् । प्रदीपयन् प्रज्वालयेत्यर्थः हृदयस्य कर्म हार्दम् । युवादित्वादण् हृदयस्य हृल्लेख यदण् लासेष्विति हृदादेशः तेन सह वर्तमाना सहार्दा साचासौ भक्तिश्च तया सप्रेमभक्त्या 'प्रेमाना प्रियता हार्द'मित्यमरः । प्रथमं पूर्वम् आपादमस्तकं तस्य शिवलिङ्गस्य पदप्रदेशादारभ्य मस्तकपर्यन्तमित्यर्थः । आपदान्मस्तकात् आ आपदमस्तकमिति मर्यादाऽभिविध्यर्थकाङ्द्वयप्रश्लेषात्तथाऽर्थलाभात् क्षिप्तया समर्पितया दृशएवाब्जानि तेषां मालया परिक्षिप्तनेत्रनीलोत्पलस्रजेत्यर्थः । लयात् संश्लिष्य लीङ् श्लेषणे इति धातुः एरच् इति भावेऽच् ल्यब्लोपे पञ्चमी सम्यक् निरूप्येत्यर्थः । लयात् विलासादिति

२२५. द्विषड्गुणं वृत्तमितौ समुन्नतावपौरुषेयं पुरुषप्रमाणकम् ।
शिरः प्रदेशादवलम्बि पिङ्गळ ज्वलज्जटाजूटकरं विताङ्गकम् ॥

२२६. जगन्निवासं शुषिरत्रयच्छलाज्जगन्तिपन्नाभि शिरःसु बिभ्रतम् ।
विराजते यत्र सदा तदन्तरा स्रवत्तनुः संश्रयिणी त्रिमार्गगा ॥

---

घार्थः 'लयस्तूर्यंलघी साम्यसंश्लेषण विलासयोरिति हैमः अपूपुजत् पूजयामास णिजन्तात्लुङ् सर्वेऽपि प्रथमं तं लिङ्गमेव सादरम् ददृशुरिति भावः ॥

इतः प्रभृति तमेव शिवलिङ्गम् नवभिः श्लोकैः वर्णयति ॥

२२५. द्विषड्गुणमित्यादि ॥ प्रथमं तस्योत्सेधान्नत्यादि प्रकारं दर्शयति—द्विषड्गुणमिति ॥ किं भूतम् तं लिङ्गाकारेश्वरं अपौरुषेयं पुरुषेण कृतः पौरुषेयः सर्वपुरुषाभ्यां णढञाविधयत तेनकृतमित्यर्थे ढञ् स न भवतीत्यपौरुषेयस्तं न शिल्पिकृतं किन्तु स्वयं भूतमेवेत्यर्थः समुन्नतौ औन्नत्ये पुरुषप्रमाणकं पुरुषस्य प्रमाणं मानमेव प्रमाणं यस्य तं सार्धहस्तत्रयपरिमितमित्यर्थः ऊर्ध्वविस्तृत दोः पाणिनृमाने पौरुषं त्रिष्विति कोशात् । सार्धहस्तचतुष्टय परिमितमितिवार्थः । उभयत्राप्यनिश्चयात् यत्किंचित् न्यूनाधिकत्वेपि न क्षतिः वृत्तमितौ परिधिमाने स्थौल्ये इति यावत् द्विषड्गुणं द्वाभ्यामङ्काभ्यां सङ्गुणो गुणनं यस्य द्वौ सङ्गुणौ यस्येति वातं औन्नत्यमानेन द्विगुणितमित्यर्थः तथा च औन्नत्ये वितस्त्यधिक हस्तत्रयपरिमितत्वे तद्द्विगुणितत्वेन सप्त-हस्तपरिमितम् तद्वर्तुलाकारशरीरस्य वेष्टनमानमित्यर्थः । पुनः किं भूतं शिरः प्रदेशात् शिरोदेशमारभ्य अवलम्बिनो अवलम्बमानाः पिङ्गळाः पिङ्गवर्णाः ज्वलन्तो जाज्वल्यमानाश्च ये जटानां जूटाः समूहाः तैः करम्बितम् मिलितमङ्गं तस्य तं परितोऽपि लिङ्गशरीरं जटाकार सुघटितमिति भावः ॥

२२६. जगन्निवासमिति ॥ निवसन्त्यस्मिन्निति निवास आश्रयस्थानं जगतां निवासस्तं जगदाधार-स्वरूपमित्यर्थः अत एव 'पन्नाभि शिरः सुपादनाभि शिरःप्रदेशेषु दकारान्तोऽपि पच्छब्दोऽस्ति 'पदंघ्रिश्च-रणोऽस्त्रिया'मित्यमरः पद्दन्नोमासीति सूत्रे प्रभृति ग्रहणस्य प्रकारार्थकत्वात् पादादेश एवायं पदित्यन्ये शुषिराणाम् रन्ध्राणाम् त्रयं तच्छलात् तद्व्याजात् जगन्ति भुवनानि पाताळ मर्त्य स्वर्गरूपाणीत्यर्थः । बिभ्रतं बिभर्तीति बिभ्रत् तं धारयन्तमित्यर्थः । श्लुविकरणस्य डुभृञ् धारणपोषणयोरित धातोः शतृप्रत्यया-न्तस्य श्लाविति द्वित्वे भृञामिदिति अभ्यासस्य इत्वे च रूपं नाभ्यस्ताच्छतुरिति नुमभावः यत्र त्रिष्वपि जगत्सु संश्रयोऽस्या अस्तीति संश्रयिणी जगत्त्रयाश्रितेत्यर्थः त्रयाणां मार्गाणां स्वर्ग मर्त्य पाताळकल्पितानां समाहारस्त्रिमार्गं तेन गच्छतीति त्रिमार्गगा त्रिपथगा उक्तं च महाभारते 'क्षितौ तारयते मर्त्यान् नागां-स्तारयतेऽप्यधः । दिवि तारयते देवांस्तेन त्रिपथगा स्मृते'ति तथा त्रिमार्गगादि पदवाच्या गङ्गेत्यर्थः 'गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा भागीरथी त्रिपथगे'त्यमरः तदन्तरा तस्य शुषिरत्रया पह्नुतजगत्त्रयस्य मध्ये इत्यर्थः स्रवन्त्यस्तनवस्त्रिस्रः प्रवाहरूपा यस्याः सा तथाभूता सती सदा सर्वदा विराजते प्रकाशते अयं भावः तस्य शिवलिङ्गस्य शरीरे मूलमध्याग्रभागेषु त्रिषुस्थानेषु त्रीणि छिद्राणि वर्तन्ते तेभ्यः सर्वदापि गङ्गारूप जलस्रावो भवतीति बोध्यम् ॥

२२७. प्रकाशयन्तं निजमैश्वरं शिरस्थया तया विष्णुपदं पदस्थया ।
त्रिभावतो नाभिकमण्डलुस्थया विरिञ्चिचिह्नं ननु जह्नुकन्यया ॥

२२८. प्रदर्शयन्तं हृदयाद्दयारसं प्रसेच्य सुव्यक्ततया च तत्त्रिषु ।
त्रिधा विभक्तामध ऊर्ध्वमध्यगां त्रिलोक भक्तानिव मुक्तिपद्धतिम् ॥

२२९. जगच्छरीरे क्षितिचक्रमध्यगं स्फुटप्रतीची वदनं स्वयम्भुवम् ।
सदा सुधास्राव निरन्तरान्तर त्रिनाडिवक्रैरिव विद्धविग्रहम् ॥

एवं जगदाधारस्वरूपं प्रदर्श्य त्रिमूर्ति सङ्केतमपि दर्शयति ॥

२२७ प्रकाशयन्तमिति । त्रयाणां ब्रह्म विष्णु रुद्राणां भावः त्रिभावः तस्मात् पञ्चम्यां तसिल् ब्रह्म विष्णु रुद्रात्मकत्वादित्यर्थः । शिरस्थया मस्तकस्थितया तया पूर्वोक्तरूपया शुपिरस्राविण्येत्यर्थः जह्नु कन्यया गङ्गया निजं स्वकीयमैश्वर्यं ईश्वरत्वं प्रकाशयन्तं प्रकटीकुर्वन्तं ईश्वरमूर्तेः शिरसि गङ्गाया विद्यमानत्वादिति भावः पदस्थया पादस्थानस्थितया तया जह्नुकन्ययैवेत्यर्थः 'विष्णुपदं विष्णोर्लक्ष्मपदं/ व्यवसितित्राणस्थान लक्ष्माङ्घ्रिवस्तु'ष्वित्यमरः । अत्रापि प्रकाशयन्तमिति योज्यं गङ्गाया विष्णुपादाग्रसम्भूतत्वादिति भावः तथा नाभिकमण्डलुस्थया नाभिरेव कमण्डलु तत् स्थितया तया विरिञ्चिचिह्नं ब्रह्मलक्षणं प्रकाशयन्तं 'धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासन इति' 'चिह्नं लक्ष्म च लक्षण'मिति चामरः ननु इत्यवधारणे गङ्गाया ब्रह्मकमण्डलुस्थत्वकथनाच्चेति भावः उक्तं च पद्मोत्तरखण्डे त्रिविक्रमावतारवर्णन प्रस्तावे ततः पितामहो दृष्ट्वा चक्रपद्मादि चिह्नितं श्रीपादं देवदेवस्य हर्षसम्भ्रमचेतसा धन्योऽस्मीति वदन् ब्रह्मा गृहीत्वा स्वं कमण्डलुं भक्त्या प्रक्षालयामास तत्र संस्थित वारिणा इत्यादि गङ्गोत्पत्तिप्रकारस्तत्रैव द्रष्टव्यः ॥

२२८ प्रदर्शयन्तमिति ॥ तत्त्रिषु च शुपिरत्रयापह्नुत जगत्सु त्रिष्वपीत्यर्थः हृदयात् निजहृत्पद्मात् दयारसं कृपाम्बु प्रसेच्य प्रकर्षेण सेचयित्वा त्रिधा विभक्तां लोकत्रयोपकाराय त्रिप्रकारं पृथक्कृतां अत एव अध ऊर्ध्वमध्यगां पादस्थानीयाधोलोकं शिरस्थानीयोर्ध्वलोकं नाभिस्थानीय मध्यलोकञ्च प्राप्तां मुक्तिपद्धतिं मोक्षमार्गं सुव्यक्ततया कृपाम्बु संसिक्त शुपिरत्रयरूपेण सुष्ठु व्यक्तीकृतयेत्यर्थः त्रिलोकभक्तान् लोकत्रयस्थित भक्तजनान् प्रदर्शयन्तमिव स्थितमित्यर्थः पाताळस्थानस्थितान् भक्तान् पादस्थानीय शुपिररूपेण मर्त्यस्थान् नाभिशुपिररूपेण स्वर्लोकस्थितान् तान् शिरस्थ शुपिररूपेण च मुक्तिपद्धतिं तत्र हृदयनिर्गतदयारसं प्रसेच्य दर्शयन्तमिव स्थितमिति फलितोऽर्थः ॥

एवं भगवतो विराड्रूपं प्रस्तुत्य तच्छरीरमध्यस्थितमूलाधारचक्रगस्वयम्भुलिङ्गरूपतां च विशदयति ॥

२२९. जगच्छरीर इति ॥ जगदेव शरीरं जगच्छरीरं तस्मिन् ब्रह्माण्डे ये गुणाः सन्ति ते तिष्ठन्ति कळेबरे इत्याद्युक्तेः ब्रह्माण्डरूप शरीरमध्ये इत्यर्थः क्षिति चक्रमध्यगं क्षिति चक्रं भूमण्डलमेव क्षितिचक्रं क्षितिमण्डलाधिष्ठान मूलाधारचक्रं तन्मध्यगं तन्मध्यवर्तिनं स्फुटं प्रत्यक्षं प्रतीची वदनं पश्चिममुखं यस्य तं पश्चिमाभिमुखमित्यर्थः गुहामुखस्य उत्तरदिग्गतत्वेऽपि लिङ्गसन्निधौ पश्चिमदिश्येव द्वारस्य विद्यमान-

२३०. स्वविश्वरूपस्य हृदिस्थितं स्थिरप्रदीपदीप्यत् कलिकासहोदरम् ।
उपासकानागमवेद्यमात्मनः समीक्षयन्तं खलु जीवलक्षणम् ॥

२३१. वियत्पयोधि क्षिति शुक्तिकान्तरस्फुरन्महामौक्तिकयुक्तिपोपकम् ।
अनेकलोकोद्धरणैकसाधनावनीतलारोपितयूपरूपकम् ॥

त्वात् पश्चिमाभिमुखत्वम् तस्येति ज्ञेयं आधारचक्रस्थ स्वयम्भुलिङ्गस्यापि अधोमुखत्वेन पश्चिममुखत्वमागमप्रसिद्धं स्वयमेव भवतीति स्वयम्भूः तं न केनापि निर्मितं स्वयम्भूलिङ्गलक्षणाक्रान्तं चेत्यर्थः उक्तं च लोके प्रसिद्धानां स्वयम्भू लिङ्गानां लक्षणं सिद्धान्तशेखरे नानाछिद्रसुसंयुक्तं नानावर्णसमन्वितं अदृष्टमूलं यल्लिङ्गं कर्कशं भुवि दृश्यते तल्लिङ्गं तु स्वयम्भूतमपरं लक्षणच्युतं स्वयम्भु लिङ्गमित्युक्तं तत्र नानाविधं मतमित्यादि यत्र चैव स्वयं व्यक्तं लिङ्गमस्तु स्वयम्भु तत्र धमनीयस्य संस्पर्शाद्दहति क्षिप्रमेव तु इत्यादि लक्षणं त्वन्यत्र तिसृणां नाडीनां इडा पिङ्गला सुषुम्नाख्यानां सुषुम्ना चित्रिणी ब्रह्माख्यानां वा समाहारस्त्रिनाडि समाहारे द्विगुरेकवचनं स नपुंसकं ह्रस्वो नपुंसके प्रातिपदिकस्य चेति ह्रस्वत्वञ्च सदा सर्वदा सुधास्रावैः शिरस्स्थाधोमुखसहस्रदलकमलान्तर्गतचन्द्रमण्डलामृतनिस्यन्दैः निरन्तरं परिपूर्णं अन्तरमन्तः प्रदेशो यस्य तथा भूतं यत्त्रिनाडि नाडिकात्रयं तस्य वक्त्रैः मुखैः विभिञ्छिद्रैरित्यर्थः विद्धोऽधोमध्योर्ध्वभागेषु कृतबिलो विग्रहो देहो यस्य तं तथाभूतमिव स्थितमित्यर्थः। अयं भावः शरीरे मेरुदण्डाश्रितास्तिस्रोनाडिका वर्तन्ते तत्र वामपार्श्वस्थिता इडानाम नाडी दक्षिणपार्श्वस्था पिङ्गला मेरुदण्डान्तर्गता सुषुम्नाख्या सुषुम्नामध्ये चित्रिणीनाडी तन्मध्ये ब्रह्मनाडीति च वर्तते गुदलिङ्गयोर्मध्यप्रदेशे सुषुम्ना लग्नं शोणं चतुर्दलपद्मं वर्तते तन्मध्ये चतुरस्राकारं भूमण्डलं एतदेव पद्ममाधारचक्रमित्युच्यते तत्कर्णिकायां अधो वक्त्रं स्वयम्भुलिङ्गं वर्तते तल्लिङ्गमुखमारभ्य ब्रह्म रन्ध्रपर्यन्तं यद्रन्ध्रं वर्तते तदेव ब्रह्मनाडीत्युच्यते अन्यत् सर्वं षट्चक्र निरूपकग्रन्थेभ्योऽवगन्तव्यं तथा च स्वयम्भुलिङ्गे वक्त्रदेशे एकमेव रन्ध्रं अत्र तु रन्ध्रत्रयस्य परिदृश्यमानत्वात् उक्त नाडीत्रयस्य सन्निहितत्वेन तद्रन्ध्रैरेव विद्धशरीरमिवेत्युत्प्रेक्षामात्रम् ॥

२३०. स्वविश्वरूपस्येति ॥ स्वविश्वरूपस्य निजविराट्शरीरस्य हृदि हृत्पद्मे स्थितं विद्यमानं शङ्करविजयादौ विराट् शरीरस्य कुक्षिभागो भूमिरित्युक्तत्वात् कुक्षिभागस्यापि हृदयसन्निहितत्वात् भूमेरुपरिभागे विद्यमानस्य तस्य लिङ्गस्य हृदिस्थितत्वोक्तिरिति ज्ञेयं स्थिरो निश्चलो यः प्रदीपः तस्य दीप्यन्ती प्रकाशमाना या कलिका तस्याः सहोदरं तत्तुल्यमित्यर्थः अतएव उपासकान् उपास्ति युक्तान् आगमवेद्यं आगमशास्त्रप्रतिपाद्यं आत्मनः स्वस्य जीवलक्षणं जीवात्मचिह्नं प्रदीपकलिकाकारं हृदि जीवं विचिन्तयेदित्युक्तरूपमित्यर्थः समीक्षयन्तं दर्शयन्तमिव स्थितमित्यर्थः खलु इति वाक्यालङ्कारे जिज्ञासायां वा जिज्ञासात्र उपासकनिष्ठा वेदितव्या 'अङ्गुष्ठमात्रः पुरुष' इत्युक्तेः अस्मदादिशरीरकल्पित तथाकारजीवापेक्षया विश्वशरीरकल्पितस्य तथाकारस्य तस्य महत्त्वेऽपि नक्षतिः आश्रयानुरूपमेवाश्रयिणं कल्पितुमुचितत्वात् ॥

२३१. वियदिति ॥ वियदाकाशमेव पयोधिः समुद्रः तस्मिन् क्षितिरेव शुक्तिका मुक्तास्फोटः 'मुक्तास्फोटः स्त्रियां शुक्ति'रित्यमरः तस्या अन्तरे मध्ये स्फुरत् प्रकाशमानं महत् पृथुलञ्च यत् मौक्तिकं मुक्ताफलं तदेवेति या युक्तिः तस्याः पोपकं आकाशरूप समुद्रमध्यस्थित पृथ्वीरूप शुक्तिका मध्यस्थितं

२३२. अपारसंसारसमुद्रतारणे वहन्तमालम्बनतुम्बिडम्बरम् ।
विमुक्तिबीजस्य पलालवेष्टनप्रकल्पिताधानपुटीपटान्तरम् ॥

२३३. निसर्गकारुण्यरसप्रपूरितान्तरं चतुर्वर्गफलैकसंश्रयम् ।
अशेषविश्वस्य वसुन्धराजिरस्थितं शुभारम्भककुम्भसन्निभम् ॥

२३४. प्रणम्य साष्टाङ्गममुं समर्चयन् सरुद्रसूक्तैरभिषेच्य सद्द्विजैः ।
तदङ्घ्रिपाथोजनिविष्टमानसः पुटाञ्जलिः स्तोतुमथोपचक्रमे ॥

---

प्रकाशमानं महत्त्वेनानन्यसाधारणं मौक्तिकमेवेदमिति तर्कणीयमित्यर्थः अथ प्रकारान्तरेणोत्प्रेक्षते अनेकेति अनेकेषां लोकानां भुवनानां जनानां वा संसारपाशग्रस्तानामित्यर्थः उद्धरणे विमोचने विषये एकं अद्वितीयं साधनं उपायभूतोऽवनीतलारोपितः पृथिवीतल निखातश्च यो यूपः दारुविशेषः तद्रूपकं तत्स्वरूपमित्यर्थः ॥

२३२. अपारेति ॥ नास्ति पारम्परं तीरं यस्य सः 'अपारः पारावारे परार्वाची तीरे' इत्यमरः तथाभूतो यः संसारएव समुद्रः तस्मात्तारणे समुद्धारणे विषये आलम्बनं अवलम्बनभूतं यत् तुम्बितुम्बीफलं अवयवे च प्राण्योषधि वृक्षेभ्य इत्युत्पन्नस्य तद्धितस्य फले लुगिति प्रत्ययस्य लुक् ह्रिहीनं प्रसवे सर्वमित्युक्तत्वान्न पुंसकत्वं ज्ञेयं तस्य डम्बरमाडम्बरं वहन्तं धारयन्तं पुनः किं भूतं विमुक्तिबीजस्य मोक्षरूपाङ्कुरकारणस्य बीजं तु रेतसि 'स्यादाधाने च तत्वे च हेतावङ्कुरकारणे' इति हैमः ॥ पलालवेष्टनैः निष्फलधान्यकाण्डनिर्मितरज्जुवेष्टनैः प्रकल्पिता प्रबद्धा या आधानपुटी आधीयतेऽस्मिन्नित्याधानं आधानभूता पुटी आधानपुटी आधारपुटिका सैव अन्यत् पटं पटान्तरं सदृशी यस्य तं तथाभूतम् ॥

२३३. निसर्गेति ॥ निसर्गकारुण्यरसेन स्वभावकरुणारूप जलेन प्रपूरितमन्तरं गर्भप्रदेशो यस्य तं चतुर्वर्गो धर्मार्थकाममोक्षरूप पुरुषार्थचतुष्टयं तद्रूपस्य फलस्य एकसंश्रयं तद्दायकमित्यर्थः 'वसुन्धरा पृथिवी सैवाजिरं प्राङ्गणं' प्राङ्गणं चत्वराजिरे' इत्यमरः तस्मिन् स्थितं विद्यमानं अतएव अशेषविश्वस्य निखिल जगतः शुभारम्भको मङ्गलहेतुभूतो यः कुम्भः पूर्णकुम्भ इत्यर्थः तत्सन्निभं तत्तुल्यमित्यर्थः मङ्गलकार्यारम्भे हि कार्यार्थिभिर्मङ्गलार्थं चत्वरादौ जलफलादियुक्तः पूर्णकुम्भः स्थाप्यते तथाभूतं तं दृगब्जमालया अपूपुजदिति पूर्वेण सम्बन्धः ॥

२३४. प्रणम्येति ॥ स विक्रमदेवः अमुं तथावलोकितं तं लिङ्गविग्रहं साष्टाङ्गं अष्टभिरङ्गैस्सह यथा तथा प्रणम्य प्रणामं कृत्वा 'पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा । वचसा मनसा चेति प्रणामोऽष्टाङ्ग ईरित' इत्युक्तरूप भक्तिश्रद्धातिशययुक्त नमस्कारानन्तरमित्यर्थः सद्द्विजैः सुब्राह्मणैः प्रयोज्यैः रुद्रसूक्तैः 'नमस्ते रुद्रमन्यव' इत्यादि रुद्रदेवताक वैदिकमन्त्रैरभिषेच्य अभिषेकं कारयित्वा समर्चयन् सम्यक् महोपचारैः पूजयन् अथ समर्चनानन्तरं तस्य शिवस्य अङ्घ्रिपाथोजे पादपद्मे निविष्टं दत्तं मानसं मनो येन सः पुटाञ्जलिः प्राञ्जलिस्सन् स्तोतुं स्तुतिं कर्तुं उपचक्रमे प्रारब्धवान् ॥

२३५. नमःशिवायामलनिर्गुणात्मने कलैकरूपाय गुणावलम्बिने।
क्रमेण शक्त्या प्रविभक्तमूर्तये वितत्य सर्वत्र विभिन्नवृत्तये ॥

इतः प्रभृति द्वाविंशतिभिः श्लोकैः स्तौति ॥

२३५. नम इत्यादि शिवाय नम इत्यन्वयः शिवो निस्त्रैगुण्यस्तुरीय ब्रह्मात्मक इति शैवाः शिवमद्वैतं चतुर्थं मन्यन्त इति श्रुतेः सोऽप्यत्र निर्गुणः सगुणश्च ज्ञेयः 'निर्गुणस्सगुणश्चेति शिवो ज्ञेयस्सनातनः। निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः' इत्युक्तेः तत्राद्यस्वरूपमाह अमलेति अमलो विशुद्ध चिद्रूपः सचासौ निर्गुणश्च तस्मै शक्तिसम्बन्धराहित्येन निस्त्रैगुण्यस्वभाव सूक्ष्मरूपायेत्यर्थः साक्षीचेता केवलो निर्गुणश्चेत्यादि श्रुतेः नित्यस्सर्वगतः सूक्ष्मः सदानन्दो निरामयः विकाररहितस्साक्षी शिवो ज्ञेयः सनातन इत्याद्यागमाच्च द्वितीयस्वरूपमाह कलैकरूपायेति कला महामायापरपर्याया प्रकृतिः सैवेश्वर शक्तिरित्युच्यते मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरं इत्याद्युक्तेः साङ्ख्यमते सत्वरजस्तमसां साम्यावस्था प्रधानापरपर्याया प्रकृतिः वेदान्तनयेत्वविद्या शिवतन्त्रे शक्तिः सा च चन्द्रस्य षोडशीकलेव सूक्ष्मत्वात् नित्यत्वाच्च कलेत्युच्यते तया एकरूपाय संवलितस्वरूपाय ईश्वरपदवाच्यायेत्यर्थः अत एव गुणावलम्बिने गुणाः सत्वरजस्तमांसि तानवलम्बत इति गुणावलम्बो तस्मै गुणमयशक्त्या सहितत्वात्सगुणायेत्यर्थः देवात्मशक्तिम् स्वगुणैर्निगूढां 'अजामेकां लोहित शुक्लकृष्णा' मित्यादि श्रुतेः 'दैवी ह्येषा गुणमयी' ति भगवदुक्तेश्च शक्तेरेव त्रिगुणात्मकत्वादिति भावः प्रपञ्चस्वरूपमाह क्रमेणेति क्रमेण पञ्चतन्मात्र सहकृताकाशादि सृष्टिक्रमेण एतस्मादात्मन आकाशः सम्भूत इत्यादि श्रुतेः शक्त्या अविद्यागतविक्षेपशक्त्या विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत्सृजेदित्युक्तेः इच्छा शक्त्या वा स ऐक्षत बहुस्यां इत्यादि श्रुतेः प्रविभक्ता सूक्ष्मरूपेण पृथक्कृता मूर्तिर्हिरण्यगर्भाधिष्ठानलिङ्गशरीरं यस्य तस्मै यद्वा स्वेच्छया प्रविभक्ता मूर्तयो ब्रह्मविष्णु रुद्ररूपा यस्य तस्मै उक्तञ्च प्रयोगसारादौ तच्छक्तिभूतः सर्वेशो भिन्नो ब्रह्मादिमूर्तिभिः कर्ता भोक्ता संहर्ता सकलः स जगन्मय इति सर्वत्र स्थूलशरीरभूतेषु ब्रह्माण्डेष्वित्यर्थः वितत्य विस्तृतीभूय विराड्रूपेणेत्यर्थः विभिन्ना व्यक्तिभेदेन भिन्नावृत्तिः प्रवर्तनारूपो व्यापारः सृष्टिस्थितिसंहाररूपो वा यस्य तस्मै अत्राद्ये शिवस्य उक्तरूपैश्चतुर्भि विशेषणैः स्थूलसूक्ष्मकारणरूप शरीरत्रयावच्छिन्नत्वं तदनवच्छिन्नतुरीयत्वं चेति चत्वारो भेदाः सृष्टिक्रमेण प्रदर्शिता वेदितव्याः शक्त्येत्यादि आगमानुसारेणैव वा व्याख्येयं शक्त्या शक्तिपुरस्कारेण प्रविभक्ता मूर्तयः शक्तिनादविन्द्वादिस्वरूपभेदा यस्य तस्मै अन्यत्सर्वं समानं तथा च शारदायां पूर्वोक्तस्वरूप निर्गुण सगुणभेदेन शिवो द्विविध इत्युक्त्वा सच्चिदानन्दविभवादव्यक्तात् परमात्मनः आसीच्छक्तिस्ततो नादो नादाद्बिन्दुः समुद्भवः इत्यादि शब्दार्थोभयसृष्टिप्रकारः प्रदर्शितः एवञ्च शब्दार्थोभयरूपत्वाच्छिवस्य द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्मपरञ्च यत् शब्दे ब्रह्मणि निष्णातः परब्रह्माधिगच्छतीत्युक्तेः मन्त्रात्मा देवतेत्यागमप्रसिद्धेश्च स्तुत्यादौ शब्दब्रह्मात्मक मन्त्रोपास्ति सूचयन् नमः शिवायेति पञ्चाक्षर मन्त्रस्वरूपप्रदर्शनमिति च बोध्यम् ॥

२३६. क्व ते स्वरूपं शिव सच्चिदादिकं क्व पञ्चवक्त्रादि तनुप्रपञ्चनम् ।
क्व चाहमज्ञो मम या स्तुतिस्पृहा स एष नूनं शशिनः करग्रहः ॥

२३७. विकल्प्य नेतीति विमुह्यति श्रुतिः प्रकल्प्य मूर्तीरपि यत्र चागमम् ।
अनन्तरूपं गुणकर्मदुर्गमं निरूप्य तं स्तौतु चतुर्मुखोऽपि कः ॥

---

एवं शिवस्य सामान्यस्वरूपप्रस्तावनपूर्वकं स्वापकर्षबोधकनमस्कारेण तं सम्बोध्य विशेषेण त्वां स्तोतुमहमक्षम इत्याह—

२३६. क्वेति ॥ हे शिव ते तव सच्चिदादिकं 'सदेव सौम्येदमग्र आसीत्' चिन्मात्रोहं सदाशिवः आदिपदेन 'विज्ञानमानन्दं ब्रह्म' इत्यादि श्रुति प्रतिपाद्यमित्यर्थः स्वरूपं निजरूपं क्व तथा पञ्चवक्त्रादि तनूनां पञ्चवक्त्रं त्रिनेत्रमित्यादि ध्यानरूपैरागमप्रतिपाद्यानां मूर्तिभेदानामित्यर्थः प्रपञ्चनं विस्तारः क्व अतिदूरे इत्यर्थः उभयोरपि दुरवगाहत्वेन दुर्ज्ञेयत्वादिति भावः । अज्ञो मूढमतिः अहं च क्व अतिदूरे इत्यर्थः तथा च तव वेदागमप्रतिपाद्यस्वरूपस्य दुरूहत्वान्मन्दमतेर्मम दुर्ज्ञेयत्वात् उभयोरपि ज्ञातृज्ञेयभावो दुर्घट एव तेन च त्वां स्तोतुमहं अक्षम इत्यर्थः तथापि मम या स्तुतिस्पृहा तव स्तोत्रकरणेच्छा भवतीति शेषः सः स्तुति स्पृहारूप एषः विधेयप्राधान्यात्पुंस्त्वनिर्देशः शशिनः चन्द्रस्य करग्रहः हस्तग्रहणस्वरूपः यथा चन्द्रमण्डलं उत्तोलितस्यापि हस्तस्य दुर्लभं तद्वत्तव स्तुतिकथापि मदिच्छाया दुर्लभैवेत्यर्थः अथ च चन्द्रमण्डलस्यास्पृश्यत्वेऽपि तस्य कराणां किरणानां ग्रहः ग्रहणं स्पर्शनमिति यावत् यथा भवति तथा तव समग्रनामरूपगुणकर्मणां स्तवनस्य मदिच्छाया अविषयत्वेऽपि यत्किञ्चिदंशे सविषयत्वमेवेति भावः ॥

ननु तर्हि वेदागमाध्ययनसम्पन्नेन भवितव्यं तत्र तत्र निखिलस्वरूपाणां प्रतिपादितत्वादित्यत आह ॥

२३७. विकल्प्येति ॥ श्रुतिर्वेदः 'श्रुतिस्त्रीवेद आम्नाय' इत्यमरः यत्र सच्चिदानन्दादिरूपे त्वयि विकल्प्य 'सदेव सौम्येदमग्र आसीत्' 'असदेवेदमग्र आसीत्' इत्यादि सदसद्भेदादीन् विशेषेण कल्पयित्वानेतीति एवं प्रकारेण नेत्येवं रूपेणेत्यर्थः विमुह्यति विशेषेण मोहं गच्छति नेति नेति 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'त्यादि श्रुतेरिति भावः आगमं श्रुतिभिन्नपुराणेतिहासादि शास्त्रमात्रं शिवोक्तप्रबन्धविशेषरूपं वा एतल्लक्षणं यथा 'सृष्टिश्च प्रळयश्चैव देवतानां तथार्चनं । साधनं चैव सर्वेषां पुरश्चरणमेव च ॥ षट्कर्मसाधनं चैव ध्यानयोगश्चतुर्विधः । सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदुर्बुधाः ॥' इति आगमशब्दार्थोऽप्युक्तस्तन्त्रे 'आगतं शिववक्त्रेभ्यो गतञ्च गिरिजानने । मतञ्च वासुदेवस्य तस्मादागममुच्यते ॥ इति तच्चागमं तन्त्रशास्त्रमपि यत्र भक्तानुकम्पया गृहीत लीला विग्रहे त्वयि मूर्तीः शिवशक्त्यादि मूर्तिभेदानित्यर्थः प्रकल्प्य मन्त्र यन्त्र ध्यानपूजादिभिः सह प्रकर्षेण कल्पयित्वा उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पनेति शिवशक्तिगणेशार्कविष्णुरूपात्म ईश्वरः उपासनानुसारेण भक्तेभ्यो भुक्तिमुक्तिद इति च सर्वतन्त्रसम्मतत्वादिति भावः । विमुह्यतीति सम्बन्धः असङ्ख्यातमूर्त्यादि कल्पनया मोहं गच्छतीत्यर्थः । अत एव अनन्तं अपरिमितं रूपं श्रुतिप्रतिपाद्यं यस्य तं 'अनन्तं ब्रह्मे'ति श्रुतेरनन्तपदस्याखण्डार्थबोधक

२३८. बुधैस्त्वमस्तीति यदि प्रतीयसे तथापि सिद्धिर्न तवैकरूपतः ।
किमाकृतिः क्व स्थिति राप्यसे कथं यदत्र सिद्धान्तचयैर्न निश्चयः ॥

२३९. न बोधरूपो न स यन्निराश्रयो न चादि विद्वानसि सत्वतोन्ततः ।
न दिश्यसे चापि विनैव देशिकं न वादशक्तेरुपपत्तिरेकिका ॥

---

त्वेऽपि अपरिमितत्वार्थस्यापि बोधकत्वादिति भावः। तथा गुणैः सत्वप्रधानैः भक्ताभीष्टफलदातृत्वादिभिर्वा कर्मभिः साधुपालन दुष्टनिग्रहादिभिः मन्त्र यन्त्रोपासनादिभिर्वा आगमोदितैरित्यर्थः दुर्गमं दुरधिगमं तथाभूतं तं त्वां निरूप्य वेदागमप्रतिपादितनिखिलस्वरूपावधारणेनावगत्य चतुर्मुखोऽपि कः कोपी-त्यर्थः स्तौतु स्तुतिं करोतु यद्वा चतुर्मुखः कः ब्रह्मा को ब्रह्मणीति कोशात् सोऽपि स्तौतु तथा च चतुर्मुख ब्रह्मणोऽपि तथा स्तोतुमशक्यमिति भावः ॥

ननु निखिलस्वरूपाणां दुर्निरूप्यत्वेऽपि अस्तीत्येवोपलब्धव्य इति काठकश्रुतेः अस्तित्वेन रूपेण सत्तां प्रतिपाद्य स्तूयतां इति चेत् तत्राह ॥

२३८. बुधैरिति ॥ हे शिव त्वं अस्तीति तथाश्रुतेरिति भावः बुधैः श्रुत्यर्थकोविदैः प्रतीयसे प्रतीतो भवसि यदि तथापि सत्वमपन्या प्रतीतिविषयत्वेऽपि तव एकरूपतः एकेनैव रूपेणेत्यर्थः सिद्धिः सत्व-सम्पत्तिः न नोपपद्यत इत्यर्थः कुतः यत् यस्मात्कारणात् किमाकृतिः तवाकारः किं स्वरूपः क्व स्थितिः कुत्र वा तव स्थानं तथा कथं केन प्रकारेण आप्यसे प्राप्यसे सामीप्यादिमुक्तिं ददासीत्यर्थः अत्र तवाकारस्थिति-प्राप्त्यादिविषये सिद्धान्तचयैः प्रामाणिकत्वेनाभ्युपगतोर्थः सिद्धान्तः तेषां समूहैः अनेकेषां सिद्धान्तानां सत्वादित्यर्थः निश्चयो न निर्णयो नास्तीत्यर्थः तथा च श्रुतिस्मृति पुराणेतिहासादौ शरीरित्वादि भेदेन मन्त्र-यन्त्रादि भेदेन च नानाकारस्य कैलासादि नानास्थानस्य तपोमन्त्रकर्मयोगज्ञानाद्यनेकप्राप्त्युपायस्य च सिद्धान्तितत्वात् तत्र परस्परानभिमतत्वेन संशय एवेति भावः ॥

तत्र श्रुत्यर्थ सन्देहे दर्शनशास्त्राणामेव निर्णायकत्वं तत्रापि न संशयासत्वं विवादग्रस्तत्वादिति प्राधान्येन वेदान्तसाङ्ख्यमीमांसान्यायरूप दर्शनचतुष्टयमतमुपन्यस्य तद्दर्शयति ॥

२३९. नेति ॥ तथा हि कुसुमाञ्जलि वृत्तौ शुद्ध बुद्ध स्वभाव इत्यौपनिषदाः आदिविद्वान् सिद्ध इति कापिलाः उपास्यत्वेन देशित इति मीमांसकाः यावदुक्तोपपन्न इति नैयायिकाः तत्र बुद्धो बोध स्वरूपः हे शिव त्वं बोधरूपः 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतेः वेदान्तसिद्धान्तरीत्या नित्यविज्ञानस्वरू-पोऽसि इति चेन्न यत् यस्मात्कारणात् स बोधो ज्ञानं निराश्रयो न गुणस्य द्रव्यवृत्तित्वनियमात् तस्यापि कश्चन आश्रयो वाच्यः ज्ञानगुणस्य निराश्रयत्वे मानाभावात् न च ज्ञानं ब्रह्मेति श्रुतिरेव मानं तत्र ज्ञानमित्यस्य घटो नील इत्यस्येव ज्ञानगुणवदिति तदर्थवत्वात् तेन च यः सर्वज्ञः स सर्वविदिति श्रुतेः प्रामाण्यं एवञ्च नित्यज्ञानाधिकरणत्वमीश्वरस्येति मतान्तरे प्रदर्शितमिति भावः तथा आदिविद्वान् आदौ सर्गादौ विद्वान् चिद्रूपः इति साङ्ख्यमतज्ञाः केवलं तद्रूपोऽसीति चेत् न च नापीत्यर्थः कुतः अन्ततः महाप्रळयेपीत्यर्थः सार्वविभक्तिकस्तसिल् सत्वतः तव तद्रूपस्य विद्यमानत्वादित्यर्थः पञ्चम्यां तसिल्

२४०. अखण्डरूपोऽप्यथ खण्डितात्मना विभासि शश्वद्बहिरन्तरास्थितः ।
यथा यथा भाव गतेन चेतसा तथा तथा त्वं ननु बुद्धिगोचरः ॥

२४१. त्वमेव देहे किल मूलमाश्रितः परात्मना वक्त्रबिलाद्विनिःसृतः ।
क्रमाच्चतुर्भेद विभाजितः स्वयं स्वशब्दमूर्त्या बहुधा प्रगीयसे ॥

साङ्ख्यमते महाप्रळयो नाङ्गीक्रियते तत्तु सर्वसम्मतत्वाभावादनादरणीयमेवेति भावः उपास्यत्वेन देशितो मन्वादिः मीमांसकानां मते तद्रूपोऽपि त्वं देशिकं उपदेष्टारं विना न दिश्यसे तव देशितत्वं न सिध्यत्ये वेत्यर्थः उपदेशकाभावे उपदेश्यत्वासम्भवादिति भावः 'देशिको मन्त्रदो गुरु'रित्यागमः एवञ्च यावदुक्तोपपन्न इति नैयायिकमतमपि न युक्तिसहं यावदुक्तेषु यदुपपन्नं तेनोपपन्नइति तदर्थः तथा हि वादशक्तेः वादस्य सामर्थ्यात् वादशक्तेः सत्त्वादित्यर्थः उपपत्तिर्निष्पत्तिः सिद्धान्त इति यावत् एकैव एकिका स्वार्थे कन् प्रत्ययस्स्यादितीत्वं केवला न एकेनैव रूपेण नोपपद्यत इत्यर्थः तत्र वादिनां दौर्बल्यं न तु वादानामिति सिद्धान्तादिति भावः एवमन्यान्यपि मतानि परस्परेण खण्डितानीति ज्ञेयं तथा स्थितिप्राप्त्यादिरपि मतभेदेन भिन्नत्वात् तत्सर्वं निश्चेतुमशक्यत्वेन दुर्निरूप्य एवेति फलितम् ॥

ननु सर्वेश्वरस्य सर्वरूपस्य शिवस्य नानारूपनिरूपणं कल्पनामात्रं किन्तु एकएव स इति चेत्सत्यं तथापि तत्र विशेषोऽस्तीत्याह ॥

२४०. अखण्डेति ॥ हे शिव अथ कात्स्न्र्येन वेदान्तसिद्धान्तरीत्येत्यर्थः 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथे'त्यमरः अखण्डरूपः 'एकमेवाद्वितीयं ब्रह्मे'ति श्रुत्या सजातीय विजातीय स्वगत विगत भेदराहित्येन त्वं परिपूर्णस्वरूपोऽपि खण्डितात्मना विभक्तरूपेण बहिः बाह्येन्द्रियविषयतया अन्तः अन्तरिन्द्रियविषयतया चेत्यर्थः आस्थितः विद्यमानस्सन् 'शश्वत् अनारतं अभीक्ष्णं शश्वदनारते' इत्यमरः । विभासि विभिन्नतया प्रकाशसे 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते' 'रूपं रूपं प्रतिरूपो बभूव एको देवो बहुधा सन्निविष्ट' इत्यादि श्रुतिशतेभ्य इत्यर्थः । अतएव त्वं यथा यथा भावगतेन यद्यद्भावमुपाश्रितेन चेतसा भावयितॄणां मनसा करणेन तथा तथा बुद्धिगोचरो ज्ञातो भवसीत्यर्थः ननु इत्यवधारणे येन येन रूपेण भावयितारस्त्वां मनसा भावयन्ति तेन तेन रूपेणैव तेषां बुद्धौ स्फुरसीति फलितोऽर्थ' ॥

एवञ्च स्फूर्त्यनुसारिप्रयत्नप्रेरितेन वायुना त्वमेव स्वशब्दमूर्त्या मूलाधारादाविर्भूतस्सन् निबन्धकारैः निबन्धेषु नानाकारेण गीयसे इत्याह ॥

२४१. त्वमिति ॥ हे शिव त्वमेव नादरूप इत्यर्थः । देहे प्राणिनां शरीरमध्ये मूलं मूलाधारचक्रं आश्रितः स्वयम्भु लिङ्गरूपेण स्थित इत्यर्थः परा चैतन्यरूपा कुण्डलिनी तदात्मना स्वकीय स्वयम्भु लिङ्गशरीराधिष्ठित कुण्डली रूपेणेत्यर्थः । वक्त्रबिलात् निजमुख कुहरात् तत्प्राप्येत्यर्थः विनिःसृतः विभिन्नशब्दरूपेणोद्गतः तथा क्रमात् मूलाधारादिस्थानचतुष्टयस्थित्यनुसारेणेत्यर्थः चतुर्भेदेन परापश्यन्ती मध्यमा वैखरीरूपभेद चतुष्टयेन विभाजितो विभक्तीकृतः सन् स्वशब्दमूर्त्या निजशब्दशरीरेण स्वयमात्मनैवेत्यर्थः

२४२. वदन्ति केचिद्द्विविधश्चतुर्विधं त्रिधाष्टधा त्वां नवधा च पञ्चधा ।
अनेकधा चैवमिति प्रधानतः समस्तरूपो मम तु त्वमेकधा ॥

---

बहुधा नानाप्रकारं प्रगीयसे श्रुति स्मृति पुराणादिषु प्रकर्षेण गीतो भवसीत्यर्थः किलेत्यागम वार्तायां उक्तञ्च शब्दसृष्टिप्रस्तावे शब्दब्रह्मोत्पत्तिस्वरूपं शारदातिलके 'भिद्यमानात्पराद्बिन्दोरव्यक्तात्मा रवोऽभवत्' अव्यक्तात्मा वर्णादिविशेषरहितः रवो नादमात्रात्मकः 'शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः । शब्द-ब्रह्मेति शब्दार्थं शब्दमित्यपरे जगुः ॥ न हि तेषां तयोः सिद्धिर्जडत्वादुभयोरपि । चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिः ॥ तत्प्राप्य कुण्डली रूपं प्राणिनां देहमध्यगं । वर्णात्मनाविर्भवति गद्यपद्यादिभेदत इत्यादि यथा च सर्ववाक् स्वरूपिणी कुण्डलिनी स्वयम्भुलिङ्ग मुखकुहरे विलसति तद्विस्तरस्तन्त्रशास्त्रे-भ्योऽवगन्तव्यः परादि भेदप्रकारः प्रदर्शितो यथा अलङ्कारकौस्तुभे आगमे च "मूलाधारात्प्रथममुदितो यस्तु तारः पराख्यः पश्चात्पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः । वक्त्रे वैखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्ना बद्धस्तस्माद्भवति पवनप्रेरितो वर्णसङ्घः" इति तारोवर्णरूपो नादः रुरुदिषोर्जन्तोर्नासामध्यस्थित सुषुम्नानाड्या बद्धः तथा च नासाद्वारैव यथा कथञ्चिन्नादरूपः प्रत्यक्षम्भवतीत्यर्थः । अन्यत्स्पष्टं ॥ एतेन कस्यचिदपि मतं न दुष्टं किन्तु स्वसिद्धान्तानुसारेण सर्वमेव सप्रमाणं तेन च मदुक्तमेतत् स्तोत्रं क्वचित् स्वकपोलकल्पितमपि तत्र त्वमेव प्रमाणमिति न कस्यापि कटाक्ष निक्षेपावकाश इति भावः ॥

बहुधा प्रगीयसे इत्युक्तं यथा च बहुधा त्वं तत्प्रदर्शयन् स्वसिद्धान्तमाह ॥

२४२. वदन्तीति ॥ हे शिव केचिज्जनाः त्वां द्वे विधे प्रकारौ यस्य तं 'विधाविधौ प्रकारे'चेत्यमरः तथा विधं वदन्ति कथयन्ति सगुणनिर्गुणभेदेन प्रकृतिपुरुषभेदेन वा द्वैविध्यस्योक्तत्वादिति भावः उक्तञ्च महाभारते "तद्ब्रह्म द्विविधं वस्तु सगुणं निर्गुणं तथा । केचिद्वदन्ति द्विविधं ब्रह्मप्रकृतिपूर्वक"मिति च तथा चतुर्विधं पूर्वोक्तरीत्या विराट् हिरण्यगर्भः ईश्वरः तुरीयश्चेति चतुः प्रकारं 'चतुर्विभागः संसृष्टौ चतुर्धा संस्थितः स्थितौ । प्रळयञ्च करोत्यन्ते चतुर्भेदो जनार्दन' इत्यादि विष्णुपुराणोक्तरीत्या वा चतुः प्रकारं केचि-द्वदन्तीति सर्वत्र योज्यं त्रिधा त्रिप्रकारं सङ्ख्याया विधार्थेधेति क्रियाप्रकारार्थे वर्तमानात् सङ्ख्याशब्दात् स्वार्थे धाप्रत्ययः एवमुत्तरत्रापि एकं ब्रह्म त्रयो देवा ब्रह्मविष्णु महेश्वरा इत्युक्तेरिति भावः अष्टधा अष्टमूर्ति-र्महेश्वर इत्युक्तत्वात् मूर्तयश्च भूम्यर्कचन्द्रयज्वानो मूर्तयोष्टौ प्रकीर्तिता इत्युक्तरूपाः नवधा महाभारतप्रद-र्शित रूपभेदेन उक्तञ्च मोक्षधर्मे योगिनोयं वदन्त्येवं ज्योतीरूपं सनातनं ज्योतिरभ्यन्तरे नित्यरूपं भक्ता वदन्ति यं वेदा वदन्ति सत्यं यं नित्यमाद्यं विचक्षणाः यं वदन्ति सुरास्सर्वे परं स्वेच्छामयं प्रभुं सिद्धेन्द्रा मुनयस्सर्वे सर्वरूपं वदन्ति यं यमनिर्वचनीयञ्च योगीन्द्रः शङ्करो वदेत् स्वयं धाता च प्रवदेत्कारणानां च कारणं शेषो वदेदनन्तं यं नवधा रूपमीश्वरं तर्काणामेव षण्णां यं षड्विधं रूपमीश्वरं वैष्णवानामेकरूपं वेदानामेकमेव च पुराणानामेकरूपं तस्मान्नवविधं स्मृतं न्यायो निर्वचनीयञ्च यन्मतं शङ्करोऽब्रवीत् नित्यं वैशेषिका यं तु वदन्ति च विचक्षणाः साङ्ख्या वदन्ति तं देवं ज्योतीरूपं सनातनं मीमांसा सर्वरूपञ्च वेदान्तः सर्वकारणं पातञ्जलोऽप्यनन्तञ्च वेदाः सत्यस्वरूपकं स्वेच्छामयं पुराणञ्च भक्ताश्च नित्यविग्रहमिति तथा पञ्चधा च पञ्चप्रकारमपि शिवशक्तिगणेशार्कविष्णुरूपः स ईश्वर इत्यादि पूर्वमुक्तत्वादिति भावः इत्येवं उक्तप्रकारैरित्यर्थः अनेकधा अनेकप्रकारञ्च त्वां वदन्तीत्यर्थः मम तु मन्मते तु शब्दोऽत्र पक्षान्तर व्यावृत्त्यर्थः समस्तरूपः निखिलस्वरूपः त्वं प्रधानतः समस्तरूपत्वेन निखिलमतप्राधान्यादित्यर्थः एकधा

२४३. न पाणिपादं न तवास्ति लोचनं न चास्ति कर्णौ न मनो न चासवः।
विशुद्धविज्ञानविमुक्तसत्यसच्चिद्द्वयानन्द वपुस्त्वमेव हि ॥
२४४. त्वमीश्वरेत्येव निरीक्षितो जनैर्नभण्यसे किं जगदेककारण ।
इदं न किं लिङ्गशरीरमेव ते बिभर्षि किं स्थूलतनूं न च स्वयम् ॥

---

एकप्रकार एव प्रधानमिति भावे ल्युट् यद्वामिति प्रधानत इत्येकं पदं मितिषु मानेषु मध्ये प्रधानं प्रत्यक्षानुभव इत्यर्थः प्रत्यक्षस्यैवानुमानादिं प्रति उपजीव्यत्वात्प्राथम्याच्चेति बोध्यं ततः पञ्चम्यां तसिल् प्रत्यक्षानुभवादित्यर्थः समस्तरूपो निखिलरूपेणोपपन्नः त्वं एकधा मन्मते एकप्रकार एवेत्यर्थः यद्यपि वेदान्तनयेप्येकत्वेन प्रतिपत्तिः तत्र निराकारत्वेन अत्र तु साकारत्वेनापीति ममेत्युक्तम् ॥

समस्तरूपत्वमेवोपपादयिष्यन् तत्रादौ निखिलदर्शनमौळीभूत वेदान्तोक्त स्वरूपमुपपादयति न पाणिपादमित्यादिना श्लोकद्वयेन तत्र ॥

२४३. नेति ॥ हे शिव तव पाणी च पादौ च पाणिपादं प्राण्यङ्गत्वादेकवद्भावः करचरणं नास्ति केवलं लिङ्गाकारत्वादिति भावः तथा लोचनं नेत्रं नास्ति जातावेकवचनं कर्णश्च श्रोत्रमपि नास्ति एवं मनोन्तरिन्द्रियमपि नास्ति असवः प्राणाश्च न सन्तीति वचनविपरिणामेनान्वयः तथा च अचक्षुः श्रोत्रं तदपाणिपादं 'अप्राणोह्यमनाः शुभ्र' इत्यादि श्रुतिप्रतिपाद्यस्त्वमेवेत्यर्थः एवं त्वमेव विशुद्धोऽशुद्धिरहितः मलादि संसर्गदोषशून्यत्वादिति भावः विविधं विरूपं वा ज्ञानं यस्मिन्निति विज्ञानस्वरूपश्च प्राणिनां शरीरेषु चैतन्यरूपेण स्वयं प्रकाशमानत्वात् विज्ञानस्वरूपो वा यद्वा विज्ञायते विद्यमानतया साक्षात्क्रियते महादेवोऽस्मिन्निति विशेषज्ञानं शिवज्ञानविद्याप्रतिपादकतयास्मिन् लिङ्गस्वरूपे इति वा विज्ञानस्वरूपः उक्तञ्च कौर्मे उपविभागे चतुर्दशेऽध्याये "यया स देवो भगवान् विद्यते यत्र विद्यते। साक्षादेव महादेवस्तज्ज्ञानमिति कीर्तित"मिति विमुक्तो जन्ममरणादि संसारबन्धरहितः सत्यः सदैव समानरूपतया प्रत्यक्षतः परिदृश्यमानत्वेन मिथ्यात्वानाक्रान्तः सन् सत्वसाधुत्वप्रशस्तत्वादियुक्तत्वेन सत्पदवाच्यः उक्तञ्च 'सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते। प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यत' इति। चित् पूर्वोक्तकुण्डल्याकारचैतन्यरूपः ब्रह्माण्डात्मक विराट् शरीरेऽपि स्वयम्भु लिङ्गाकारेण प्रतिष्ठितत्वस्योक्तत्वात् तद्रूपस्य तव कुण्डलिन्यात्मक चिच्छक्तेश्च नवास्तवो भेदः अग्नेर्दाहिकाशक्तिवत सूर्यस्य च प्रकाशशक्तिवदभिन्नत्वात्तद्रूपस्त्वमिति फलितोऽर्थः कुण्डलिनी रूपस्यातिसूक्ष्मत्वाद्योगगम्यत्वाच्च त्वयि प्रत्यक्षत्वाभावेऽपि न क्षतिरिति भावः नास्ति द्वयं द्वित्वं यस्य सोऽद्वयः एकस्यैव तव समस्तरूपोपपन्नत्वात स्वसमान लिङ्गान्तराभावाच्चेति भावः। आनन्दवपुः सुखदुःखादिराहित्येन नित्यनिरतिशयसुखास्पदत्वेन च परमानन्द विग्रह इत्यर्थः हीत्यवधारणे। तथा च विशुद्धत्वादिप्रतिपादकनिखिलवेदान्तवाक्यानां त्वय्येव सार्थकत्वात् तव वेदान्तप्रतिपादितस्वरूपं सम्यगुपपादितमिति भावः॥

२४४. त्वमिति ॥ ईश्वरस्यैव जगत्प्रतिनिमित्तत्वमिति सूचयन् जगदेककारणेति हेतुगर्भकसम्बोधनं हे जगत्कर्तृकत्वादिगुणयुक्तत्वं जनैः प्रभुभिः निरीक्षितोऽवलोकितः सन् ईश्वरेत्येव ईश्वरेति नाम्नेवेत्यर्थः अनुकरणशब्दाद्विभक्तिर्नापेक्ष्यते यद्वा ईश्वरेति सम्बोधनपदमिदं हे ईश्वर इत्येवं रूपेणैवेत्यर्थ

२४५. समानरूपः परितोऽपि दृश्यसे तदुच्यसे त्वं खलु सर्वतोमुखः ।
अथाग्रभागेन समन्तवैव तत्समग्रतः पञ्चमुखप्रकल्पनम् ॥

२४६. इदं च ते निर्व्यथनत्रयच्छलान्न नेत्रकूपत्रितयं किमीक्ष्यते ।
त्रिभिर्गुणैर्नेत्रतयाखिलस्य वा तव त्रिनेत्रत्वमितीर्यते बुधैः ॥

न भण्यसे नोच्यसे किं अपि तु ईश्वरनाम्ना व्यवह्रियस एवेत्यर्थः किं शब्दोऽत्र काकुवचनः तथा च तव निखिललोकव्यवहारसिद्धत्वादीश्वरत्वं निर्विवादमेवेति भावः। तथा ते तव इदं परिदृश्यमानं शरीरं लिङ्गशरीरं लिङ्गाकारत्वात्तत्पदवाच्यमेव न किं न भवति किं अपि तु भवत्येव तेन च लिङ्गशरीराधिष्ठित हिरण्यगर्भोपाधिमत्तापि तवैवेति भावः। एवं स्वयमात्मनैव स्थूलतनूं परिधौव्यामयुगपरिमितत्वात् स्थूलाकारं शरीरं न बिभर्षि न धत्से किं बिभर्ष्येवेत्यर्थः तथा च स्थूलशरीराभिमानी विराट्पदवाच्योपि त्वमेवेति भावः। सप्तदशावयवकं लिङ्गशरीरं हिरण्यगर्भाधिष्ठानं उक्तञ्च शङ्कराचार्यपादैः 'पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितं। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनं॥ पञ्चीकृतमहाभूतसम्भवं कर्मसञ्चितं। शरीरं सुखदुःखानां भोगायतनमुच्यते॥' इति॥

एवं श्रुतिप्रतिपाद्यस्वरूपमुपपाद्य इदानीमागमप्रतिपाद्य पञ्चवक्त्रादिस्वरूपमुपपादयितुमाह॥

२४५. समानेत्यादि॥ हे शिव त्वं परितः सर्वतोपि चतसृष्वपि दिक्षु इत्यर्थः समानरूपः लिङ्गरूपत्वात्तुल्याकारः दृश्यसे अवलोक्यसे तत् तस्मात्कारणात् सर्वतः समन्तात् चतसृष्वपि दिक्षु इत्यर्थः मुखानि अग्रभागा यस्य सः तथा उच्यसे अभिधीयसे खल्विति वाक्यपूरणे। तथा च चतुर्मुखपदवाच्योऽपि त्वमेवेत्यर्थः अथ पक्षान्तरे तवैव अग्रभागेन समं शिरोभागेन सह 'साकं सार्धं समं सहे'त्यमरः तत्समग्रतः तेषां मुखानाम् समुदायात् तत्सकलं प्राप्येत्यर्थः पञ्चमुखप्रकल्पनं पञ्चानां मुखानां प्रकल्पनमात्रं ऊर्ध्वभागपरिकल्पितमुखेन सह दिक्चतुष्टयोपलक्षितमुखानां पूर्णत्वात्तव पञ्चवक्त्रत्वं काल्पनिकं न तु वास्तविकं नासाकर्णाक्षियुक्तं वक्त्रपञ्चकं एकस्मिन् शरीरे तस्य तथाविधस्य दुर्घटत्वाद्वैरूप्य प्रसङ्गाच्चेति भावः॥

त्रिनेत्रत्वमुपपादयति॥

२४६. इदमिति॥ हे शिव ते तव निर्व्यथनानां रन्ध्राणां त्रयं निर्व्यथनत्रयं 'छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषि'रित्यमरः तच्छलात् तद्व्याजात् नेत्रकूपानां नेत्रगर्तानां 'कूपः कूपकमृन्माने गर्तान्धु गुणवृक्षके' इति मेदिनी त्रितयं त्रयं सङ्ख्याया अवयवे तयप्। नेक्ष्यते न दृश्यते किं अपि तु दृश्यत एव तत्र पादनाभिशिरः प्रदेशेषु नेत्रकूपाकार छिद्रत्रयस्य विद्यमानत्वादेव त्रिनेत्रत्वं प्रतिपाद्यत इत्यर्थः वा अथ वा पक्षान्तरेण विकल्प्यत इत्यर्थः त्रिभिः गुणैः सत्वरजस्तमो रूपैः करणैः अखिलस्य जगतः नेत्रतया सृष्टिस्थितिप्रळयकर्तृत्वेन। नेतृतया 'नेत्रोनेतरिभेद्यवदिति' विश्वः णीञ् प्रापणे इत्यस्मात् ष्ट्रन् प्रत्ययः तव त्रिनेत्रत्वं त्रिभिर्गुणैर्नेत्र इति व्युत्पत्त्या तथा त्वं इति बुधैः पुराणकोविदैरीर्यते कथ्यते तथा च नेत्रभूतगुणत्रयावलम्बित्वेनैव तव त्रिनेत्रत्वं कल्पितं न तु स्वरूपत इति भावः उक्तञ्च ब्रह्मवैवर्ते 'चक्षूंषि गुणरूपाणि तस्य ब्रह्मस्वरूपिणः। सत्वं रजस्तम इति तस्य हेतुं निशामय॥ सत्त्वांशेन दृशा शम्भुः पश्यन् पाति च सात्त्विकान्। राजसेन राजसिकान् तामसेन च तामसा'नित्यादि॥

२४७. चतुर्भुजस्त्वं परिधौ चतुर्भुजोपलक्षितव्यामयुगप्रमाणितः ।
परस्वधर्मः परिखण्डितस्तथा तवैव यत्खण्डपरस्वधोऽसि तत् ॥

२४८. भवार्दितानां भजतां भवत्पदं प्रभोऽभयाभीष्टकरो न किं भवान् ।
न किञ्चतुर्वर्गफलं हि मृग्यते त्वयीति युक्ता मृगधारिता तव ॥

२४९. वृषो हि धर्मः किल तत्र ते स्थितिस्तदुच्यसे त्वं वृषवाहनोऽखिलैः ।
निधानभूतो जगतस्त्वमेव यत्प्रकाम्यसे कामहरो हरोऽसि तत् ॥

२४७. चतुर्भुज इति ॥ हे शिव त्वं परिधौ वेष्टनमाने चतुर्णां भुजानां समाहारश्चतुर्भुजं तेनोपलक्षितंयत् व्यामयुगं तिर्यग्विस्तृतयोर्बाह्वोर्यदन्तरमानं तद्व्याम इत्युच्यते 'व्यामो बाह्वोः स करयोस्तयोस्तिर्यगन्तर'मित्यमरः। तयोर्युगं युग्मं तेन प्रमाणितः सञ्जातप्रमाणः व्यामस्य सार्धहस्तत्रयपरिमितत्वात्तद्युगप्रमाणितत्वेन वेष्टने सप्तहस्तपरिमित इत्यर्थः तथा च व्यामयुगस्य चतुर्भुजोपलक्षितत्वेन हेतुना चतुर्भुजः त्वं चतुर्भुजपदवाच्य इत्यर्थः तथा तेन प्रकारेण तव यत् यस्मात्कारणात् परस्वधर्मः परापरधर्मः परिसर्वतोभावेन खण्डितः त्यक्त एव समदर्शित्वात् तत् तस्मात्कारणात् खण्डपरस्वधः ध्रियत इति धोधर्मः तथा मेदिनीकोशात् खण्डौ खण्डितौ परस्वधौ परापरधर्मौ यस्येति व्युत्पत्त्या तथोक्तोऽसि परस्वधशब्दस्य परशुपर्याय पठितत्वात् तव खण्डपरशुरित्यादिकं नामान्तरमौपचारिकमेवेति भावः ॥

२४८. भवार्दितानामिति ॥ हे प्रभो सर्वाध्यक्ष भवान् भवार्दितानां संसारपीडितानां अतएव भवत्पदं भवतः पादपद्मम् भजतां सेवमानानां जनानामित्यर्थः अभयं भयाभावः अभीष्टमभीप्सितं च तदुभयं करोतीति तथा अभयाभीप्सितप्रद इत्यर्थः न किं न भवति किं अपि तु भवान् भवत्येव अभयाभीष्टेभयङ्करे करगृहीतवद्यस्य स तथाक्तो वा करगृहीतपदार्थस्य यथेष्टविनियोगार्हत्वात् तदुभयम् त्वयि तथाभूतमिव स्थितमित्यर्थः तेन च त्वं अभयाभीष्टकरः न तु तदुभयाभिनीतकर इति भावः तथा त्वयि चतुर्वर्गफलं धर्मार्थकाममोक्षरूपं न मृग्यते अन्विष्यते किं अपि तु मृग्यत एव हीत्यवधारणे इति हेतोरेव तव मृगधारिता मृग्यत इति मृगस्तं धर्तुं शीलं यस्य तस्य भावस्तत्ता मार्गणाश्रयतेत्यर्थः युक्ता उचिता संवीक्षणं विचयनं 'मार्गणं मृगणा मृग' इत्यमरः। चतुर्वर्गफलमृगणस्थानत्वेनैव ते मृगधारिता न तु पशुजातिविशेषरूपभारवाह कत्वेन तस्यानौचित्यादिति भावः ॥

एवन्तावत् परशुमृगवराभीतिरूपायुधचतुष्टयं समर्थितं तव त्वयि चतुर्वर्गफलं मृग्यत इत्युक्तं इदानीं चतुर्वर्गसम्बन्धित्वं दर्शयन् उपकरणान्तरयुक्तपदानि समर्थयते ॥

२४९. वृष इत्यादि ॥ हरति आत्मन्येव सर्वं गृह्णातीति हरः तस्य सम्बुद्धौ हे हर धर्मः प्रथमपुरुषार्थरूपो वर्गः वृषो वृषपदवाच्यः 'वृषो धर्मे बलीवर्दे' इत्यादि कोशात् हीत्यवधारणे तस्य वृषपदवाच्ये धर्मे ते तव स्थितिः प्रतिष्ठा किलेति प्रसिद्धौ तत् तस्मात्कारणात् त्वं अखिलैर्जनैरित्यर्थः वृषवाहनः वृषो वाहनं यस्य स तथा उच्यसे वृषवाहननाम्ना व्यवह्रियसे इत्यर्थः तेन च तव धर्मसम्बन्धित्वं अथ त्वमेव जगतो लोकस्य निधानभूतः निधीयन्तेऽस्मिन्निति निधानं तद्भूत आश्रयभूतः सुप्सुपेति समासः अथ च

२५०. त्वदंशभूतं पुरुषार्थसंहतेर्यतस्समस्तो परिवर्ततेऽमृतम् ।
त्वयि स्थितं तत्सकलं च मूर्ध्नि ते किमत्र चित्रं कलयामृताकरः ॥

२५१. शृणोषि सर्वत्र समस्तमीक्षसे ततश्च चक्षुः श्रवसां त्वमाश्रयः ।
जिनप्रधानैर्नहि सज्यसे यतोऽजिनोत्तरासङ्ग इति प्रगीयसे ॥

---

निधिस्वरूपः तेन च द्वितीयपुरुषार्थरूपः अतएव प्रकाम्यसे सर्वैरपि प्रकर्षेण काम्यसे अभिलष्यसे यत् यस्मात्कारणात् तत्तस्मादेव कामहरः कामानभिलाषान् हरति स्वात्मन्येव संगृह्णातीति तथासि कामहर-पदवाच्योऽसीत्यर्थः 'हरः स्मर हरो भर्ग' इत्यादि प्रयोगेषु स्मरहरादिपदमौपचारिकमेवेति भावः । एतेन तृतीयपुरुषार्थसम्बन्धित्वमभिहितम् ॥

२५०. त्वदंशभूतमिति ॥ हे शिव यतः यस्माद्धेतोः पुरुषार्थानां धर्मार्थकाममोक्षाणां संहतिः समूहः तस्या स्तन्मध्ये इत्यर्थः निर्धारणे षष्ठी अमृतं मोक्षरूपपुरुषार्थः 'अमृतं सलिले मोक्षे' इत्यादि कोशात् त्वदंशभूतं तवैकदेशरूपं सार्ष्टिसारूप्य सालोक्य सामीप्य सायुज्य रूपाणामपि मुक्तिभेदानां त्वत्सम्बन्ध-रूपत्वात् त्वदंशभूतत्वमित्यर्थः तच्चामृतं समस्तोपरि सर्वेषामपि पुरुषार्थाना मूर्ध्वभागे वर्तते सर्वप्राधान्यात् परमपुरुषार्थपदवाच्यत्वाच्चेति भावः सकलञ्च सार्ष्टिसारूप्यादि समस्तरूपमपि तत् अमृतं त्वयि स्थितं त्वत्सम्बन्धितया वर्तत इत्यर्थः तस्मादेव ते मूर्ध्नि मस्तके कलया अंशस्वरूपेण अमृतानां मुक्तिभेदाना-माकरः समूहः 'आकरो निकरेखना'विति कोशः । वर्तत इति शेषः अत्र विषये किं चित्रं किमाश्चर्यं न किमपीत्यर्थः अमृतस्य पीयूषस्य आकरः स्थानभूतश्चन्द्रः स च कलया तव मूर्ध्नि वर्तत इति तु परमार्थतो नेति भावः ॥

२५१. शृणोषीति ॥ हे शिव सर्वत्र प्रदेशे समस्तं शब्दजातं शृणोषि श्रावणप्रत्यक्षं करोषि ईक्षसे परमाण्वादि समस्तं वस्तुजातं च पश्यसीत्यर्थः ततस्तस्माद्धेतोः त्वं चक्षूंषि च श्रवांसि च चक्षुः श्रवांसि तेषां नयनकर्णेन्द्रियाणां आश्रयः स्थानभूतः 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपा'दित्यादि श्रुत्या तव चक्षुरादीन्द्रियाणामनेकत्वप्रतिपादनादिति भावः । न च 'चक्षुश्श्रवाः काकोदरः फणी'त्यादि कोशात् चक्षुः श्रवसां सर्पाणामाश्रयत्वं तव युक्तं तथा त्वं यतो हि यस्मादेव जिनो बुद्धः 'समन्तभद्रो भगवान् मारजिल्लोकजिज्जिन' इति बुद्धपर्याये अमरः । स एव प्रधानं येषां ते जिनप्रधाना बौद्धादयः तैः न सज्यसे नैव संसक्तो भवसि तस्मादेव अजिनोत्तरासङ्गः जिनएवोत्तरः श्रेष्ठो येषां ते जिनोत्तराः 'उपर्युदीच्य श्रेष्ठे-ष्वप्युत्तर' इत्यमरः । जिनोत्तरैरासङ्गः संसक्तिर्यस्य स जिनोत्तरासङ्गः स न भवतीति अजिनोत्तरासङ्ग इति प्रगीयसे प्रकर्षेण गीतो भवसीत्यर्थः निरीश्वरवादिनो हि बौद्धाः अत एव तेषां त्वयि संसक्तिर्नास्त्येव अजिनं चर्म तदेवोत्तरासङ्ग 'उत्तरीयं यस्येति व्युत्पत्त्या अर्थकल्पनं व्यामोहमात्रमिति भावः 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा संव्यानमुत्तरीयं च'त्यमरः ॥

२५२. स भूतिता यज्जगतोऽसि भूतिभूः कपालिता पालयसीति केन तत् ।
त्वमन्तकोऽपि त्रितयस्य तस्य यत्तवैव तेन त्रिपुरान्तकारिता ॥

२५३. श्मशानभूते निखिले तवैव यत् स्थितिः श्मशानालय वासितालये ।
यदर्धभागः पुरुषस्तथा स्त्रियस्ततोऽर्धनारीश्वरताऽप्युदीरिता ॥

२५४. अनावृतत्वात्प्रथितो दिगम्बरो गिरौ शयानो गिरिशस्त्वमेव तत् ।
स्वभूः स्वयम्भूरपि शम्भुशब्दितस्तथात्वमिन्द्रादिपदाभिवन्दितः ॥

---

२५२. स भूतितेति ॥ हे शिव यत् यस्मात् जगतो लोकस्य भूतिर्भवनं उत्पत्तिरिति यावत् यद्वा भूतिः सम्पत् 'भूतिर्भस्मनि सम्प'दीत्यमरः तस्या भूः स्थानमसि तस्मादेव तव सभूतिता भूतिसहितता न तु भस्मालिप्तता तथा केन सुखेन 'सुखशीर्षजलेषु कमि'ति मेदिनी तत् जगत् पालयसि रक्षसि इति हेतोरेव तव कपालिता केन सुखेन पालयितुं शीलं यस्य तस्य भावस्तत्ता न तु कर्परपात्रधारिता जगदीश्वरस्य तव तथाऽनौचित्यादिति भावः । तथा त्वं त्रितयस्य तस्य जगतः जगत्त्रयस्यापीत्यर्थः यत् यस्मात्कारणात् अन्तकः अन्तं करोति अन्तयति अन्तयतीत्यन्तकः प्रळयकर्ताऽसि तत्करोतीति ण्यन्तात् ण्वुल् तेनैव हेतुना तव त्रिपुरान्तकारिता त्रिपुरस्य लोकत्रयरूपस्य अन्तकारिता, नाशकता न तु त्रिपुरनाम्नः कस्यचिदसुरस्यान्तकारिता तथाविधस्यासुरस्यात्यन्तासम्भावितत्वादिति भावः ॥

२५३. श्मशानभूत इति ॥ हे शिव लये निखिलजन्यध्वंसरूपे महाप्रळये निखिले लोके श्मशानभूते सति तदानीम् प्राणिशून्यत्वादिति भावः यत् यस्माद्धेतोः तवैव स्थितिः विद्यमानता तस्मादेव तव श्मशानालय वासिता आ सर्वतोभावेन लय आलयः श्मशाने तथाभूते आलये महाप्रळयकाले वस्तुं शीलं यस्य तस्य भावस्तत्ता नत्वन्यत्र प्रेतभूमिरूपनिकेतने वासिता तथा तत्र पुरुषास्सर्वेऽपि पुमांसः यत् यस्मात् अर्धभागः अर्धांशरूपाः तथा तेनप्रकारेण स्त्रियः अर्धभागरूपा इत्यर्थः ततः तस्मादेव अर्धनारीश्वरता अर्धं समांशरूपा नार्यः पत्नीरूपाः स्त्रियः ईश्वराः पतिरूपाः पुरुषाश्च यस्य तस्य भावस्तत्ताऽपि उदीरिता कथिता नत्वेकस्मिन् शरीरेऽर्धनारीश्वरता असम्भवादिति भावः ॥

२५४. अनावृतत्वादिति ॥ हे शिव त्वमेव अनावृतत्वात् न आवृतोऽनावृतः तस्य भावस्तत्वं तस्मात् वस्त्राद्य नाच्छादितत्वात् दिगम्बरः दिशएव अम्बरं वस्त्रं यस्य स तथा प्रथितः प्रख्यातोऽसि तथा यत् यस्मात्कारणात् गिरौ अस्मिन्नेव गिरिगह्वरे इत्यर्थः शयानः सुप्त इव लिङ्गस्वरूपेण विद्यमानोऽसि तत् तस्मादेव गिरिशः गिरौ शेत इति गिरिशपदवाच्यस्त्वमेवासीत्यर्थः तथा तेनप्रकारेण त्वं स्वभूः स्वतो भवतीति तथोक्तः 'केशवो माधवस्स्वभू' रित्यादि कोशात् विष्णुपर्यायपठितशब्दवाच्योऽसीत्यर्थः स्वयमेव भवतीति स्वयम्भूः 'स्वयम्भूः कमलासन' इत्यादि ब्रह्मपर्याय शब्दवाच्योऽपि त्वमेवासीत्यर्थः एवञ्च शम्भुशब्दितः शम्भुशब्देन व्यवहृतः 'शम्भुरीशः पशुपति' रित्यादि शिवपर्यायबोध्योऽप्यसीत्यर्थः तद्वत् त्वं इन्द्रादिपदैरभिवन्दितोऽसि इन्द्रः, परमैश्वर्यवान् इदि परमैश्वर्ये इति धातुः तस्मादौणादिको रन् प्रत्ययः आदिपदादक्षरादिपदाभिवन्दितोऽपित्वमेवेत्यर्थः तथा च श्रुतिः 'स ब्रह्मा स शिवस्सहरिस्सेन्द्रः सोऽक्षरः परमः स्वराट्' इति ॥

२५५. सदातने सर्वगसर्वरूपिणि त्वयीह सर्वेश्वर एव केवले ।
विभेदबुद्धिर्यदहो महानट त्वदीय माया परिलुण्ठितं जगत् ॥

२५६. परम्परानन्दरसैकधाम यद्दयाम्बुधे तत्त्वमसीति बोधवान् ।
पदाम्बुजं नित्यविकासिसंश्रयन्नसानि सोऽहं तव हंसभावभाक् ॥

---

एवन्तावत् श्रुत्यागमप्रतिपाद्यस्वरूपं समासतः उपपाद्य क्वचिदपि तव वास्तविको भेदो नास्तीत्याह ॥

१५५ सदातन इति ॥ सदातने शाश्वते शाश्वतस्तु ध्रुवो नित्यः 'सदातन सनातने' इत्यमरः सर्वगे सर्वत्रविद्यमाने सर्वरूपिणि निखिलरूपधारिणि सर्वगश्चासौ सर्वरूपीचेति विशेष्यविशेषणसमासः सर्वेश्वरे निखिलजगदीश्वरे केवले भेदरहिते एव एवकारोऽत्र सजातीय विजातीय स्वगतभेदराहित्यद्योतनाय तथाभूते इह लिङ्गस्वरूपे त्वयि यत् विभेदबुद्धिः नायमीश्वरः पाषाणमयत्वादित्यादिरूपेण ब्रह्मविष्णवादि-रूपेण वा पृथक्त्वबुद्धिः तदिदमित्यर्थः हे महानट महांश्चासौ नटश्च तस्य सम्बुद्धौ हे लीलानाटकसूत्रधार जगत् लोकजातं त्वदीया त्वत्सम्बन्धिनी या माया अविद्यारूपा शाम्बरी शक्तिः 'मायास्याच्छाम्बरी' त्यमरः तयैव परिलुण्ठितं व्यामोहितमित्यर्थः अहो इत्याश्चर्ये अघटनघटनापटीयस्यास्त्वन्माया या न किञ्चि दसाध्यमित्यर्थः तथा च तव मायिको भेदो नवास्तविक इति भावः ॥

इदानीं स्वाभिलषितं प्रार्थयते ॥

२५६. परम्परेत्यादि ॥ दयया अम्बुधिः समुद्र इव दयाम्बुधिः तस्य सम्बुद्धौ हे कृपासमुद्र यत् परं सर्वोत्कृष्टं परः प्रधानोय आनन्दरसः ब्रह्मानन्दरसः स एव रसः जलं तस्य एकधाम अद्वितीयस्थानं सरित्समुद्रादिरूपं तेन च तव दयाम्बुधिपदं सार्थकमिति भावः तत् तथाभूतं धाम त्वमसि त्वमेव भवसि इति बोधवान् जानानः तथा नित्यविकासि नित्यविकाशशालि यत् तव पदाम्बुजं पादपद्मं तत् संश्रयन् मनोगत्या प्राप्नुवन्नित्यर्थः स तथा भूतोऽहं हंसस्य पक्षिविशेषस्य भावः हंसत्वमित्यर्थः तं भजतीति हंसभावभाक् असानि भवानि हंसवद्विलसानीत्यर्थः असभुवीति धातोः प्रार्थनायां लोटि उत्तमपुरुषैकवचनं हंसा हि जलाशयेषु पद्माश्रिताः विलसन्ति तद्वत् दयासमुद्ररूपे परानन्दरसाश्रये त्वयि त्वत्पादपद्माश्रि-तोऽहं हंसभावापन्नस्सन् विलसानीति वरप्रार्थना अथ योगमार्गपरतया व्याख्यायते संसारदुःखापनोदने-च्छादया तस्या अम्बुधिरिव तस्य सम्बुद्धौ हे तथाविध शिव हंसभावभाक् हंसो जीवः तद्भावभाक् जीवत्व-मापन्नोऽहमित्यर्थः 'तत्वमसी'ति बोधवान् 'तत्वमसी'ति श्रुतिप्रतिपाद्याखण्डब्रह्मात्मस्वरूप महावाक्यार्थ-ज्ञानवान् भूत्वेत्यर्थः यथा च तत्त्वमसीति महावाक्यादखण्डार्थप्रतीतिस्तत्प्रकारो ग्रन्थादिमश्लोकव्याख्याने प्रदर्शितः परम्परया परिपाट्या उत्तरोत्तरेणेति यावत् य आनन्दरसः षट्चक्रभेदक्रमात् ब्रह्मानन्दास्वादः तस्य एकधाम अद्वितीयस्थानं नित्यविकासि नित्यविकाशशालि तथाभूतं यत् तव पदाम्बुजं पदञ्च तत् अम्बुजञ्चेति पदाम्बुजं स्थानभूतं 'पद्मं पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' त्यमरः शिरस्थाधोमुखसह-स्रदलकमलमित्यर्थः यत्तदोर्नित्यसम्बन्धात् पूर्ववाक्ये यच्छब्दनिर्देशादत्र तच्छब्दोऽध्याहार्यः तत् अम्बुज-मित्यर्थः संश्रयन् षट्चक्रभेदक्रमेण प्राप्नुवन् सन्नित्यर्थः षट्चक्रभेदप्रकारस्तु योगशास्त्रेभ्योऽवगन्तव्यः

२५७. इति प्रतिष्टुत्य पुनः पुनर्णमन् प्रमोदबाष्पाकुलितेक्षणः क्षणम् ।
विविच्य गुप्तस्य चिरात् प्रचारयाञ्चकार गुप्तेश्वरनाम तस्य सः ॥

२५८. ततस्तदन्तस्थगुहाविहारिणा सहैव सर्वैर्बहुविस्मितात्मना ।
कृतस्पृहेन प्रतिवार्षिके महे त्र्यहादिहस्वं गृहमाजगेऽमुना ॥

२५९. भुजाश्रितं प्राज्यमतोमतस्सतां विभुज्य राज्यं समये वयोऽधिकः ।
सयोगविद्योगवशात्कळेबरं परात्मनि स्वात्मनियोजनाज्जहौ ॥

---

सोऽहं असानि सः परमात्मरूपोऽहं जीव इति महावाक्यार्थसंस्कारजन्याभेदप्रतिपत्त्या परमस्वरूपो भवानीत्यर्थः हंसशब्दो जीववाचकः सोऽहं शब्दः परमवाचकः जीवपरमयोरभेदोपचारात्पर्यायेण तदुभयवाचकौ तौ तयोर्मन्त्ररूपौ चेत्याद्यागमसुप्रसिद्धम् ॥

एवं स्वाभिलषितप्रार्थनानन्तरं किं कृतवान् तदाह ॥

२५७. इतीति ॥ स वीरविक्रमदेवनामा राजा इति अनेन प्रकारेण प्रतिष्टुत्य तं लिङ्गरूपं शिवं प्रस्तुत्य पुनः पुनर्णमन् पञ्चसप्तवारपर्यन्तं प्रणामं कुर्वन्नित्यर्थः प्रमोदबाष्पैः हर्षोद्रेकजनिताश्रुभिः आकुलिते व्याप्ते ईक्षणे नेत्रे यस्य स तथाभूतस्सन् क्षणं क्षणमात्रं विविच्य केन नाम्नायं प्रख्यापितव्य इति विचारं कृत्वेत्यर्थः चिरात् चिरकालात् प्रभृतिगुप्तस्य आच्छन्नतया स्थितस्य अतएव तस्य शिवस्य लिङ्गात्मकस्येत्यर्थः गुप्तेश्वरनाम गुप्तश्चासौ ईश्वरश्च तथाविधं नामधेयं प्रचारयाञ्चकार प्रख्यापयामास तथा च ततः प्रभृत्येव तस्य शिवलिङ्गस्य गुप्तेश्वर इति नाम लोके प्रसिद्धमासीदिति बोध्यम् ॥

तथा तस्य शिवलिङ्गस्य नामकरणानन्तरं तेन किं कृतं तदाह ॥

२५८. तत इति ॥ ततः तस्य शिवलिङ्गस्य स्तुतिप्रणामादि नामकरणानन्तरं सर्वैः मन्त्रिपुरोहितादिपरिजनवर्गैः सहैव तत्सहितो भूत्वैवेत्यर्थः तस्य पर्वतस्यान्तस्था अन्तर्वर्तिन्यः या गुहाः गह्वराणि तासु विहर्तुं शीलमस्येति विहारोऽस्यास्तीति वा तेन तथाभूतेन अत एव बहु नानाप्रकारं विस्मितश्चमत्कारं प्राप्त आत्मा अन्तरात्मा यस्य तेन पर्वतान्तः सुघटित दुरवधिकनानाप्रकारविचित्रबिलानामवलोकनेन जनिताश्चर्येणेत्यर्थः तथा वर्षे भवो वार्षिकः सांवत्सरिकः कालात् ठञ् प्रत्येकश्चासौ वार्षिकश्च तस्मिन् प्रातिवार्षिके इत्यर्थः महे उत्सवे कृता स्पृहा येन तेन प्रतिवर्षमनेनैव प्रकारेणात्र शिवरात्र्यां महोत्सवः कर्तव्य इतीच्छुकेनेत्यर्थः तथाभूतेन अमुना विक्रमदेवेन राज्ञा इह गुप्तेश्वरक्षेत्रे त्रयाणामह्नां समाहारः त्र्यहः राजाहः सखिभ्यष्टच् अह्नष्टखोरेवेति टिलोपः तस्मात् त्र्यहात् त्रिदिनं स्थित्वेत्यर्थः ल्यब्लोपे पञ्चमी स्वं स्वकीयं गृहं राजभवनमित्यर्थः आजगे प्राप्तं इण् गताविति धातोः कर्मणि लिट् गाङादेशश्च ॥

२५९. भुजाश्रितमिति ॥ योगश्चित्तवृत्तिनिरोधः तं तत्प्रकारं वेत्तीति योगवित् योगमार्गज्ञः अतएव सतां सज्जनानां मतोऽभिमतः पूजित इत्यर्थः क्तस्य च वर्तमाने इति षष्ठी तथाभूतः सः विक्रमदेवः अतः अनन्तरं निजपुरप्रवेशानन्तरमित्यर्थः भुजाश्रितं निजभुजावलम्बितं प्राज्यं प्रभूतं राज्यं राष्ट्रं सप्ताङ्गरूपं वा 'स्वाम्यमात्य सुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानी 'त्यमरः विभुज्य विशेषेण पालयित्वा वयोधिकः

२६०. तदा तदीयासनसन्निवेशितः सुतस्सितोष्णीषशिराः पुरो भवः ।
बभौ ससिक्तः सुरनिम्नगाम्भसा नगेन्द्रशृङ्गाश्रित चन्द्रचूडवत् ॥

२६१. पुरे गुणाख्ये गुणिनं विमातृजं नियोजयन् राजपदे गुणाग्रणीः ।
पुरः स सौभ्रात्रगुणं गुणिव्रजे निजं गुणानां गणनास्वजीगणत् ॥

वृद्धः सन् समये अन्तकाले योगवशात् समाधिवशात् परात्मनि परमात्मरूपे निष्कले परब्रह्मणीत्यर्थः स्वात्मनियोजनात् स्वात्मनो निजजीवात्मनः नियोजनं कृत्वेत्यर्थः ल्यब्लोपे पञ्चमी कलेबरं शरीरं जहौ तत्याज योगविरवेन योगेनैव प्राणान् विससर्जेत्यर्थः ॥

२६०. तदेति ॥ तदा तस्मिन् समये विक्रमस्य प्राणोत्क्रान्तिसमये इत्यर्थः पुरो भवोऽग्रजः ज्येष्ठ इति यावत् सः पूर्वोक्तः कृष्णदेवनामेत्यर्थः सुतः विक्रमदेवस्य पुत्र इत्यर्थः तदीयासने तस्य विक्रमस्य सिंहासने सन्निवेशितः मन्त्रिपुरोहितादिभिः सम्यक् राजोपचारादिना उपवेशितः सितोष्णीषं श्वेतपट्टवेष्टनं शिरसि मस्तके यस्य स तथा मस्तकबद्ध श्वेतपट्टवस्त्र इत्यर्थः 'उष्णीषं शिरोवेष्टकिरीटयो'रित्यमरः तथा सुरनिम्नगाम्भसा गङ्गाम्भसा सिक्तः प्रथमराज्याभिषेकविधिनाभिषिक्तः सन् नगेन्द्रस्य हिमालयस्य शृङ्गं शिखरमाश्रितोऽधिष्ठितः सचासौ चन्द्रः चूडायां यस्य स च चन्द्रशेखरः शिव इत्यर्थः तेन तुल्यस्तद्वत् बभौ चकाशे नगेन्द्रशृङ्गे गङ्गाम्भसा सिक्तश्चन्द्रशेखर इव बभावित्यर्थः अत्र सिंहासनस्यात्युन्नतत्वान्नगेन्द्रशृङ्गसाम्यं सितोष्णीषस्य चन्द्रसाम्यं तेन च राज्ञः शिवसादृश्यं प्रतिपत्तव्यं अयं हि क्रीस्तोः (१६३०) त्रिंशदधिकषोडशशततमेऽब्दे जातः एकोनसप्तत्यधिकषोडशशततमेऽब्दे (१६६९) लोकान्तरं गतस्य पितुः सकाशाद्राज्यं लब्धवान् ॥

२६१. पुर इति ॥ अग्रे नीयत इत्यग्रणीः क्विप् अग्रग्रामाभ्यामिति णत्वं गुणैर्दयादाक्षिण्यादिभिरग्रणीः अग्रिमः श्रेष्ठ इति यावत् सः कृष्णदेवः गुणाख्ये पुरे निजराष्ट्रान्तर्गत गुणपुरनाम्नि नगरे गुणिनं राज्यपरिपालनदक्षत्वादिगुणयुक्तं विमातृजं वैमात्रेयभ्रातरं पूर्वोक्तयशस्वन्नामानं यशोवन्त देव इति प्रसिद्धमित्यर्थः राजपदे राजव्यवसाये 'पदं व्यवसितत्राणे'त्या'दि कोशात् नियोजयन् तत्र तं नृपं कुर्वन्नित्यर्थः गुणिव्रजे गुणिकजनसमाजे गुणानां औदार्यादीनां गणनासु सङ्ख्यानेषु सत्सु पुरोग्रे निजमात्मीयं सौभ्रात्रगुणं शोभनो भ्राता यस्यासौ सुभ्राता नद्यृतश्चेति कपि प्राप्ते वन्दिते भ्रातुरिति निषेधान्न कप् तस्य भावः सौभ्रात्रं युवादित्वादण् तदेव गुणः तं अनुजवात्सल्यगुणमित्यर्थः अजीगणत् गणयामास सौभ्रात्रगुणस्यास्य अनन्यसाधारणत्वादिति भावः अयं हि यशस्वान् देवः द्वात्रिंशदधिकषोडशशततमे (१६३२) क्रीस्ताब्दे समुत्पन्नः गुणपुरे राज्यं कृतवान् तत्पुत्रो विश्वनाथदेवः एतस्य त्रयः पुत्राः रघुनाथः शङ्करयशोवान् मुकुन्ददेवश्चेति तत्र रघुनाथस्तु निजपितामहभ्रातुष्पुत्रस्य बलरामनाम्नो राज्ञः दत्तकपुत्रः सन् जयपुरे राज्यं कृतवान् एतदुपरिष्टात् कथयिष्यते इतरौ तु पितृक्रमेण गुणपुरादिषु राज्यं कृत्वा निस्सन्ततीमृतौ इति ॥

२६२. कुमुलिका बोब्बिलिदेवपल्लिकादिकांश्च देशान् सुहृदादिसेवकैः ।
स्वयञ्च भुञ्जन्नपि भोजयन् चिरं वदान्यमान्येष्वयमप्यगण्यत ॥

२६३. स आप पुत्रान् चतुरो गुणैः परान् क्षितौ सुराणामुपकारतत्परान् ।
परास्तनिश्शेष बलोन्मथत्परान् महारथान् दाशरथीनिवा परान् ॥

२६४. अयं हि विश्वम्भरया समुल्लसन् श्रिया च विश्वम्भरणेन तोषयेत् ।
इतीव विश्वम्भरमूर्तिरग्रजः स तेषु विश्वम्भरनाम लब्धवान् ॥

२६२. कुमुलिकेति ॥ अयं कृष्णदेवः कुमुलिकाबोब्बिलिदेवपल्लिकाः तत्तन्नामभिः प्रसिद्धादेशा आदयो येषां तान् देशान् चिरं चिरकालपर्यन्तं स्वयं भुञ्जन् राजभागग्रहणेन पालयन्नपि सुहृदादि सेवकैः निजमित्रप्रभृतिभिरनुगतवर्गैः भोजयन् सामन्तादिपदप्रदानेन तेषु तान् नियोजयन्नित्यर्थः वदान्यमान्येषु दानशौण्डप्रधानेषु मध्ये इत्यर्थः अगण्यत स्वयञ्च सङ्ख्यातो बभूवेत्यर्थः अयं हि बेजवाडनामकदेशात् स्थानभ्रष्टान् स्वाश्रिततामुपागतान् पुष्पाटि (पूपवाट्ट) वंशीयान् निजराष्ट्रान्तर्गत कुमुलिगंडेड्डुनामकग्राम-द्वयसहितेषु कियत्सु देशेषु निजसामन्तपदे नियोजयन् संस्थापयामास तथा हैदराबादप्रदेशात् समागतं इस्तवेगनामकनवाबं बोब्बिलिदेशे राजानं प्रबोधयामास स च नावाबः समयान्तरे रङ्गरायपदप्रसिद्धं कञ्चित् गोपालकृष्णनामकं तस्मिन् बोब्बिलिदेशे स्वाधिकारपदे नियोज्य स्वयं पुनः हैदराबादं जगामेति सङ्गमवलसभूपतिकृतवंशावलौ एवं छोटराय इति पदेन सम्भाव्य रामचन्द्रराय नामानं देवपल्लिनामक-देशप्रदानेन स्थापयामास ततश्च सुरेडिवंशीयान् निजभक्तान्निरीक्ष्य रेकपल्लिनामकदेशं प्रादात् स्वस्य प्रधानमन्त्रिणं शिवराममहापात्रं समादरात् कटकिप्रदेशान् विभुञ्जयामास जगन्नाथराय इति कश्चित् तं मेदिनी रायपदेन प्रख्याप्य नारुवाप्रदेशेषु अधिकृतं संस्थापयामास मुत्तावंशीयान् कोटपाले मुप्रदेशे स्थापयामास एवं स्वानुगतवर्गान् तत्तद्देशेषु स्वसहायतया संस्थाप्य तैः सेवितः स्वराज्यं कृतवान् इति ॥

२६३. स इति ॥ सः कृष्णदेवः चतुरः चतुःसङ्ख्यकान् पुत्रान् आप प्राप जनयामासेत्यर्थः किं भूतान् गुणैः शौर्यादिभिः परान् श्रेष्ठान् क्षितौ सुराणां भूदेवानां ब्राह्मणानामिति यावत् 'द्विजात्यग्रजन्म भूदेवबाडबाः विप्रश्च ब्राह्मणश्च'त्यमरः उपकारे विषये तत्परान् आसक्तान् 'तत्परे प्रसितासक्ता'वित्यमरः अन्यत्र पृथिव्यामवतीर्णाः देवानामुपकारिणः बलेन सामर्थ्येनोन्मथन्ति पीडयन्ति जनानिति बलोन्मथन्तः बलदर्पिता इत्यर्थः ते च पराः शत्रवः परास्ताः पराभूताः मारिता इति यावत् निश्शेषाः समग्राः बलोन्मथत्पराः बलदृप्तारयो यैस्तान् अन्यत्र बलनामासुरमुन्मथतीति बलोन्मथन् इन्द्रः तस्य पराः शत्रवः राक्षसा इत्यर्थः । अन्यत् पूर्ववत् समग्रा इन्द्रवैरिणो राक्षसा यैर्निहतास्तानित्यर्थः महारथान् महारथलक्षणोपेतान् तल्लक्षणादिकं प्राक् पञ्चविंशतितमश्लोकव्याख्यानेभिहितं अतएव अपरान् दाशरथीन् दशरथापत्यभूतान् रामलक्ष्मणभरतशत्रुघ्नानिव स्थितानित्यर्थः ॥

तत्र ज्येष्ठस्य नामधेयं सप्रयोजनमाह ॥

२६४ अयमिति ॥ विश्वम्भरस्य विष्णोः मूर्तिरिव मूर्तिर्यस्य सः 'नाविष्णुः पृथिवीपति'रित्युक्तेः तत्स्वरूप इत्यर्थः अतएव सः प्रसिद्धः तेषु पुत्रेषु मध्ये इत्यर्थः अग्रजो ज्येष्ठः अयं हि अयमेव ज्येष्ठ इत्यर्थः

**२६५. स चावसाने पितुरुत्तमाशयः शयोल्लसच्छासनदण्डचण्डिमः ।**
**स्वदत्तदेशाधिकृतैर्नवद्वयप्रधानसामन्तचयैरसेव्यत ॥**

---

**विश्वम्भरया पृथिव्या 'भूर्भूमिरचलानन्ता रसा विश्वम्भरा स्थिरे'त्यमरः श्रिया राजलक्ष्म्या च सहेत्यर्थः सहार्थे तृतीया समुल्लसन् प्रकाशमानः विश्वं सर्वजनजातं भरणेन पोषणेन तोषयेत् प्रीणयिष्यतीत्यर्थः सम्भावने लिङ् इतीव इति हेतोरिव विश्वम्भरनाम विश्वम्भर इति नामधेयं लब्धवान् प्राप विष्णुस्तु पृथिव्या लक्ष्म्या च समुल्लसितो विश्वं बिभर्ति अयमपि तथा भविष्यतीति तन्नाम्नाभिहित इत्यर्थः ॥**

२६५ सेति ॥ उत्तमाशयः शोभनाभिप्रायः स च विश्वम्भरदेवः पितुः निजतातस्य कृष्णदेवस्येत्यर्थः अवसाने अन्तकाले शये पाणौ उल्लसन् प्रकाशमानः यः शासनार्थं दण्डः दुर्णयोपशमनार्थदण्डः तेन चण्डिमा उग्रता यस्य सः तथाभूतस्सन् स्वेन दत्ताः स्वीकारिताः देशाः अष्टादशसङ्ख्याकप्रदेशाः तेषु अधिकृतैः अध्यक्षतां प्राप्तवद्भिः 'अध्यक्षाधिकृतौ समा'वित्यमरः नवानां द्वयं लक्षणया अष्टादशसङ्ख्याकाः इत्यर्थः ये प्रधानाः सामन्ताः स्वदेशानन्तरराजानः तेषां चयैः समूहैः असेव्यत प्रणताशेषसामन्तो बभूवेत्यर्थः अवेदं बोध्यं अस्य राज्ञः राज्यसमये स्वपितृदत्तकुमुल्लिगण्डेडुप्रधानप्रदेशेऽधिकुर्वन्तः पुष्पाट (पूषवाड्) वंशीयाः तदानीं शिखाकोलस्थनवाबसहायेन बाहुबलेन्द्रोपभुक्तदेशेभ्यः कियतोदेशान् स्वायत्ततामानयन् तथा जयपुरराष्ट्रान्तर्गतानपि गाडिगडानामकप्रदेशपर्यन्तान् देशान् स्वायत्ती चक्रुः तथा दुराशयान् तानवलोक्य अयं विश्वम्भरदेवः स्वदेशरक्षार्थमष्टादशसामन्तान् संस्थापयामास तद्यथा (१) किमुरिकुलोत्पन्नान् ज्येष्ठांशिनः बलियारसिंहपदेन सम्भाव्य सालूरु पेद्दापद्दं नामकदेशद्वयेऽधीशतया स्थापयामास (तद्वंशीयानेव कनिष्ठांशिनः रणभानुपदोपेतान् कुर्वन् रामभद्रपुरे तत्पालकतया प्रबोधयामास (अरिशल्यनामानं कञ्चित् माकुवाप्रदेशे प्रधानसाचिव्यपदे नियोजयामास (४) रणसिंहनामानं सियुडिप्रदेशे व्यावहारिकं चकार (५) सन्यासि दोरोपपदवाच्याय वैरिशल्यपदेन सम्मान्य कुरुपांदेशं प्रादात् (६) जगन्नाथदोरानामानं शत्रुशल्यराजपदेन मेरङ्गिदेशाधिपं व्यधात् (७) बाल्यकालात् निजाश्रितं योगिनायिकं पात्रपदारूढं कुर्वन् पालेमुदेशखण्डे निधापयामास (८) जनार्दननाम्नः कस्यचित्पुत्रं नरेन्द्रराय पदेन संयोज्य पालकोण्ड बिरिकोट् नामकदेशद्वयेऽधिकारयामास (९) तेडाग्रामस्थिततामन्नामानं युद्धेऽग्रगं दृष्ट्वा दक्षिणकवाट युवराजपदेन पाचिपेण्डा (पाङ्कपेण्ठा नामदेशेऽधिकृतं विदधे (१०) दीनबन्धुनामानं पायिकरायपदप्रदानेन पोरामुप्रदेशमन्वभोजयत् (११) हरिहररायनामानं मङ्गराजपदेन प्रख्याप्य सङ्गवलसरसाधिपं प्राबोधयत् (१२)गारेयदोराभिधेयस्य शौर्यादिगुणं दृष्ट्वा प्रतापरायपदप्रख्यापनेन तं आण्डरप्रदेशमनुग्राहयामास (१३) शालवरायनमानं कोडूरुप्रदेशे प्राड्विवाकपदं स्वीकारयामास (१४) पीताम्बरमणिरायं वण्डापल्लिधराखण्डलपदं स्वीकारयामास (१५) कल्याणरायस्य पुत्रं युगसाईपदेनाभिधाय कलहंडिराज्ये न्ययोजयत् (१६) स्वाश्रितं नीलकण्ठसाइनामानं नवदुर्गे (नुवागड इति प्रसिद्धे) अधीश्वरं चकार (१७) कुमारोपत्तनादागतं महापात्रोपनामकं कञ्चित् खडिआलयभूपालं चकार (१८) माड्गुलुदेशे स्वविद्रोहिणः कृष्णभूपतिवंशीयान् भूपतिपदान्निष्कास्य तत्र मुकालोकनामानं कञ्चित् गाणतुलाशम्भुभूपतिनाम्ना प्रख्याप्य तस्मै भूभारं समर्पयामास स्वसहायं प्राप्तं पारळाकेमुण्डिधराधीशं च बन्धुभावात् अणराशिनामकप्रदेशं गाडिबाह्मणोग्राममारभ्य गौरीबन्धपर्यन्तं अनु भोजयामास एवन्तावत्

२६६. तनुश्रिया पैतृकरामणीयकं दधद्द्वितीयोऽभिदधे तदाह्वया ।
अमर्दयद्यावनमल्लकं यदा तदा स तन्मर्दनशब्दभागभूत् ॥

२६७. तृतीय आख्यायि हरिस्त्वभिख्यया व्यभात्तुरीयो बलरामनामभाक् ।
अनुक्रमात्ते तनुजानिवप्रजाः प्रगोप्य निन्युः समयं विसूनवः ॥

तत्तद्देशेषु तांस्तान् अधिकारपदेषु संयोज्य गिरिसठं एकजट धीरयाख्यस्य बलरामप्रतिष्ठितस्य गुम्पसोमेश्वरस्य वृत्त्यर्थं गुम्प कोदुलगुम्पेति ग्रामद्वयं दत्त्वा ज्येष्ठानुक्रमेण धर्मकर्तृत्वं निरूप्य तत्साहाय्येन निष्कण्टकं राज्यं चिरं विभुज्य षट्सप्तत्यधिकषोडशशततम (१६७६) क्रिष्टाब्दे निजानुजे राज्यभारं दत्त्वा स्वयं स्वर्गसोपानमधिरोहति स्म ॥

२६६. तनुश्रियेति ॥ द्वितीयः कृष्णदेवस्य द्वितीयपुत्र इत्यर्थः तनुश्रिया निजशरीरकान्त्या पैतृकरामणीयकं रमणीयस्य भावः रामणीयकं रमणीयशब्दात् योपधाद्गुरूपोत्तमाद्वुञिति वुञ् पितुरिदं पैतृकं यत् रामणीयकं पितृसम्बन्धिनी रमणीयता तत् दधत् दधानः अतएव तदाह्वया तस्य पितुराह्वया आख्यया 'आख्याह्वे' इत्याद्यमरः कृष्णदेवनाम्नेत्यर्थः अभिदधे आख्यायते स्म जनैरिति शेषः सः तथाऽभिहितो द्वितीयः यदा यस्मिन् काले यावनमल्लकं मल्लएव मल्लकः स्वार्थे कन् यवनानामयं यावनः सचासौ मल्लकश्च तं यवनजातिसम्बन्धिमल्लविशेषं अमर्दयत् रणे जितवान् तदा तस्मिन् काले ततः प्रभृत्येवेत्यर्थः तन्मर्दनशब्दभाक् तं मल्लकं मर्दयतीति तन्मर्दनः मल्लकमर्दन इत्यर्थः तन्मर्दन इति शब्दः तं भजतीति तथा अभूत् मल्लकमर्दन कृष्णदेव इति नामभागभूदित्यर्थः अयं हि पञ्चाशदधिकषोडशशततमे (१६५०) क्रिष्टेऽब्दे जातः (१६७६) क्रिष्टीयाब्दे निजज्येष्ठभ्रातुः सकाशाद्राज्यं लब्धवान् कदाचित् स्वराज्यसमये प्राञ्चिदेशीयाः एतन्नन्दपुरमागत्य महोपद्रवं दधुः तदानीं स्वचतुरङ्गसैन्येन सहायं कृष्णदेवः समरे तान् विजित्य तत्सैन्याधिपतित्वप्राप्तं मल्लिकनामानं कञ्चित् यवनवीरं जघान तेन च तस्य मल्लिकमर्दन कृष्णदेवेति नाम लोके प्रसिद्धिमगात् तद्युद्धपरास्तानां तत्सैन्यानां सकाशात् अशीति (८०) सङ्ख्याकान् शतघ्नीनामायुधविशेषान् ये तु तोप इति नाम्ना लोके प्रसिद्धाः तान् लब्धवान् तन्मध्याच्चतुर्दशसङ्ख्याका इदानीमपि राजभवने वर्तन्ते अन्येऽपि भूमिगता यत्र कुत्राप्यत्र वर्तन्ते इति किं वदन्ती ॥

२६७. तृतीयेति ॥ तृतीयः कृष्णदेवस्य तृतीयपुत्र इत्यर्थः हरिस्त्वभिख्यया हरिरिति शोभननाम्ना 'अभिख्यानाम शोभयो'रिति कोशात् आख्यायि आख्यायते स्म कर्मणि तङ् च्लेश्चिण् तुरीयः चतुर्थपुत्र इत्यर्थः चतुरशब्दात् पूरणार्थे छप्रत्ययेनाद्यक्षरलोपेन च, तुरीयशब्दो निष्पन्नः बलरामनामभाक् व्यभात् बलरामनाम्ना बभौ ते चत्वारोऽपि भ्रातरः अनुक्रमात् ज्येष्ठानुक्रमेणेत्यर्थः प्रजाः जनान् तनुजान् पुत्रानिव प्रगोप्य पालयित्वा विगताः सूनवः पुत्रा येषां ते तथाभूताः सन्तः समयं कालं निन्युः यापयामासुः निस्सन्तानामृता इत्यर्थः हरिदेवस्तु द्विपञ्चाशदधिकषोडशशताब्द्यां (१६५२) समुत्पन्नः एकाशीत्यधिकषोडशशततमे (१६८१) क्रिष्टाब्दे निजभ्रातुर्मल्लकमर्दन कृष्णदेवस्य सकाशाद्राज्यं लब्ध्वा चतुरशीत्यधिकषोडशशताब्द्यां (१६८४) निजकनिष्ठे बलरामे राज्यभारं समर्प्य स्वयं गोलोकं जगाम बलरामस्तु चतुःपञ्चाशदधिकषोडश (१६५४) शताब्द्यामवतीर्णः षडशीत्यधिकषोडशशततमे (१६८६) क्रिष्टाब्दे लोकान्तरं गतवानिति ॥

२६८. अथात्र पौत्रो ननु यो यशोवतः सवैश्वनाथी रघुनाथनामवान् ।
सुतत्वमाप्तो बलरामवर्मणोऽभ्यधायि कृष्णाभिधया धराधिपः ॥

२६९. अपि प्रभुं स्वं परिभाव्यवर्तनात्स्वयं तमोरायशिरो विकर्तयन् ।
निरूप्य मेरंगिपुरेऽस्य योऽनुगं नृपं जगन्नाथमथो दिवं ययौ ॥

२७०. षडर्घ्यमाप्तस्य सुरैः षडास्यवत् षडस्य पुत्राः षडुपायवेदिनः ।
षडङ्गविज्ञा षडरीन् विजित्य ये षडङ्गसौम्याः स षडुन्नता बभुः ॥

---

२६८. अथेति ॥ अथ बलरामादीनां लोकान्तरगमनानन्तरं रघुनाथनामवान् धराधिपो बभूवेति सम्बन्धः स कः यः यशोवतः यशोवन्तदेवनाम्ना प्रसिद्धस्य पूर्वोक्तस्य गुणपुराधीश्वरस्य पौत्रः ननु इत्यवधारणे तथा वैश्वनथिः विश्वनाथस्यापत्यं पुमान् अत इञ् बलरामवर्मणः बलरामनाम्नो राज्ञः वर्मा राजा च भूभृत इत्याद्युक्तेः सुतत्वं दत्तकपुत्रत्वमाप्तः प्राप्तस्सन् कृष्णाभिधया कृष्णनाम्ना अभ्यधायि अभिहितः सः रघुनाथ इति नाम तद्वान् रघुनाथकृष्णदेव इति प्रसिद्ध इत्यर्थः अत्र जयपुरे धराधिपो राजा बभूवेति शेषः अयं हि रघुनाथकृष्णदेवः सप्तत्यधिकषोडशशताब्द्यां (१६७०) जातः गुणपुरादागत्य जयपुरे राज्यं कृतवान् एतस्य कनिष्ठभ्रातरौ गुणपुररायगडनामकदेशद्वये राज्यं कृत्वा निस्सन्ततौ मृताविति पूर्वमेवाभिहितं ॥

२६९. अपीति ॥ यः रघुनाथकृष्णदेवः स्वयं प्रभुं स्वामिनमपि स्वमात्मानं परिभाव्यावमत्य तिरस्कृत्येति 'यावत् परिभावस्तिरस्क्रिये'त्यमरः वर्तनात् स्थितत्वाद्धेतोः तमोरायस्य तन्नाम्नः स्वामिद्वेषिणः मेरंगिपुराधीश्वरस्य शिरः मस्तकं विकर्तयन् छेदयन् अत्र तमोरायस्य तामारायि इति प्रसिद्धस्येत्यर्थः अनुगं अनुचरं जगन्नाथं तन्नामानं मेरंगिपुरे मेरंगिनाम्निपत्तने नृपं निरूप्य तत्र तं राजानं प्रबोध्य अथ समयान्तरे दिवं स्वर्गं ययौ गतवान् मानवलीलां तत्याजेत्यर्थः अत्रेयं कथा अयं रघुनाथकृष्णदेवः राहुवंशीयं कञ्चन कृष्णनामानं स्वभक्तं भीष्मकटके दुर्गे स्वसामन्ततया संस्थाप्य तं थाटराजाबहादुर इति पौरुषनामप्रदानेन सम्भावयामास तदसहमानो मेरंगिधराधीशो तम्मरायपदवाच्यः सामन्तः स्वामिनो जयपुराधीश्वरस्य अवमानेन विद्रोहं चकार अवमतोऽसौ रघुनाथकृष्णदेवः तद्वधार्थं जैत्रयात्रां चकार स च, प्राणभयात् स्वदेशं परित्यज्य पारळानरपतिं शरणं जगाम तदानीमसौ जयपुराधीशः पारळाधिपतेः समीपं लिलेख किमिति अस्मद्विद्रोहिणं शिरच्छेदनयोग्यं तमोरायमस्मत्सन्निकटे समर्पय नोचेत् युद्धार्थं सन्नद्धो भव इति स च तथा लेखं दृष्ट्वा तत्क्षणेऽनायत्यावातेलिमुठानामकप्रदेशादानेन तं विद्रोहिणं जयपुरगोचरं समर्पयामास अयं जयपुरनरेशः तम्मरायस्य शिरच्छेदं कारयित्वा तत्स्थाने तस्यैवानुचरं जगन्नाथनामानं राजपदप्रदानेन स्वसामन्तं चकारेति पुराविदः ॥

२७०. षडर्घ्यमिति ॥ षड्भ्यो देयमर्घ्यं षडर्घ्यमित्युच्यते षडर्घ्यार्हा भवन्ति आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति इति गोभिलाद्युक्तेः यद्वा षण्णामर्घ्याणामर्हणानां समाहारः षडर्घ्यं विष्टरादिगवान्तः षट्प्रकारमर्हणमित्यर्थः तथा च गोभिलेन विष्टरपाद्यार्घ्याचमनीय मधुपर्क

२७१. धरामवन् तत्प्रथमस्तु तत्र यः स रामचन्द्रः प्रथमं स्तुतोऽर्थिभिः ।
प्रभुत्वमाभाव्य च साङ्गवालसारसासु निःशङ्कमशङ्कितं व्यधात् ॥

२७२. ततोऽनुजन्मा बलरामनामवान् निजेन धाम्ना बलरामसाम्यधृक् ।
रराज नारायणपत्तने पुरः पुरोजवैरात्कृततत्पुरस्थितिः ॥

---

नेकैकशस्त्रिस्त्रिर्वेदयेरन्नित्यादिना विष्टरादिपञ्चप्रकाराणामर्हणानां विधिं प्रदर्श्य अन्ते आचान्तोदकायगौरित्याद्यभिहितं विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते इति च गृह्यान्तरं अत्र षडर्घ्यमातिथेयमेव सुरैर्देवैः षडर्घ्यमास्य षडर्घ्यकर्मणापूजितस्येत्यर्थः कस्येव ? षडास्यवत् यथा षडास्यः कार्तिकेयः देवैः पूजितः तद्वत्पूजितस्येत्यर्थः अस्य रघुनाथकृष्णदेवस्य स्वर्यातस्येत्यर्थः षट् पुत्राः अभवन् अत्र हि षडास्यवदिति योज्यं षडास्येन तुल्याः षडास्यवत् षट्पुत्रा अभूवन्नित्यर्थः ते किम्भूताः षडुपायवेदिनः सन्धिविग्रहयानासनद्वैधसंश्रयात्मक षड्गुणरूपाः उपायाः सन्ध्यादीनां गुणशब्दवाच्यत्वेऽपि सार्थसम्पादकत्वेनोपायता बोध्या यद्वा षट्पदेन सन्ध्यादयः षड्गुणाः उपायास्सामादयश्च तान् वेदितुं शीलं येषां ते तथाभूताः अथवा सामदानञ्च भेदश्च दण्डश्चेति चतुष्टयं मायोपेक्षेन्द्रजालञ्च सप्तोपायाः प्रकीर्तिता इत्यत्र इन्द्रजालस्य मायारूपत्वात् षण्णामपि पुत्राणां प्रत्येकस्य एकैकोपायज्ञानशालित्वाद्वा षडुपायेत्युक्तं वेदितव्यं षडङ्गानि जङ्घादीनि सौम्यानि शोभनानि येषां ते तथोक्ताः जङ्घे बाहू शिरो मध्यं षडङ्गमिदमुच्यते इति शब्दचन्द्रिका षड्भिरुन्नतैरवयवैः सहिताः सषडुन्नताः उक्तञ्च सामुद्रके ‘नासानेत्रञ्च दन्ताश्च ललाटञ्च शिरस्तथा । हृदयञ्चैव विज्ञेयमुन्नतं षट्प्रशस्यते’ इति तथाभूताः ये पुत्राः षडङ्गं वेदाङ्गादीनि षट्शास्त्राणि उक्तञ्च शब्दरत्नावलौ ‘शिक्षाकल्पो व्याकरणं निरुक्तं ज्योतिषं तथा । छन्दश्चेति षडङ्गानि वेदानां वैदिका विदुः’ इति तत्र विज्ञाः शिक्षिताः अतएव षडरीन् कामक्रोधलोभमोहमदमात्सर्यरूपमरिषड्वर्गमित्यर्थः विजित्य तेष्वनासक्ताभूत्वेत्यर्थः बभुः शुशुभुः रघुनाथकृष्णदेवस्य द्वे भार्ये प्रथमभार्योत्पन्नास्त्रयः पुत्राद्वितीयोत्पन्नास्त्रय इति षट्पुत्रा बोद्धव्याः ॥

२७१. धरामिति ॥ तत् तस्मात् रघुनाथकृष्णदेवस्यानन्तरमित्यर्थः तत्र तेषु पुत्रेषु मध्ये निर्धारणे त्रल् । यस्तु प्रथमः ज्येष्ठः रामचन्द्रः तन्नामा स ज्येष्ठपुत्रः प्रथमं पूर्वं धरां पृथिवीं अवन् पालयन् अर्थिभिर्याचकैः स्तुतः औदार्यगुणेनाभिवन्दितः सन् साङ्गवालसारसासु साङ्गवालसानामकभूप्रदेशेषु ‘भूर्भूमिरचलानन्तारसा विश्वम्भरास्थिरे’त्यमरः निःशङ्कं तन्नामानं कञ्चिद्राजवीजिनं प्रभुत्वमधिपत्वं आभाव्य प्रापयित्वा भूप्राप्तावित्यस्माद्धातोर्णिजन्ताल्ल्यप् अशङ्कितं शङ्कारहितं व्यधात् तत्र तं राजानं कृत्वा स्वयं साहाय्यप्रदानेन सार्थनामानं चकारेत्यर्थः अयं रामचन्द्रदेवः (१६८७) सप्ताशीत्यधिकषोडशशततमे क्रिष्टाब्दे जातः अष्टोत्तरसप्तदशशताब्द्यां (१७०८) लोकान्तरं गतस्य पितुः सकाशाद्राज्यं लब्ध्वा वर्षत्रयं राज्यं कृत्वा लोकान्तरं गतवान् ॥

२७२. तत इति ॥ ततः रामचन्द्रात् अनुपश्चात् जन्म यस्य सोऽनुजन्मा अनुजः बलरामनामवान् तन्नामा निजेन आत्मीयेन धाम्ना तेजसा बलरामस्य कृष्णाग्रजस्य साम्यं धृष्णोतीति तथा बलरामसमानतेजस्वीत्यर्थः तेन च तस्य तन्नामसार्थकमिति भावः धृगित्यत्र ‘ञि धृषा प्रागल्भ्ये’ इति धातोः

२७३. तदन्तरे तच्चरमोद्भवः प्रभुर्बभूव विश्वम्भरवत्तदाह्वयः ।
सदाव्यनोदत्प्रमदाजनैर्मुदा नदीवनोद्यानंनिकेतनेषु यः ॥

२७४. व्रती पुरा नन्दपुरप्रतिष्ठिताम्बिकाङ्घ्रिशेषाशनपूर्वभोजने ।
दिनेतदप्राप्तिवशादुपोषितो निशीप्सितस्वप्ननिदेशचोदितः ॥

---

ऋत्विगादिना क्विनो विधानात् क्विन् प्रत्ययस्य कुरित्यत्र क्विन् प्रत्ययो यस्मादित्य तद्गुणसंविज्ञान बहुव्रीह्याश्रयणात् क्विन्यपि कुत्वं पिनाकदृगित्यादिप्रयोगदर्शनात् तथाभूतः सः नारायणपत्तने नारायणपट्टणाख्ये पुरे रराज राजा बभूवेत्यर्थः ननु जयपुरं त्यक्त्वा किमर्थं तत्र गतवानित्यत्र आह—पुर इति पुरः स्वराजत्वप्राप्तेः पूर्वमेव पुराजेन निजाग्रजेन सह वैरात् विरोधाद्धेतोः कृता तत्पुरे तस्मिन् नारायण पट्टणाख्ये स्थितिर्येन स तथा भूतः तथा च प्रथमतएव निजज्येष्ठभ्रातृणा रामचन्द्रदेवेन राज्ञा सह विरुध्य नारायणपट्टणाख्यं पुरं गत्वा तत्र स्थितवान् ज्येष्ठभ्रातुरपुत्रकस्य लोकान्तरगमनानन्तरं तत्रैव पुरे राज्याभिषिक्तस्सन् राजधानीं चकारेति बोध्यं भ्रातृविरोधकारणं त्विदं ज्येष्ठो रामचन्द्रदेवो राजा भूत्वा विजयनगराधिपतेर्विजयरामराजस्य ज्येष्ठभ्रातरं सीताराम राजनामानं निजसाचिव्यपदे नियोजयामास तस्य मन्त्रिणः क्रूरबुद्धिं समीक्ष्यायं बलरामदेवः तत्पक्षपातिना ज्येष्ठभ्रातृणा राज्ञा सह विरुध्य स्थानान्तरं जगाम ज्येष्ठभ्रातुरनन्तरमपि तस्य मन्त्रिणो बुद्ध्या प्रवर्तितानां वैमात्रेयभ्रातृणां वैमनस्यान्निजकनिष्ठसहोदरेण विश्वम्भरदेवेन सह नारायणपट्टणाख्ये पुरे एव स्थित्वा तत्र राज्यं कृतवान् वैमात्रेयास्त्रयो भ्रातरः तेन मन्त्रिणा सह जयपुर एव स्थिताः इति बोध्यं अयं बलरामदेवः एकोननवत्यधिकषोडश (१६८९) शताब्द्यां जातः वर्षद्वयं राज्यं कृत्वा त्रयोदशाधिकसप्तदशशततमे (१७१३) क्रिष्टाब्दे निजकनिष्ठभ्रात्रे राज्यभारं दत्त्वा लोकान्तरं गतवानिति ॥

२७३. तदिति ॥ तदन्तरे तस्य बलरामदेवस्यानन्तरं तच्चरमोद्भवः तत्पृष्ठजन्मा कनिष्ठ इति यावत् विश्वम्भरेण कृष्णेन तुल्यः विश्वम्भरवत् अत एव तस्याह्वय एवाह्वयो नाम यस्य स तथोक्तः विश्वम्भरनामेत्यर्थः अथाह्वयः 'आख्याह्वे अभिधानं च नामधेयं च नामचे'त्यमरः । प्रभुरधिपतिर्बभूव यः विश्वम्भरदेवः नदीवनोद्यानंनिकेतनेषु तत्तत्स्थानेषु प्रमदाजनै रमणीस्त्रीजनैः सह मुदा प्रीत्या सदा व्यनोदत् विनोदं चकार एतस्य षोडशशतपरिमिता विलासिन्यः स्त्रिय आसन्निति पुराविदः अयं हि स्वराजधान्यां चम्पकनगरनाम्ना एकं बृहत्पुरं निर्माय तत्रोपवनपुष्पवाटिकादिकं क्रीडावाप्यादिकं च कारयित्वा नगरनिकटवर्तिनीं झञ्झावतीनामनदीं बध्वा तज्जलधारामानीय वाप्यादिकं पूरयित्वा तत्र तत्र ताभिस्सह क्रीडाकौतुकेन कालं यापयति स्मेति च किं वदन्तो अद्यावधि तन्नद्याः सेतुबन्धस्थानं (गरियाघाट) नाम्ना प्रसिद्धमास्ते इति ॥

२७४. व्रतीति ॥ युग्मकमेतत् द्वाभ्यान्तु युग्मकं प्रोक्तमित्युक्तेः तेनास्य उत्तरश्लोकेन साकं सम्बन्धः पुरा पूर्वस्मिन् काले यः विश्वम्भरदेवः नन्दपुरे तन्नाम्नि दुर्गे प्रतिष्ठिता संस्थापिता या अम्बिका काञ्चीनगरादानीता पूर्वोक्ता कनकमयजयदुर्गामूर्तिः 'अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिके'त्यमरः

२७५. सुवर्णदौर्गप्रतिमां चतुर्भुजां यउग्रतारामपि यन्त्रविग्रहाम् ।
नवां प्रतिष्ठाप्य निजेष्टसाधनं प्रसाधयामास शवादिसाधनैः ॥

२७६. महीध्रलक्षाश्रयदेशशासको महीध्रमिश्रश्च यदक्षदर्शकः ।
प्रलब्धवान् यन्मधुपाडुशासनं प्रवृद्धनेरलनृसिंहभट्टकः ॥

तस्याः अङ्घ्र्योः पादपद्मयुगलस्य या शेषा समर्पितनिर्माल्यकुसुमादिकाशेषानिर्माल्यदानेस्यादिति हैमः तदशनपूर्वकं यन्नोजनं भक्तादि भक्षणं तस्मिन् 'व्रती नियमवान् नियमो व्रतमस्त्री'त्यमरः तस्याः दुर्गायाः प्रसादकुसुमादिभक्षणानन्तरमेवान्नभोजीत्यर्थः अतएव दिने एकस्मिन् दिवसे तदप्राप्तिवशात् तस्याः शेषायाः दुर्लभत्वप्रयुक्तत्वाद्धेतोः उपोषितः भोजनविरहितः अथ निशि रात्रौ ईप्सितस्वप्ननिदेशेन निजेष्टभूतस्वप्नलब्धदेव्याज्ञया चोदितः प्रेरितः प्रवर्तित इति यावत् अत्रेयं कथा असौ नृपः प्रतिदिनं नियोगिजनैर्नन्दपुरात् श्रीकनकदुर्गायाः प्रसादकुसुमबिल्वपत्रादिकमानयन् तत्सेवनानन्तरं भोजनं कृतवानास्ते स्म एवं गच्छति काले एकस्मिन् दिने अतिवृष्ट्यादिना दुर्गमे पथि आगन्तुमशक्यत्वेन नियोज्य पुरुषेण प्रसादकुसुमं नानीतं तेन हेतुना निराहारोऽसौ नृपः स्थितवान् तस्यामेव रात्रौ तथा शयानस्य स्वप्ने साक्षाद्भगवती दुर्गा निदिदेश किमिति ? हे राजन् प्रतिदिनमेवं निर्माल्यं नव दुर्लभं भवेत् तदर्थं मत्प्रतिमूर्तिमन्यां नव्यां प्रतिष्ठाप्य तदाराधनया स्वार्थसाधकेन भवितव्यं त्वयेति ॥

तथा स्वप्नादिष्टोऽसौ किं कृतवान् तदाह—

२७५. सुवर्णेत्यादि ॥ दुर्गाया इयं दौर्गी दौर्गीचासौ प्रतिमा चेति दौर्गप्रतिमा सुवर्णमयी दौर्गप्रतिमा सुवर्णदौर्गप्रतिमा तां किम्भूतां चतुर्भुजां चत्वारो भुजा यस्यास्तां पूर्वोक्तध्यानस्वरूपिणीमित्यर्थः तथा नवां नूतनां नवामिति उभयत्रापि योज्यं यन्त्रविग्रहां यन्त्रस्वरूपिणीं उग्रतारां एकमुग्रतारा यन्त्रमपीत्यर्थः प्रतिष्ठाप्य शिल्पिभिः कारयित्वा प्रतिष्ठा कर्मणा संस्कृत्य स्थापयित्वा शवादिसाधनैः शवप्रधानसाधनकर्मभिः तन्त्रोदितैरित्यर्थः निजेष्टसाधनं स्वाभीष्टसिद्धिं प्रसाधयामास सम्पादितवान् एतस्य सन्निधौ तदानीं कश्चन महापात्रपदवाच्यरामचन्द्रपुरोहितनामा ब्राह्मणो महान् मान्त्रिक आसीत् तेनोत्तरसाधकेन सह स्वयमयं शवसाधनादिभिः सिद्धिं गतवानिति वृद्धाः ॥

२७६. महीध्रेत्यादि ॥ यस्य राज्ञोऽक्षदर्शकः प्राड्विवाकः 'व्यवहारविधौ द्रष्टरि प्राड्विवाकाक्षदर्शका' वित्यमरः महीध्रमिश्रः तन्नामा च महीध्राणां पर्वतानां लक्षं अपरिमितपर्वता इत्यर्थः शतसहस्रलक्षादयः शब्दा असङ्ख्या तत्स्वरूपार्थबोधकाः सहस्रशीर्षापुरुष' इत्यादौ तथात्वात् तदाश्रयभूतस्य देशस्यास्य नन्दपुरराष्ट्रस्य शासकः शासिता आसीदित्यर्थः अमुमेव राज्यव्यवहारद्रष्टारं स्वप्रतिनिधितया राज्यशासने संस्थाप्य स्वयञ्च राजा देव्याराधनासक्तस्तस्याविल्यवगन्तव्यं अथ यत् यस्मात् राज्ञस्सकाशात् प्रवृद्धो वयसा ज्ञानकर्मादिना चाधिकः नेरलो नेरलपदोपाह्वः नृसिंहभट्टकः तन्नामा कश्चिदान्ध्रब्राह्मण इत्यर्थः स्वार्थे कन् मधुपाडुशासनं मधुपाडुनामकमग्रहारं प्रलब्धवान् प्रतिग्रहेण प्राप कलिङ्गदेशपरिसरे गजपतिनगरस्य समीपे अनेन राज्ञा प्रदत्तो मधुपाडुनामग्रामोऽद्यावधि नृसिंहभट्टवंश्यैः शासनरूपेण भुज्यते अस्य राज्ञो मुद्राङ्कितशासनपत्रमपि तेषां निकटे वर्तत इति ततोऽवगन्तव्यमेतदिति ॥

२७७. ममायमित्येव परत्र यत्पुरो मिथोविवादे पथि दिव्ययोषिताम् ।
स्वकीययोषाः शतशोऽग्निवेशनैः समेत्य सत्यो जितवत्य एव ताः ॥

२७८. ततस्तदीयावरजो विमातृजो रराज लालादिककृष्णसंज्ञकः ।
अचीकरच्चीपुरपल्लिमध्यगे सरोवरं यो गुडिवाडशासने ॥

२७९. स सर्वराज्यं सहजे समुत्सृजन् स विक्रमे विक्रमनाम्नि मध्यमे ।
मुकुन्ददेवेन समं कनीयसा ननन्द सिंहाख्यपुरे नरेश्वरः ॥

---

२७७ ममेति ॥ परत्र परलोके पथि मार्गे यत्पुरः यस्य स्वर्यातस्य विश्वम्भरदेवस्य पुरोऽग्रभागे ममायमित्येव अयं राजा ममैव मदुपभोगार्ह एवेत्येवं रूपेणेत्यर्थः दिव्ययोषितां स्वर्गाङ्गनानां ऊर्वश्यादीना-मित्यर्थः मिथः परस्परेण विवादे वाक्कलहे सति सत्यः पतिव्रताः स्वकीय योषाः स्वस्य राज्ञः सम्बन्धिन्यो नार्यः स्वकीयेति गहादित्वाच्छः स्वस्य चेत्युक्तेः तुक् शतशः शतशतसङ्ख्यका इत्यर्थः सङ्ख्यैकवचनाच्च वीप्सायामिति शस् तासामनेकासां सत्वादिति भावः । अग्निवेशनैः अग्निप्रवेशनक्रियाभिः सहगमनविधि-नेत्यर्थः समेत्य परलोकगतं तं निजभर्तारं सङ्गत्य ताः दिव्ययोषितः जितवत्यएव केवलं विजयन्ते स्म नानेनास्मत्पतिना यूयं विलसितुमर्हा इति पराभवन्ति स्मेत्यर्थः । अस्य राज्ञः स्वर्गमनसमये तदीयानां स्त्रीणामनेकासामपि सहगमनान्नारायणपट्टणाख्ये पुरेऽद्यावधि तत्स्थानं सतोगर्तनाम्ना प्रसिद्धमस्तीति ज्ञेयं अयं हि द्विनवत्यधिकषोडश (१६९२) शताब्द्यामवतीर्णः द्विपञ्चाशदधिकसप्तदश (१७५२) शताब्द्यां स्वर्गं गत इति ॥

२७८ तत इति ॥ तस्यानन्तरं तदीयावरजस्तत्सम्बन्धी कनिष्ठः विमातृजो वैमात्रेयभ्राता लालादिककृष्णसंज्ञकः लालाकृष्णदेवनामेत्यर्थः रराज राजा बभूवेत्यर्थः यः लालाकृष्णदेवः चीपुरपल्लिमध्यगे चीपुरपल्लिनामकदेशविशेषान्तर्गते गुडिवाडशासने गुडिवाडनामा कश्चिद्ग्रामः तदाख्याग्रहारे सरोवरमेकं जलाशयं अचीकरत् कारयामास एकदा अयं राजा श्रीजगन्नाथदर्शनार्थं पुरुषोत्तमक्षेत्रयात्रां चकार ततः प्रत्यागमनसमये विजयनगरराज्यान्तर्गत चीपुरपल्लिनामक शाखानगरान्तरे गुडिवाडाशासनीया ब्राह्मणाः समागत्य मार्गे एनं राजानं बह्वाशिषा सम्मान्य जगदुः हे महाराज ? भवदीय पूर्वपुरुषप्रदत्तोऽयं शासनः अत्राष्टौ तैलिङ्गब्राह्मणाः अष्टौ उत्कलब्राह्मणाश्चेति षोडशब्राह्मणगृहाणि सन्ति शिवालयोपवनादयश्च सम्पन्नास्सन्ति परं त्वत्र जलाशयाभावः तत्सम्पादनेनात्र श्रीमता निर्जीवनाया निजपूर्वार्जितकीर्त्या जीवनप्रदेन भवितव्यमिति तच्छ्रुत्वायं तत्र जलाशयमेकं खनयाञ्चकार यस्त्वद्यावधि लालाचेरुवुनाम्ना प्रसिद्धमास्ते अयं लालाकृष्णदेवः कृष्णरायपुरादि अष्टादशशासनानि बोब्बिलिसमीपे स्थापितवान् इत्यपि बोध्यम् ॥

२७९. स इति ॥ सलालाकृष्णदेवः विक्रमेण पराक्रमेण सहितः सविक्रमस्तस्मिन् अतएव विक्रम इति नाम यस्य तस्मिन् मध्यमे सहजे मध्यमसहोदरे तमनादृत्येत्यर्थः षष्ठीचानादरे इति पक्षे सप्तमी अनादरकारणं तयोरनैकमत्यं सर्वराज्यं निखिलमपि राजकर्म समुत्सृजन् परित्यजन् कनीयसा कनिष्ठभ्राता मुकुन्ददेवेन तदाख्येन समं सह सिंहाख्यपुरे सिंहपुरनाम्नि नगरे नरेश्वरः तत्र गत्वा नृपतिस्सन् ननन्द

आनन्दितवान् अथ लालाकृष्णदेवस्य विक्रमदेवस्य च भ्रात्रोरुभयोरप्यनैकमत्यकारणं मूले ग्रन्थविस्तर-भयादनिबद्धमपि प्रसङ्गसङ्गत्या यत्किञ्चिद्विरुद्धमतखण्डनोपयोगितया चात्र तत्सर्वं लिख्यते किमिदं तत्कारणमिति चेत् द्वितीयभ्रातुर्बलरामदेवस्य नारायणपट्टणापुरगमनप्रयोजकमेव तदिति गृहाण। विजयन-गराधिपतेर्ज्येष्ठभ्राता सीतारामराजः रामचन्द्रदेवस्य राज्ये साचिव्यं प्राप्त इति पूर्वमेवाभिहितं स्वर्याते च तस्मिन् रामचन्द्रे स च सचिवो जयपुरे कियत्कालं स्थित्वा राज्ञा बलरामदेवेन निष्कासितो विजयनगरं गत्वा तदवमानपीडितो जयपुरराज्यक्षयं चिन्तयन् तत्रैव तस्थौ तस्मिन्नवसरे विजयनगरसमीपवर्तिनः कियन्तो देशान् जयपुरमहाराज्यान्तर्भुक्तानपि तान् सामाद्युपायैः विजयनगरान्तर्गत तया स्वायत्ततां नीतवान् तथा जयपुरीयप्रधानसामन्ता अपि कलहंडि, नुवागड, खिडि आलयनामकदेशाधिपतयस्तदीय भेदोपायेन महाराष्ट्रीयानां साहाय्यं प्राप्य जयपुरानधीनतया स्वायत्ततां गताः एतन्मध्ये बलरामदेवः विश्वम्भरदेवश्चेति द्वौ राजानौ गतौ अथ लालाकृष्णदेवस्य राज्यसमयेऽपि स च सीतारामराजः भ्रात्रोरपि लालाकृष्णदेव विक्रमदेवयोरुपायेन भेदं जनयित्वा कौटिल्येन पुनर्जयपुरे साचिव्यं प्राप्य जयपुरान्तर्गता-ननेकानपि देशान् विजयनगराश्रिततया आक्रमितवान् ननु कथं सोदरयोस्तयोर्भेदो जात इति चेदत्रेयं कथा-कदाचित्द्राजा लालाकृष्णदेवः कस्मिंश्चित्कार्ये साहाय्यं ददता पारलाखेमडी राजकीयपुरुषेण नारायण-पट्टनायकेन कृतकार्यः तस्मै प्रत्युपकाराय सारावडिनाम ग्रामं ओलवपदरमुठानामकप्रदेशं च बहुमानत्वेन प्रादात् स्वप्रेरित जनार्जितमिति तदुभयं ग्रामादिकं पारळानरपतिस्तु स्वत्वेन तस्मादपहृतवान् तेन हेतुना लालाकृष्णदेवेनावमानितश्च सपारळाधिपः पुनर्जयपुरीयराजकुटुम्बान्तरोत्पन्नं कञ्चित् आडङ्गांकि गोपीनाथ देवनामानं सहायीभूय तेन च गुणपुरप्रदेशं सकलं स्वायत्ततया ग्राहयित्वा तस्मात् स्वयमपि नुल्कुकाजो-ड्डुमुठानामकप्रदेशं लिखितपूर्वं जगृहे तदानीं जयपुरराज्यान्तर्गत गुणपुरप्रदेशेऽधिकृत आडङ्गकि गोपिनाथदेवः कुरुपामुदेशस्थित शिवरामराजस्य पितृष्वसुर्भर्तारं शाहमार्ग्यं गुमामुठानामकप्रदेशप्रदानेन तत्राधिकृतं प्रबोधयामास एवं निगूढोपायैः स च क्रूरकर्मा सीतारामराजः जयपुरराष्ट्रविप्लवं जनयित्वा शिखाकोल् स्थित नवाबस्यादेशं गृहीत्वा जयपुरमागत्य नेदं राज्यशासनं तव समीचीनमिति भ्रातृणा विक्रमदेवेन राज्ञो लालाकृष्णदेवस्य स्थानान्तरं कारयित्वा राज्यधुरं वहतो विक्रमस्य पुनस्साचिव्यं स्वीचकार इति ननु कथमनेन सीतारामराजेनैकेनापि एतादृशमनन्यसाधारणं कर्मसाधितमिति चेत् महा-यप्राबल्यादेवेत्यवधार्यतां तथा च चिरात्प्रभृति एतत्प्रदेशस्था राजानः सर्वेऽपि हैदराबादनवाबाधीनतया स्थिताः तत्र नन्दपुराधिपतय एव मुख्या आसन् नन्दपुराधिपतयस्तु पुरुषानुक्रमेण तेभ्यः स्वसामन्तभूतेभ्यो राजभ्यः सकाशात् स्वत्वेन करानादाय स्वयं च हैदराबादनवाबगोचरे प्रतिवर्षं चतुर्विंशतिसहस्रपरिमित रूपकाणि कररूपेण ददति स्म नवाबैरपि एतत्करसङ्ग्रहणार्थं फौजदारपदेनाधिकारिणो नियोजिता आसन् अथ एतत्पदभ्रातृ राज्यसमये शिकाकोलिनाम्निनगरे जाफ्रलि खांनामा कश्चिद्यवनः नवाबेन फौजदारपदे नियोजित आसीत् स च फौजदारः स्वबाहुवीर्यात् क्रमेण एतत्परिसरस्थितान् कियतो देशान् स्ववसे कृत्वा हैदराबादनवाब मवमत्य स्वयं नवाबपदेन प्रख्यायते स्म तदानीं सीतारामराजस्तु जयपुरात्तिरस्कृतो गत्वा तेन जाफ्रलिखाँनवाबेनसाकं प्रीतिमुदपादयत् एवञ्च त्रिपञ्चाशदधिकसप्तदशशततमे (१७५३) क्रिष्टाब्दे तदानीन्तनो हैदराबादनवाबः सलाबरजङ्गनामा जाफ्रलिखाख्यस्य दुर्वीनीततां ज्ञात्वा एतद्देशीय-राजकरसाधनार्थं मौनसेर बुसिनामानमेकं प्राञ्चिदेशीयमाहेबं प्रेरयति स्म तस्य यथैतस्मिन् मण्डले प्रवेशोनस्यात् यथा च तस्मै नै ते राजानः करमर्पयेयुस्तदर्थमुपायविधानेन जाफ्रलिखाख्येनापि तदानीन्तन

विजयनगराधिपतिं विजयरामराजं सहायीकृत्य तत्प्रमोदनार्थं तस्मै मानेसुल्तानइत्येकं पदं जयपुरादिष्व-प्यधीश्वरत्वज्ञापककपटलेखमेकञ्च हैदराबादनवाबप्रदत्तरूपेण दत्तं न तु वास्तविकं तत् हैदराबादनवाब प्रदत्तं यतस्तत्र तस्य स्वाक्षरादिकं किमपि नास्ति एतत्सर्वं आंग्लपण्डितक्यारमेकल कृतमानयेलनामकग्रन्थे (२८२) पृष्ठे लिखितमस्ति तत्समयेप्यसौ कृतघ्नः सीतारामराजः शिखाकोलिनवाबस्य जाफ्रलिखाख्यस्य बहूपकारकत्वेनाधिकप्रीतिमुत्पाद्य तत्साहाय्येनैव जयपुरानन्तरराजमण्डलं स्ववशीकृत्वा अनेकानपि देशान् विजयनगरविषये सिश्रयित्वा जयपुरस्यापि तदधीनत्वमिति प्रख्यापितवान् ननु विजयनगराधिपै-र्मुद्रिते स्वकीयवंशावलिपुस्तके पूर्वं जयपुरस्य समग्रस्यापि तदधीनत्वमेवासीदिति लिखितमस्तीति चेत् तेषामाहोपुरुषिकामात्रं तदिति विद्धि कियन्तो जयपुरानन्तरदेशा एव तदानीं तैः स्वायत्तीकृताः न तु जयपुरमपि परञ्च निजकृतघ्नतामेव ते प्रदर्शितवन्तः यतो बेजवाडानामकदेशात् स्थानभ्रष्टा अशरणतया समागत्य जयपुरे शरणं प्राप्य कुमुलिगण्डुमुख्यप्रदेशेषु प्रथमतो निजाधिपत्यं सम्पाद्य क्रमेण जयपुरा-न्तर्भुक्तानपि देशानाक्रमितवन्तः कुमुलिकादिकं यथा च तैः प्राप्तं साङ्ग्वलसाभूपकृततैलिङ्गहिष्टरिनामक-ग्रन्थादिप्रमाणतया पूर्वमेवाभिहितं तदेतत्पूर्वमपि नन्दपुरादागत्य जयपुरे राजधानीं स्थापितवतो वीर-विक्रमदेवस्य एतत्प्रदेशीय निखिलराजमण्डल शासकत्वेन आजममहाराजेत्यादि महद्भिरुर्दोपितं ताम्रपत्रं स्वमुद्राङ्कितं कृत्वा यथा च हैदराबादनवाबेनास्मै प्रदत्तं तदपि पूर्वमेवाभिहितं ततश्च विजयरामराजेन हैदराबादनवाबसकाशात् तथा लेखादिकं प्राप्तमिति तुच्छं एवञ्च चोपुरपल्ली गजपतिनगरादिषु गुडिवाड मधुपाडुनामादयो अनेकेऽपि शासनाः नन्दपुरसिंहासनमलङ्कुर्वद्भिश्चिरन्तनैर्नृपतिभिर्ब्राह्मणेभ्यो दत्ता इति तत्तद्दानपत्रेषूपलम्भात् तत्तद्देशेष्वपि एतेषामाधिपत्यं पूर्वमेवासीदिति निस्संशयतया प्रतीयते नन्वेवं चेत्तर्हि आधुनिकैराग्लपण्डितैर्हिष्टरिनामकग्रन्थेषु विजयनगराधिपतेरेतत्प्रदेशेषु मुख्यत्वं कथं प्रतिपादित-मिति चेत् अनाप्तपैशुन्यवचनमात्रावलम्बनेन यथार्थानवबोधादित्येव निबोध तथा हि यदा ब्रिटिषु गवर्न-मेन्टाधीनतया एतद्भूमण्डलमाक्रमितं तदानीं तैः प्रथमतो विशाखपट्टणाख्ये पुरे चीफू कमिषन् नाम्ना सभास्थापिता तत्रापि सभायां तेन सीतारामराजेन स्वगौरवसम्पादनार्थं तदधिकारिभिः सम्मील्य जय-पुरीयसामन्तराजानां कियतामपि स्वायत्तीकरणप्रकारं जयपुरस्य राज्ञो विक्रमस्य महाराष्ट्रदेशं प्रति पलायनं चेत्यादि रूपं प्रकटीकृतमिति कार्मेकल् मानीयेलग्रन्थे पञ्चाशीत्यधिकद्विशततम (२८५) पृष्ठमारभ्य लिखित-मस्ति यथा च विक्रमदेवस्य महाराष्ट्रान्तर्गत बस्तरराजधानीं प्रति गमनं तदग्रे (२८२) तमे श्लोके स्फुटी भविष्यति तथा च तस्मान्मिथ्यावादिनः श्रुत्वा यथा श्रुतमेव विजयनगरप्राशस्त्यं नवीनैर्हिष्टरिकारिभिः कैश्चिल्लिखितं न तु यथार्थपरिशीलनेन तेन च क्यारमेकलाख्येन स्वकीयेमानीयेलग्रन्थे जम्बुनगरान्नन्द-पुरमागतस्य विनायकदेवस्य चन्द्रवंशीयत्वं प्रतिपादितं किन्तु गोल्डन् बुक् प्रभृतिष्वनेकेष्वपि हिष्टरि ग्रन्थेषु सूर्यवंशीयत्वमेवैतेषां प्रतिपादनात् एतस्यैव यथार्थत्वात् तल्लिखितं सर्वं न यथार्थमिति प्रतिपत्तव्यं यदि कुत्रचित्तल्लेखं प्रमाणीकृत्य जयपुरात् विजयनगरस्यैव करग्राहितया मूलनगरता स्वीक्रियते कथं तर्हि (१६५२) द्विपञ्चाशदधिकषोडशशततमे क्रिष्टाब्दे गोलुगोण्डास्थित फौजदारसेरमहम्मदखानगोचरे एतत्परिसरस्थित समस्तसामन्ताधीश्वरत्वेन तत्तद्देशेष्वधिकृतत्वेन च जयपुराधीश्वरैः (२४०००) चतु-र्विंशतिसहस्रपरिमितः करो दत्त आसीदिति तस्मिन्नेव मानीयेलग्रन्थे चतुरशीत्यधिकद्विशततमेपत्रे (२८४) लिखितमस्ति एतस्मादपि पूर्वमेव जयपुराधीश्वरैः स्वातन्त्र्येण स्थितमिति मन्तव्यं ततश्च अन्यान्यैरपि हिष्टरिकारिभिः जयपुरादिषु पुरा विजयनगरस्य स्वातन्त्र्यमासीदिति तद्राजसम्बन्धिन एव कथयन्तीति

२८०. इहास्य विश्वम्भरनाम पञ्चमात्मजो मुकुन्दाख्यमविन्दताङ्गजम् ।
स कृष्णदेवं सुषुवे क्रमाच्च ते विसृज्य भूमिं दिवमीयुरायतौ ॥

२८१. अथाक्रमन् गां मथितद्विषत्पुरः स विक्रमो राजकळा समुज्ज्वलः ।
तृतीयया शास्त्रदृशात्मनो वशं प्रणीतकामोऽलसदैश्वरश्रिया ॥

लिखितं न तु तदेव सत्यमिति तस्मात् जयपुरनरपतयः कदापि विजयनगरनृपानधीना एवेत्यलं बहुप्रसक्तानुप्रसक्तेन इति ॥

लालाकृष्णदेवः सिंहपुरे रराजेत्युक्तं तत्र तद्वंशावधिं प्रस्तावयति ॥

२८०. इहेति ॥ इह कल्याणाख्यसिंहपुरे अस्य लालाकृष्णदेवस्य विश्वम्भरनाम पञ्चमात्मजः विश्वम्भरनामा पञ्चमपुत्रः मुकुन्दाख्यमङ्गजं पुत्रमविन्दत लेभे स मुकुन्ददेवः कृष्णदेवं तदाख्यं पुत्रं सुषुवे जनयामास ते विश्वम्भरादयः क्रमात् पुरुषानुक्रमेण भूमिं सिंहपुरावनीं विसृज्य परिपालनेन तद्भोगं कृत्वा आयतौ उत्तरकाले 'उत्तरः काल आयति'रित्यमरः दिवं स्वर्गं ईयुः जग्मुः इणगताविल्यस्माल्लिट् लालाकृष्णदेवस्य तावत् पञ्चपुत्राः १ वल्लभनारायणदेवः २ सुन्दरनारायणः ३ लक्ष्मीनारायणः ४ विश्वनाथः ५ विश्वम्भरदेवश्चेति तत्र प्रथमो निस्सन्ततिर्मृतः द्वितीयस्य विनायकदेवनाम्ना एकः पुत्रो जातः स तु बाल्यावस्थायामेव मृतः तृतीय चतुर्थावपि निस्सन्तानौ पञ्चमस्य मुकुन्ददेवनामा पुत्र आसीत् तत्पुत्रः कृष्णदेवः ततस्तद्वंशविश्रान्तिः लालाकृष्णदेवस्तु पञ्चाधिकसप्तशतोत्तरसहस्रपरिमिते (१७०५) क्रिष्टाब्दे समुत्पन्नः द्विपञ्चाशदधिकसप्तदश (१७५२) शताब्द्यां निजभ्रातुस्सकाशाद्राज्यं लब्ध्वा वर्षपट्टकं नारायणपुरपट्टणाख्ये पुरे स्थित्वा ततः कनिष्ठभ्राता मुकुन्ददेवेन सह सिंहपुरं जगाम इति ॥

लालाकृष्णदेवस्य सिंहपुरगमनानन्तरं तन्मध्यमभ्राता विक्रमदेवेन नारयणपट्टणे एव ऐश्वर्यश्रीर्लब्धेत्याह—

२८१. अथेति ॥ अथानन्तरं सः मध्यमभ्राता विक्रमः ऐश्वर्यश्रिया अलसदिति सम्बन्धः किम्भूतः सः गां पृथिवीं नन्दपुरादिकामाक्रमन् स्वायत्तीकुर्वन् अन्यत्र वृषभमारुहन् 'गौर्णादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभाव'पीति केशवः मथितानि, मर्दितानि द्विषतां शत्रूणां पुराणि नगराणि येन सः 'अगारे नगरे पुर'मित्यमरः अन्यत्र मथितः शत्रुभूतत्रिपुरासुरो येन सः राजकळाभिः नृपतिचिह्नैः अन्यत्र चन्द्रकळया समुज्ज्वलः जाज्वल्यमानः 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपता'विति मेदिनी तृतीयया प्रकृतलोचनद्वयभिन्नत्वेन तृतीयरूपया शास्त्रमेव दृक् लोचनं तया शास्त्रैः पश्यन्ति पण्डिता इत्युक्तेः नीतिशास्त्रादिज्ञानेनेत्यर्थः आत्मनो वशं स्वायत्ततां प्रणीताः प्रापिता अभिलाषा मनोरथा येन सः गमकत्वात्समासः अन्यत्र वह्न्यात्मकतृतीयनेत्रेण स्वात्मलीनीकृतकन्दर्पः अतएव ऐश्वर्यश्रिया राजलक्ष्म्या अथ च ईश्वरस्य शिवस्येयमैश्वरी सा चासौ श्रीश्च तया अलसत् लसश्लेषण क्रीडनयोरित्यस्माल्लङ् ॥

२८२. कलिङ्गभूपाग्रजमेव दाम्भिकं विमोच्य साचिव्यपदान्निजस्य यः ।
गुणैकपात्रं विदधेऽत्र पात्रसत्पदं जगन्नाथमतीव मन्त्रिणम् ॥

२८३. विहाय नारायणपत्तनं पुनर्जयाख्यपुर्यां ज्वलितो महौजसा ।
सद्हूणमुख्येषु सपक्षतां वहन् स्वयं महाराष्ट्रबलानि चादहत् ॥

---

२८२. कलिङ्गेति ॥ यः विक्रमदेवः दाम्भिकं दम्भेन कपटेन चरतीति दाम्भिकस्तं चरतीति ठक् कपटाचारिणमित्यर्थः कलिङ्गभूपस्य तदानीं स्थितस्य कलिङ्गदेशाधिपतेर्विजयरामराजस्याग्रजं ज्येष्ठभ्रातरं सीतारामराजमित्यर्थः निजस्यात्मनः साचिव्यपदात् सचिवस्य भावः साचिव्यं ष्यञ् प्रत्ययः तत्पदात् तत्स्थानात् विमोच्य स्वसचिवकर्मणो निष्कास्येत्यर्थः गुणैकपात्रं मन्त्री भक्तः शुचिः शूरोऽनुक्तो बुद्धिमान् क्षमी आन्वीक्षिक्यादि कुशलः परिच्छेदी मृदेशजइत्यादि लक्षणोक्तनिखिलगुणनिधानं अतएव अतीवातिशयेन मन्त्रयत इति मन्त्री मन्त्रजातकर्तव्यनिश्चयकर्ता नन्दिग्रहीत्यादिना णिनिः मन्त्रोऽस्यास्तीति इन् वा मन्त्रो गुप्तवादः पात्र इति सत् शोभनं पदं उपाह्वयो यस्य तं जगन्नाथं तन्नामानं जगन्नाथपात्रनामानमित्यर्थः अत्र निजसाचिव्यपदे विदधे निहितवान् निजसचिवं कृतवानित्यर्थः अत्रेदं बोध्यं लालाकृष्णदेवस्य सिंहपुरगमनानन्तरं नारायणपुरपट्टणे स्थित्वा राज्यधुरं वहतो विक्रमदेवस्य साचिव्यमवलम्बमानः सीतारामराजः कपटेन तत्तत्सामन्तान् स्वायत्तीकृत्य माडगुलु काशीपुरपालेमुवेलग्रामु अन्डासालरु पांसपेन्ट चेमुडु साङ्गवलसकुरुपां मेरङ्गिनामकान् देशान् विजयनगराधिपतेर्विजयरामराजस्याधीनतां नीतवान् तदसहमानो विक्रमदेवः तं पुनः स्वदेशान्निष्कास्य निखिलमन्त्रिगुणोपेतं जगन्नाथपात्रनामानं स्वसाचिव्ये नियोजयामास असौ सचिवः स्वबुद्धिबलात् तदानीं विद्यमानस्य लाटन् छीफ् कमिषन् नाम्ना प्रसिद्धस्य नवाबस्य सम्बन्धिनं मोतीशकखाननामानं कञ्चिदध्यक्षं सहायीकृत्य तत्साहाय्यबलात् स्वयं सामदानादिनीतिपरिशीलनेन एवमेव विधातव्यमिति निश्चित्य रु—१३२००० द्वात्रिंशत्सहस्राधिकलक्षपरिमितरौप्यमुद्राव्ययैः सीतारामराजापहृत पूर्वोक्तदेशान् सांगवलसा पालेमुवेलग्राम एतत्त्रितयभिन्नानन्यान्समग्रानपि जयपुराधीनतामानीतवान् अयमेव प्रवरः सातोडा जगन्नाथबेहरामहापात्रनाम्नापि व्यवह्रियते स्म इति ॥

२८३. विहायेति ॥ स विक्रमदेवः नारायणपत्तनं तदाख्यं पुरं विहाय जयाख्यपुर्यां जयपुरे इत्यर्थः पुनः महौजसा प्रतापवैभवेन ज्वलितः प्रदीप्तः तथा हूणानां म्लेच्छजातिविशेषाणां मुख्येषु प्रधानेषु मध्ये स्वयं सपक्षतां वहन् सहायीभवन्नित्यर्थः महाराष्ट्रबलानि महाराष्ट्रदेशीयसैन्यानि अदहत् बाणाग्निना भस्मीचकारेत्यर्थः चकारोऽत्र अनुक्तसमुच्चायकः तेन प्राच्चिदेशीयसैन्यानपि अदहदिति बोध्यं तथा चायं नारायणपत्तनादागमनसमये मार्गे थुआमूलपट्टराजस्यानुकूल्यात् कलाहण्डिनरपतेरुदयसिंहस्य पौत्रीं ललितामणिदेवी नाम्नीं सुन्दरीशिरोमणिमुद्वाहेन द्वितीयपत्नीं लब्ध्वा तत्प्रत्युपकाराय निजसामन्तायापि थुआमूलनरपतये पट्टराजाय काशीपुर । महुलपट्टणा । माढविसी । लेल्लिगुमा । चन्द्रगिरिनामकान् पञ्चदेशान् वार्षिक स्वकीय शतत्रयपरिमित रौप्यमुद्रारूपकरनिर्धारणेन दत्वा मन्त्रिणा जगन्नाथपात्रेण सह जयपुरराजधानीमागत्य अवस्थान् कांश्चिद्दुर्वृत्तान् प्रसाध्य स्वराज्यं प्रवर्तयामास तदैकस्मिन्समये महाराष्ट्रप्रतिद्वन्द्वितया दक्षिणमार्गे समागतान् प्राच्चिदेशीयान् स्वराष्ट्रप्रान्ते मलकनगिरि नामकप्रदेशे

२८४. निजानुयातस्य विराज्यसम्पदो विदर्भराजस्य च याजको भवन् ।
प्रकल्पयामास रणाध्वरे पशुं द्विषन्तमस्याजगरं जघन्यजम् ॥

२८५. तदन्तरे तं दरियारसंज्ञकं नृपासनेऽस्मिन्नभिषेचयन् ततः ।
सकोटपार्यादिकदुर्गपञ्चकं सुलेखपूर्वं समवापदक्षिणाम् ॥

---

उपद्रावकान् स्वतेजसा विद्राव्य तान् गोदावरीनद्या दक्षिणतीरे प्रस्थापयामास समयान्तरे च व्रिटिपुगवर्नमेण्ट् सम्बन्धिजनैः सार्कं युयुत्सया जयपुरपर्यन्तभुविसमागतान् महाराष्ट्रीयानपि गवर्नमेण्ट् सपक्षतया स्वबलैर्विदलय्य तान् अमरकोटप्रदेशाद्बहिर्निस्सारयामासेत्यादि बोध्यं ततः प्रभृत्येवास्मिन् दक्षिणप्रदेशे क्रमशः इंराजराज्यप्रवृत्तिः तदानीमयं विक्रमदेवः व्रिटिशानामद्भुतशौर्यं ज्ञात्वा स्वस्य हैदराबादाश्रिततां परित्यज्य रू—३०००० त्रिंशत्सहस्रकरनिर्धारणेन व्रिटिपुगवर्नमेण्टाधीनतां स्वीचकार इति ॥

२८४. निजेत्यादि ॥ स च विक्रमदेवः विगता राज्यसम्पत् यस्य तस्य कनिष्ठभ्रात्रापहृतराज्यसम्पत्तेः अतएव निजानुयातस्य स्वकीयानुयायित्वं प्राप्तस्य स्वसेविन इति यावत् विदर्भाणां जनपदानां राजा विदर्भराजः तस्य बस्तराधिपतेर्दरियारदेवस्येत्यर्थः विदर्भमण्डलमेवेदानीं बस्तरदेशनाम्ना व्यवह्रियते इति जनश्रुतिः रणाध्वरे युद्धयज्ञे याजयतीति याजकः स्वयमृत्विक् भवन् वृताः कुर्वन्ति ये यज्ञमृत्विजो याजकाश्चत इति कात्यः तथा च तेन वृतो रणयज्ञं कुर्वन्नित्यर्थः अस्य विदर्भराजस्य द्वेष्टीति द्विषन् तं ज्येष्ठभ्रातृविद्रोहिणमित्यर्थः जघन्यजं कनिष्ठभ्रातरमित्यर्थः 'जघन्यजे स्युः कनिष्ठयवीयोवरजानुजा' इत्यमरः अजगरं अजगरदेवनामानं पशुं प्रकल्पयामास अध्वरे पशुमिव रणे तं निजघानेत्यर्थः अवेदमवधेयं । तदानीं किल बस्तराख्ये जनपदे दरियारदेवनामा राजा अस्ति स्म तस्याप्येकः कनिष्ठभ्राता अजगरदेवनामा आसीत् कदाचित् कुतश्चित्कारणात्तयोर्भ्रात्रोर्वैमनस्यं जातं तदा कनिष्ठोऽजगरदेवः स्वबुद्ध्या प्रकृतिप्रजावर्गं स्वायत्तीकृत्य बलात्स्वयं राजसिंहासनारूढो ज्येष्ठभ्रातरमपि दरियारदेवमवमेने तदवमानपीडितो दरियारदेवः जयपुरमागत्य विक्रमदेवं स्वराज्यप्राप्तयेऽनुसृतवान् एवं गच्छति काले तदनुकूलोऽसौ विक्रमदेवः प्रबलबलैः सह बस्तरदेशं गत्वा बहुसैन्यैः सुसन्नद्धमपि तमजगरदेवं युद्धे जितवान् तदानीमस्य विक्रमस्य सैन्ये युद्धपारङ्गमा दन्तिनः पञ्चदश (१५) सप्तत्युत्तरशतपरिमिता अश्वाः (१७०) सेनापतयः पञ्चाशत् (५०) शस्त्रास्त्रधारिणः पदातयो द्वादशसहस्रम् (१२०००) शतघ्न्यः (तोप इति प्रसिद्धाः) द्वादश (१२) एवमनेकैः शस्त्रास्त्रैः सह सम्भूय विंशति सहस्रपरिमिताः (२००००) जैत्रयात्रिणो बभूवुरिति ॥

ननु अजगरदेवस्य विजयानन्तरं किं कृतवान् तदाह ॥

२८५. तदन्तर इति ॥ स विक्रमदेवः तदन्तरे रणाध्वरेऽजगरदेवस्य पशुप्रकल्पनानन्तरं अस्मिन् बस्तरदेशे जगदलपुराख्य राजधान्यामित्यर्थः नृपासने राजसिंहासने दरियारसंज्ञकं तदाख्यं तं ज्येष्ठभ्रातरं अभिषेचयन् पुनः स्वहस्तेन पट्टबन्धनादिना मूर्धाभिषिक्तं कुर्वन् यज्ञशेषेऽप्यभिषेकं कुर्वन्तीति बोध्यं ततः अभिषेकानन्तरं कोटपारीनाम जनपदविशेषः तदादिकं दुर्गपञ्चकं पञ्चनगरं लिख्यन्तेऽस्मिन्निति लेखः शोभनो लेखः सुलेखः तत्पूर्वं लिखितदानपत्रपूर्वकमेवेत्यर्थः दक्षिणां समवाप

२८६. स्वकीयवंशोन्नतिमाश्रिताः सुतास्त्रयोऽस्य जाता जगति त्रिमूर्तिवत् ।
प्रजासमुत्पादन साधुपालनद्विषत्कुलोन्मूलनकर्मसूद्यताः ॥

२८७. स तेषु रामान्वितचन्द्रनामवानभून्नरेन्द्रः स्वपितुर्मते स्थितः ।
जगौ जगन्नाथसुनाममध्यमो यदङ्गजन्मा भुवि कृष्णसंज्ञकः ॥

रणयज्ञीयदक्षिणात्वेन तत्पात्रवानित्यर्थः अत्रेदमनुसन्धेयं जयपुरस्य पश्चिमोत्तरभागे कोटपाडि चुरुचुण्डा अमरकोट पोडागड रायगडनाम्ना पञ्चदेशाः सन्ति ते तु देशाः पूर्वं जयपुरान्तरभुक्ततया आसन् अथ बस्तरदेशे तदीय नृपतिभिश्चिरन्तनैः कदाचित् स्वायत्तीकृत्य मिश्रिताः स्थिताः यदा च परिहृतराज्यभारो- दरियारदेवो जयपुरे शरणं जगाम तदाऽयं विक्रमदेवः विशाखपट्टणास्थित तदानीन्तन चीफ्कंसेलजान् सन् नाम्नः कंपानिसम्बन्धिनोऽधिकारिणः सकाशादनुमतिं स्वयमानीय तथा बस्तरादिदेशाधिकृतस्य बिम्बाजिनाम्नो नवाबस्य सकाशात् त्रियम्बक अहोरानामक तद्राजपुरुषद्वारा च तदनुमतिमानीय उभयोरानुमत्येन स्वयं बस्तरदेशं गत्वा अजगरदेवं विजित्य दरियारदेवं जगदल् पुराख्येदुर्गे पट्टाभिषिक्तं कृतवान् तदायमस्मै पूर्वोक्तदेशपञ्चकं लिखितपूर्वं दत्तवान् एवञ्च जयपुराद्यः कोऽपि राजपुत्रादिर्यदा कदा वा बस्तरराजधानीं गमिष्यति चेत् तस्य पुनर्जयपुरे सन्धानं वा बस्तरे समुचितान्नवस्त्रादि- वृत्तिदानमित्यादिकं सर्वं गुरुतरशपथपूर्वकं तस्मिन्नेव लेखे लिखितमस्ति तच्च लेखपत्रं दाक्षिणात्यनिय- मानुसारेण विलम्बीनामसंवत्सरे सौरे मीनमासे २८ दिने अष्टाविंशतिदिवसे चान्द्रमाने चैत्रशुक्ल- दशम्यां सोमवासरे (१७७८) अष्टसप्तत्यधिकसप्तदशपरिमिते आंग्लाब्दे समुत्पन्नं एतदजानानोमानोयेल् हिष्टरिकर्ता विक्रमस्य स्वात्मगोपनार्थं महाराष्ट्रदेशगमनं (१७७७) क्रिष्टाब्दे बस्तराधिपतेर्दरियारदेवस्य सकाशादुक्तलेखपत्रादिप्राप्तिः विजयनगराधिपतेः जयपुरादिष्वधिकृतता (१७१२) द्वादशाधिकसप्तदश- शताब्द्यां ललितामणिदेव्या साकं विक्रमस्य विवाहः इत्यादिकं यथा श्रुतमेव लिखितवान् ललितामणिदेव्या विवाहस्तु (१७६२) द्विषष्ट्यधिकसप्तदशशताब्द्या अनन्तरमेवेति तदुत्पन्नजगन्नाथदेवादीनां जन्मपत्रा- द्यवलोकनेन स्पष्टतया प्रतीयते तेन वयारमेकलिखितं सर्वं न प्रमाणं व्यभिचारदर्शनादिति प्रति- पत्तव्यम् ॥

२८६. स्वकीयेति ॥ अस्य विक्रमस्य स्वकीयवंशस्य सूर्यवंशस्य सम्बन्धिनीमुन्नतिमौन्नत्यं आश्रिताः स्ववंशानुरूपमाधिक्यं गता इत्यर्थः त्रयः सुताः पुत्राः जगति पृथिव्यां त्रिभिर्मूर्तिभिः ब्रह्मविष्णु- महेश्वरतुल्याद्त्रिमूर्तिवत् जाताः समुत्पन्नाः त्रिमूर्तिकृत्यान्याह प्रजासमुत्पादनं सन्तत्युत्पादनं प्रजास्या- त्सन्ततौ जने इति कोशात् साधुपालनं सद्रक्षणं द्विषत्कुलोन्मूलनं शत्रुसमूहनिग्रहः तद्रूपाणि यानि कर्माणि तेषु उद्यता उद्युक्ताः ततश्च प्रसूतिस्थितिसंहृतिरूपकर्मत्रयवत्त्रिमूर्तितुल्यतेत्यर्थः तत्र ज्येष्ठस्तु पट्टमहिष्यां समुत्पन्नः इतरौ द्वितीय पत्न्या ललितामणिदेव्या गर्भे इति ॥

२८७. स इति ॥ तेषु त्रिषु पुत्रेषु मध्ये इत्यर्थः सः प्रधानः ज्येष्ठत्वादिति भावः रामशब्देनान्वित श्चन्द्रशब्दो रामान्वितचन्द्रः रामान्वितचन्द्र इति नामाभिधानं तद्वान् रामचन्द्रनामेत्यर्थः स्वपितुः विक्रमदेवस्य मतेऽभिमते स्थितः तत्सम्मत्यैवेत्यर्थः नरेन्द्रः यौवराज्येऽभिषिक्तः सन् नरपतिरभूत् मध्यमः

२८८. जगे यवीयान्नरसिंहनामतो यदीयचैतन्यसुतः सुयज्ञकृत् ।
सुखेन निर्लुण्ठितवान् त्रिविष्टपे निपीय सोमं सुरसर्वसम्पदः ॥

---

तेषु मध्यमपुत्र इत्यर्थः जगन्नाथ इति सुनामशोभनं नामधेयं जगौ प्राप यदङ्गजन्मा यस्य जगन्नाथदेवस्याङ्गात्तनुषो जन्म यस्य सः तत्पुत्र इत्यर्थः भुवि पृथिव्यां कृष्णसंज्ञकः कृष्णदेवनामा आसीदित्यर्थः ॥

२८८. जग इति ॥ यवीयान् तेषु कनिष्ठः पुत्रः जघन्यजे स्युः 'कनिष्ठयवीयोवरजानुज' इत्यमरः नरसिंहनामतः नरसिंहदेवनाम्ना इत्यर्थः सार्वविभक्तिकस्तसिल् जगे गीतोऽभूदित्यर्थः गैशब्दे इत्यस्मात् कर्मणि लिट् चैतन्यनामा सुतश्चैतन्यसुतः शाकपार्थिवादिः यदीयो यस्य नरसिंहदेवस्य सम्बन्धी चासौ चैतन्यसुतः सुयज्ञकृत् शोभनं यज्ञं अग्निष्टोमाख्यं करोतीति तथा अतएव कालान्तरे त्रिविष्टपे सुरलोके सोमं निपीय इह यज्ञे सोमपायित्वेन अमुत्रापि देवैः सहामृतवपुषं चन्द्रं पीत्वेत्यर्थः सोमं देवाः पिबन्तीति प्रसिद्धिः 'सोमस्त्वोषधी तद्रसेन्दुष्वि'त्यादि हैमः सुरसर्वसम्पदः देवानां निखिलस्वर्गसम्पत्तीः सुखेनानायासेन निर्लुण्ठितवान् सोमपायित्वेन सर्वामपि स्वर्गसम्पदं भुक्तवानित्यर्थः अयं राजा विक्रमदेवः स्वस्य वार्धकावस्थां समालोक्य ज्येष्ठपुत्रस्य रामचन्द्रदेवस्यापि सकलगुणनिधानस्य भूभारभरणसामर्थ्यं च दृष्ट्वा तेन पुत्रेण साकं कल्याणसिंहपुरं गत्वा तत्र ज्येष्ठभ्राता लालाकृष्णदेवेन सह समालोच्य तेन साकं सर्वैर्मिलित्वा नन्दपुरमागत्य तत्रस्थ द्वात्रिंशत्सोपाननिर्मित राजसिंहासने पुत्रं रामचन्द्रमुपवेश्य विधिना पट्टाभिषेकमहोत्सवं कारयित्वा स्वयमेव निजराजपट्टं तन्मस्तके बध्वा तस्मै सर्वमपि राज्यभारं दत्तवान् अयं हि राज्ञो रामचन्द्रस्य राज्याभिषेकः एकोनाशीत्यधिकसप्तदशशततमे (१७७९) क्रिष्टाब्दे जातः तदनन्तरं जयपुरमागत्य कियद्दिनानन्तरं पित्रा विक्रमदेवेन द्वितीयपत्न्यां समुत्पन्नयोः पुत्रयोः वैमात्रेयतया कदाचिद्रामचन्द्रस्य राज्ञोऽनादरः स्यादिति विविच्य राज्ञा रामचन्द्रदेवस्यानुमत्यैव द्वितीयपुत्रं जगन्नाथदेवं नवरङ्गपुरे तृतीयपुत्रं नरसिंहदेवं गुडारिनामनगरे चाभिषेच्य राजानं प्राबोधयत् एवञ्चायं विक्रमदेवः (१७०७) सप्तोत्तरसप्तदशशताब्द्यामवतीर्णः (१७५८) क्रिष्टाब्दे स्वयं राज्यं लब्ध्वा (१७७९) अब्दे स्वपुत्रेषु राज्यभारं दत्वा एकाशीत्यधिकसप्तदशशताब्द्यां (१७८१) स्वयं स्वर्गमार्गमशिश्रयत् अथ जगन्नाथदेवः नवरंगपुरे नृपो भूत्वा कृष्णदेवनामानं पुत्रं जनयित्वा लोकान्तरं गतवान् कृष्णदेवस्तु निस्सन्तानएव स्वल्पवयस्को देहं विससर्ज नरसिंहदेवोऽपि स्वशौर्यसम्पत्त्या कियत्कालं राज्यं कृत्वा स्वपुत्रे चैतन्यदेवे राज्यधुरं समर्प्य गोलोकमगमत् अथ चैतन्यदेवो राजा भूत्वा स्वपितृव्यपुत्रस्य कृष्णदेवस्य स्वर्गमनानन्तरं नवरङ्गपुरमागत्य तत्रैव स्वराज्यं प्रसार्य जयपुरमहाराज्याभिषिक्तानां निजपितृव्यपुत्रादीनां साहाय्यान्नवरंगपुरगुडारिनामकतदुभयदेशं चिरं विभुज्य क्रिष्टाब्दे (१८५४) परिमितेऽब्दे नवरङ्गपुरे अग्निष्टोमाख्यमहायज्ञकरणेन देवब्राह्मणान् परितोष्य समयान्तरे १८७६ परिमिते क्रिष्टाब्दे स्वयं सुरलोकमगात् ततस्तदुभयवंशविश्रान्तिः ॥

२८९. अथानुजाभ्यां सहितो विमत्सरो विमातृजाभ्यामपि चान्तरे पितुः ।
स रामचन्द्रः प्रकटेन्द्रवैभवो बभार ताभ्यां धरणीं त्रिकूटवत् ॥

२९०. ब्रिटीशसाहायकमाकलय्य यो रणे स्वसैन्यैर्ननु पाद्मनाभिके ।
कलिङ्गभूपस्य शिरः प्रकर्तयन्नकारयत्तत्र नृपं तदात्मजम् ॥

---

एवं प्रसङ्गाच्चैतन्यदेवपर्यन्तमभिधाय रामचन्द्रस्य राज्ञः कथां प्रस्तावयति ॥

२८९. अथेति ॥ अथ शब्दोऽत्र प्रस्तावान्तरारम्भकः अथ रामचन्द्रस्य स्वराजत्वप्राप्त्यनन्तरं विभवएव वैभवं स्वार्थेऽण् यद्वा विभोर्भावः वैभवं तस्येदमित्यण् प्रकटं प्रकटीकृतं इन्द्रस्येव वैभवं ऐश्वर्यसम्पत्तिर्यस्य स तथा स प्रसिद्धः पूर्वोक्तो वा रामचन्द्रः तन्नामा ज्येष्ठः पितुर्निजतातस्य विक्रमदेवस्येत्यर्थः अन्तरे अवसानेऽपि पितुः स्वर्गमनानन्तरमपीयर्थः अपिशब्दोऽत्र सौभ्रात्रप्रद्योतनार्थः विमत्सरः अन्यशुभद्वेषविरहितः 'मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु'त्यमरः अतएव विमातृजाभ्यां वैमात्रेयाभ्यामपि ताभ्यां पूर्वोक्ताभ्यां अनुजाभ्यां जगन्नाथदेव नरसिंहदेवनामभ्यामवरजाभ्यां सहितः सन् धरणीं पृथ्वीं त्रिकूटवत् त्रीणि कूटानि ब्रह्मविष्णुशिवावासभूतानि शृङ्गाणि यस्य स मेरुपर्वत इत्यर्थः तद्वत् बभार बिभर्ति स्म पितुः सद्भावदशायां यथा सौभ्रात्रेण राज्यं कृतवान् तदनन्तरमपि तद्वदेवेति भावः ॥

२९०. ब्रिटीशेति ॥ यः रामचन्द्रदेवः पद्मनाभे तन्नाम्नि ग्रामे भवः पाद्मनाभिकः भवार्थे ठक् तस्मिन् रणे सङ्गरे स्वसैन्यैः निजसेनाप्रधानैः नन्वित्यवधारणे ब्रिटीशानां ब्रिटीपु गवर्नमेण्ट् सम्बन्धिनामाङ्गदेशीयानामित्यर्थः साहायकं साहाय्यं योपधाद्गुरूपोत्तमाद्वुञ् इत्यत्र सहायाद्वेति वक्तव्यमित्युक्तेः पाक्षिकोवुञ् आकलय्य प्रापयित्वा कलिङ्गभूपस्य विजयनगराधिपतेर्विजयरामराजस्येत्यर्थः शिरः प्रकर्तयन् मस्तकं छेदयन् तत्र कलिङ्गदेशे विजयनगरराजधान्यामित्यर्थः तदात्मजं तस्य कलिङ्गाधिपतेर्विजयरामराजस्यात्मजं पुत्रं नारायणगतपतिनामानमित्यर्थः नृपं राजानमकारयत् राज्याभिषिक्तं कारयामासेत्यर्थः चतुर्णवत्यधिकसप्तशतोत्तरसहस्रपरिमिते (१७९४): आंग्लाब्दे विजयनगरान्नातिदूरे पद्मनाभनाम्नि ग्रामे दुर्वृत्तेन विजयनगराधिपतिना विजयरामराजेन सार्कं ब्रिटीपु गवर्णमेण्टीयानां युद्धमासीत् तदानीमयं रामचन्द्रदेवः ब्रिटीशानां सहायीभूय अनेकानि सैन्यानि दत्वा ब्रिटीशप्रबलबलैः विजयरामराजं तत्र समिति निपातयामास तदानीमात्मगोपनार्थं तत्पुत्रो नारायणगजपतिः काशीपुरनगरं गतवान् तत्र स्थित्वा जयपुराधिपतिं रामचन्द्रदेवमनुकूलयन् नारायणपुरपत्तनमागत्यात्र कियद्दिनानि सुस्थः स्थितः अथ दयापरोऽयं रामचन्द्रदेवः स्वस्य प्रधानमन्त्रिणं जगन्नाथपात्रं विशाखपत्तनं प्रतिप्रेषयन् तदानीं तत्राधिकृतपदे स्थितं लार्डहोम्बरेट्ट साहेब सान्त्वयित्वा तदनुमत्या विजयनगरस्य वार्षिकं गवर्नमेण्टाय देयङ्करं यथोचितं लिखितपूर्वं निर्धार्य तेन स्वसचिवेनैव विजयनगरे नारायणगजपतेः पट्टाभिषेकं कारयामास इत्यादि ज्ञेयम् ॥

२९१. ब्रिटीशमुख्या अपि वीक्ष्य दक्षताममुष्य निष्कृष्य च दैशिकं करं ।
सहस्रषट्काधिकमेव रूपकायुतं स्वकं शाश्वतिकं विनिर्दधुः ॥

२९२. धनं बहुप्राप्य च लिङ्गभूपतिर्बभूव यस्मात्पुनरेव भूपतिः ।
स भूपतीनां प्रवरस्तथापरं स्ववंशसिद्धेश्च चखान सागरम् ॥

२९३. समीननेत्रैर्नलिनाननैरलिव्रजालकैः शैवलरोमराजिभिः ।
अवर्तितावर्तगभीरनाभिभिः श्रियास्फुरत्स्वप्सरसां समाश्रयः ॥

---

२९१. ब्रिटीशमुख्या इति ॥ ब्रिटीशमुख्याः गवर्नमेण्टीयमुख्याधिकारिणः अमुष्य राज्ञो रामचन्द्रदेवस्य दक्षतां सामर्थ्यं वीक्ष्य अपि शब्दात् स्वसाहाय्यप्रदानादिकं च दृष्ट्वेत्यर्थः स्वकं स्वकीयं दैशिकं करं देशसम्बन्धिराजभागधेयं निष्कृष्य पूर्वापेक्षया न्यूनीकृत्य सहस्रषट्काधिकं सहस्राणां षट्केनाधिकं रूपकायुतं रौप्यमुद्राणामयुतं षोडशसहस्रपरिमितमित्यर्थः शश्वद्भवः शाश्वतिकः तं नित्यं विनिर्दधुः इतऊर्ध्वं कदापि करवृद्धिर्नैव भविष्यतीति लिखितपूर्वं विनिश्चयं चक्रुरित्यर्थः तथा च एतत्पूर्वं गवर्नमेण्टस्य प्रथमाधिकारसमये जयपुरस्य साम्राज्यभागधेयस्त्रिंशत्सहस्रपरिमितो निरूपित आसीत् अनन्तरं पद्मनाभयुद्धावसाने लार्डहोम्बरेट्र साहेबद्वारा ततः किञ्चिन्न्यूनीकृत्य पञ्चविंशतिसहस्रपरिमितो-निश्चितः अथ (१८०३) त्र्यधिकाष्टादशशततमे आंग्लाब्दे तदानीन्तनकलक्टरपदवाच्यमिष्टर अलकजाण्ड-साहेब महोदयानां सुपार्श्ववशात् रिविन्यूबोर्ड लिखितानुसारेणैव तस्मिन्नेव वत्सरे आंग्लदेशप्रसिद्धस्य अक्टोबरमासस्य (२२) द्वाविंशतिदिवसे जयपुरस्य शाश्वतिको भागधेयः षोडशसहस्र (१६०००) परिमित एव परिष्कृतो निर्धारितश्च तथा तदीय लेखस्य विंशतितमे प्रस्तावे लिखितमस्तीति बोध्यम् ॥

२९२. धनमिति ॥ लिङ्गभूपतिः तन्नामा माडुगुलुनामकदेशस्य राजा यस्मात् रामचन्द्रदेवाद्राज्ञश्च बहुधनं चत्वारिंशत्सहस्ररूपकात्मकं द्रव्यं प्राप्य पुनरेव गवर्नमेन्टेन हृतराज्यभारोऽपि पुनरपीत्यर्थः भूपतिः लब्धराज्यो बभूव अत्रेदं बोध्यं माडगुलु जनपदे किल तदानीं जगन्नाथभूपतिनामा राजा आसीत् स च ब्रिटीसगवर्नमेन्टेन साकं विरुध्य तदधिकारिणोऽवमानितवान् ततश्च तैर्बलादपहृतराज्यभारोऽसौ जगन्नाथभूपतिः पुत्रेण लिङ्गभूपतिना सह जयपुरमाजगाम अथ रामचन्द्रदेवः स्वबन्धुभावात्तदर्थं (४००००) चत्वारिंशत्सहस्रपरिमितानि रूपकाणि तद्देशीयकररूपेण गवर्नमेन्टाय स्वयं दत्वा लिङ्गभूपतये पुनस्तद्राज्यमन्वग्राहयदिति भूपतीनां राज्ञां मध्ये प्रवरः श्रेष्ठतमः स रामचन्द्रदेवः तथा तेन रूपेण सगरसम्बन्धीय खातरूपेणेत्यर्थः स्ववंशसिद्धेः निजसूर्यवंशस्य सिद्धिसद्भावाद्धेतोः तत्सिद्धिमनुसृत्येतिवार्थः ल्यब्लोपे पञ्चमी अपरं तदन्यं च सागरं सागरनामानं महान्तं जलाशयमित्यर्थः चखान अवदारयामास सागरमानमुक्तं मत्स्यपुराणादौ 'एकधेन्वादिभूयातं कूपमानमुदाहृतं। शतधेन्वन्तरे वापी पुष्करिण्यश्चतुर्गुणम् ॥ सहस्रेण तटाकः स्यादयुतेन च सागर' इति धेनुर्हस्तचतुष्टयमिति च ज्ञेयम् ॥

२९३. स इति ॥ सः सागरः मीननेत्रैः मीना एव नेत्राणि तैः अन्यत्र मीनैरिव नेत्रैः नलिनाननैः पद्मरूपवदनैः अन्यत्र पद्मसदृशवदनैः अलिव्रजा भ्रमरपङ्क्तयः एवालकानि चूर्णकुन्तलानि तैः अन्यत्र अलिव्रजैरिवालकैः शैवला एव रोमराजयः तैः अन्यत्र शैवला इव 'आवर्ता जलभ्रमयः स्यादावर्तोऽम्भसां

**२९४. तरङ्गपातोद्गतशब्दधारया कदाचिदुच्चैःश्रवसोऽपिधायकः ।**
**सदैव पूर्णामृतसाधितेप्सितद्युचारिसन्तानसुखप्रदायकः ॥**

भ्रम' इत्यमरः ते एव गभीरानाभयः अन्यत्र ते इव तैः उत्कृष्टैः करणैः या श्रीः शोभा तया अन्यत्र श्रिया लक्ष्म्या स्फुरन्ति प्रकाशमानानि सुपूजिताः स्वच्छत्वादिगुणयुक्तत्वादिति भावः आपो जलानि येषां तानि च स्वप् इत्यत्र ऋक्पूरब्धूरित्यादिना समासान्ते प्राप्ते न पूजनादिति तन्निषेधः सुपूजायां तथाभूतानि यानि सरांसि सरस्यः 'कासारः सरसीसर' इत्यमरः तेषां अन्यत्र श्रिया सह स्फुरन्त्यः शोभनाश्च या अप्सरसः स्वर्वेश्या रम्भादयः तासां समाश्रयः स्थानभूत इवावर्तताभूत् समुद्रस्यापि लक्ष्मीसहिताप्सरसामुत्पत्तिस्थानत्वेनाश्रयता सुप्रसिद्धैव स्वप्सरसामित्यत्र स्वप्सरांस्येव स्वप्सरस इति स्वप्सरस इव स्वप्सरांसीति वा रूपकोपमयोरन्यतरेण भाव्यं अन्यथा मीननेत्रैरित्यादौ मीनादिषु नेत्रत्वारोपणादिकं व्यर्थं स्यात् एवमन्यत्रापि यथायथमूह्यम् ॥

२९४. तरङ्गेत्यादि ॥ कदाचित् प्रखरवायुसंयोगवशात् न तु सर्वदा तरङ्गाणां लहरीणां पातैः पतनैः उद्गतया सञ्जातया शब्दधारया शब्दपरम्परया उच्चैरतिशयेन श्रवसः श्रवणस्य जातावेकवचनम् सन्निहितजनश्रवणयुगळस्येत्यर्थः अपिधायकः आच्छादकः 'अपिधान तिरोधान पिधानाच्छादनानि' चेत्यमरः सदैव सर्वदैव पूर्णानि परिपूरितानि यानि अमृतानि जलानि 'पयः कीलालममृतमिति जलपर्याये' ऽमरः तैः साधितानि सम्पादितानि ईप्सितानि आहारविहारादिमनोरथा यैस्तथाभूतानां द्युचारिणां दिवि आकाशे चरितुं शीलं येषां तेषां हंसकारण्डवादीनां खेचराणां सन्तानस्य कुलस्य यत्सुखं यथेष्टाचरण जन्यं तस्य प्रदायकः सम्पादकः द्युचारीत्यत्र दिव उदिति उकारोन्तादेशः समुद्रपक्षे कदाचित् मन्थनसमये इत्यर्थः तरङ्गपातोद्गतशब्दधारया महोर्मिपातजनितशब्दपरम्परया सह यद्वा तरङ्गपातैः सह उद्गतः शब्दो यतः तथाभूतया धारया आस्कन्दितादिगतिपञ्चकेन उपलक्षितस्येत्यर्थः इत्थम्भूतलक्षणे तृतीया 'धारासैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके' इति मेदिनी 'आस्कन्दितं धोरितकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्चधारा' इत्यमरः तथाभूतस्य उच्चैश्श्रवसः तन्नाम्नोऽश्वस्यापि हय उच्चैःश्रवा इत्यमरः धायकः धाता जनक इत्यर्थः दधातेः कर्तरि ण्वुल् आतो युगित्यादिना युगागमश्च तथा सदैव पूर्णेन अनूनेन 'पूर्णमखण्डंस्यादनूनके' इत्यमरः अमृतेन समुद्रमथनोद्धृताखण्डसुधाप्राप्त्येत्यर्थः 'पीयूषममृतं सुधे'त्यमरः साधितेप्सिताः ये द्युचारिणः 'दिवि आकाशे स्वर्गे वा सञ्चारिणो देवा इत्यर्थः 'द्यौस्तु स्वर्गविहायसो' रित्यादि कोशः तेषां सन्तानात् कल्पवृक्षात् यत्सुखं तस्यापि प्रदायकः 'सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे' इति मेदिनी 'पञ्चैते देवतरवो मन्दारः पारिजातकः सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दन'मिति अमराद्युक्तेः पञ्चानामेकपर्यायत्वाभावेऽपि सधर्मत्वं स्वीकृतं कविभिः तथैतेषां क्षीरसमुद्रोत्पन्नानां सर्वेषामपि समुद्राणां सामान्यविवक्षया सागरोत्पन्नत्वं च प्रतिपत्तव्यं यथा च क्षीरसमुद्रमथनादुच्चैःश्रवोऽश्वैरावतामृतकुम्भकल्पवृक्षादीनां लक्ष्मीसहिताप्सरोगणानां चोत्पत्तिस्तत्सर्वं भागवतादिषु द्रष्टव्यम् ॥

२९५. परिस्फुरत्पुष्करवारणास्तृतं स्वकं महत्त्वं भुवनेषु कीर्तयन् ।
सचोडुपस्फीतवपुः स पूज्यते दिने दिने बाडबसत्क्रियाश्रयः ॥

२९६. सुदैर्घ्यविस्तार गभीरतादिभिर्गुणैरनन्यादृशमीरयन्ति यम् ।
प्रदर्शितस्वच्छतयाऽप्यकुत्सितो हिमाद्रिजाताश्रुतसख्य एव सः ॥

---

२९५. परिस्फुरदिति ॥ स च सागरः वार्यते बध्यतेऽनेनेति वारणं पुष्कराणां जलानां वारणं पुष्करवारणं सेतुः 'देवराजो मया दृष्टो वारि वारण मस्तके' इत्यादि प्रयोगदर्शनात् 'कबन्धमुदकं पाथः पुष्करं सर्वतोमुखमिति जलपर्याये'ष्वमरः परिसर्वतः चतसृष्वपि दिक्षु इत्यर्थः स्फुरन्ति प्रकाशमानानि यानि पुष्करवारणानि सेतुबन्धाः तैः आस्तृतं विस्तारितं तत् स्वकं स्वकीयं महत्त्वं महिमानं भुवनेषु जलेषु कीर्तयन् प्रख्यापयन् 'जीवनं भुवनं वनमित्यादि जलपर्यायेषु' अमरः सेतुपरिमाणेनैव जलपरिमाणं दर्शयन्नित्यर्थः सर्वदा सेतुसंलग्नतया जलपूर्णत्वादिति भावः निश्चलेषु पुष्करवारणेषु स्फुरदिति किञ्चिच्च-लनार्थकविशेषणस्यानुपयुक्तत्वेऽपि जलप्रतिबिम्बितानां तेषां तथात्वमिति ज्ञेयं उडुपैः प्लवैः 'उडुपन्तुप्लवः कोल' इत्यमरः स्फीतं प्रस्फुटं वपुर्जलमयशरीरं यस्य स तथाभूतः दिने दिने प्रतिदिनं नित्यवीप्सयोरिति द्विर्भावः बाडबानां ब्राह्मणानां 'द्विजात्यग्रजन्म भूदेव बाडबाः विप्रश्च ब्राह्मण' इत्यमरः सत्क्रियाणां स्नानसन्ध्यावन्दनादि कर्मणां आश्रयः स्थानभूतस्सन् पूज्यते स्म पूजितो बभूवेत्यर्थः स्म योगे कर्मणि लट् अतीतार्थकस्येत्यस्य पृथक्पदत्वे स चेत्यत्र चकारेण इदानीमपि पूज्यत इत्युन्नेयः ॥

अन्यत्र परिस्फुरन् यः 'पुष्करवारणोऽभ्रमातङ्गः ऐरावतोऽभ्रमातङ्ग' इत्यमरः पुष्करे व्योम्नि विद्यमानो 'वारणो गजः व्योमपुष्करमम्बरं मतङ्गजो गजो नागः कुञ्जरो वारणः करी'ति चामरः तेन हेतुना आस्तृतं यत् स्वकं महत्त्वं तत् भुवनेषु जगत्सु कीर्तयन् स्वोत्पन्नैरावतसम्पादितनिजमहिमानं प्रख्यापयन्नित्यर्थः स च समुद्रः दिने दिने उडुपेन नक्षत्रपतिना चन्द्रेणेत्यर्थः उडुपश्चन्द्रभेलयोरिति धरणिः स्फीतं हर्षोत्फुल्लं वपुः शरीरं यस्य सः चन्द्रोदये हि समुद्रो वर्धत इति कविसम्प्रदायः यद्वा उडुपस्य स्फीतं प्रकाशितं वपुः शरीरं यस्मात्स तथोक्तः चन्द्रस्य समुद्रोत्पन्नत्वादित्यर्थः तथा बाडबो बडबानलः तस्य या सत्क्रिया सत्कारस्तदाश्रयस्तत्कारकः सन् पूज्यते स्म पुरा किल उर्वेण मुनिना अयोनिजं पुत्रमिच्छता वक्षो मथितं तत्र ज्वालामयः पुरुषो जातः स च ब्रह्मणा समुद्रे बडबामुखे तज्जलरूपहविर्भागितया अवस्थापित इति मत्स्यपुराणादौ मदनदहनाय हरनेत्रसमुद्भूतोग्निरपि बडबानल-स्तथासमुद्रे स्थापित इति कालिकापुराणे ॥

२९६. सुदैर्घ्येत्यादि ॥ यं सागरं सुष्ठु दैर्घ्यमायतता विस्तारो व्यासः गभीरता गाम्भीर्यं तदादिभि-र्गुणैः अन्यादृक् न भवतीत्यनन्यादृक् तमनन्यसदृशं ईरयन्ति कथयन्ति जना इति शेषः त्यदादिषु दृशो अनालोचने कञ् च इत्यत्र समानान्ययोश्चेति वाच्यमित्युक्तत्वात्कञ् पक्षे चाक्विन् आसर्वनाम्न इत्या-कारोऽन्तादेशश्च उभयत्रापि समानोर्थः अकुत्सितोऽनिन्दितः स सागरः प्रदर्शितया स्वाविष्कृतया स्वच्छतया नैर्मल्यगुणेनापि अन्यत्र निष्कपटभावेन हिमाद्रिजातया हिमवत्प्रभवया गङ्गया सहेत्यर्थः आश्रुतं अङ्गीकृतं सख्यं मैत्री येन स तथोक्त एव भवतीत्यर्थः गङ्गासमानस्वच्छजल इति भावः अन्यत्र हिमाद्रि-जातेन मैनाकपर्वतेन सहाश्रुतसख्यः 'मैनाकमम्भोनिधि बद्धसख्य'मिति कुमारसम्भवे ॥

२९७. विभाति चाद्यापि स चक्रसारसस्फुरन्महामत्स्यविहारसंश्रयः ।
जलेश काष्ठाप्रथितः पुरान्तरे तथा जगन्नाथपदप्रतिष्ठितः ॥

२९८. न्यधायि तद्दक्षिणपश्चिमाशयोर्वदान्यमान्ये न च शासनद्वयम् ।
चतुर्दशाष्टौ च विभागतः क्रमात्समेत्य यत्र न्यवसन् धरासुराः ॥

---

२९७. विभातीति ॥ चक्राश्चक्रवाकाः सारसाः पुष्कराह्व पक्षिविशेषाः 'पुष्कराह्वस्तु सारस' इत्यमरः तैः स्फुरन् प्रकाशमानः महामत्स्यानां बृहन्मत्स्यजातीनां विहारसंश्रयः विनोदस्थानं पुरस्य नगरस्य जयपुरनगर्या इत्यर्थः अन्तरे बहिःप्रदेशे जलेशस्याप्पतेर्वरुणस्य 'प्रचेतावरुणः पाशी यादसां पतिरप्पति' रित्यमरः या काष्ठा दिक् 'दिशस्तु ककुभः काष्ठा' इत्यमरः पश्चिमादिगित्यर्थः तस्यां प्रथितः प्रख्यातः जयपुरनगर्याः पश्चिमप्रदेशे विद्यमान इत्यर्थः तथा जगन्नाथ इति पदेन नाम्ना प्रतिष्ठितः प्रतिष्ठां गतः जगन्नाथसागर इति प्रसिद्ध इत्यर्थः तथाभूतः स चायं सागरः अद्यापि वर्तमानेऽपि विभाति प्रकाशते समुद्रपक्षे पुरा पूर्वस्मिन्काले चक्रेणायुधविशेषेण सारसेन पद्मेन च उपलक्षणं चैतत् गदाशङ्खाभ्यामपीत्यर्थः स्फुरन् प्रकाशमानो यो महामत्स्यः चक्रादिसंयोगान्मत्स्यावतारी विष्णुरित्यर्थः तस्य विहारसंश्रयः सञ्चारभूमिः यद्यपि विष्णोर्मत्स्यावतारसमये चक्रादिरहितत्वं तथापि तस्य शङ्खासुरवधसमये तदुत्तरं वा तत्सहितत्वं बोध्यं जलेशस्य वरुणस्य या काष्ठा स्थितिः तया प्रथितः जलधौ वरुणलोकस्य प्रसिद्धत्वात् 'काष्ठोत्कर्षे स्थितौ दिशी'त्यमरः तथा अन्तरे निजगर्भमध्ये जगन्नाथस्य जगतामीश्वरस्य विष्णोर्यत्पदं स्थानं तेन प्रतिष्ठितः तथाभूतः सागरोऽद्यापि विभातीत्यर्थः क्षीरसमुद्रस्थायिनोपि विष्णोरब्धिमात्रे वर्णनं कविसमयसिद्धं उक्तं च कविकल्पलतायां "अब्धौ द्वीपाद्रिरत्नोर्मिपोतयादोजलप्लवाः। विष्णुः कुल्यागमश्चन्द्राद्वृद्धिरौर्वोऽब्दपूरण"मिति शेषः शय्याजलधि शयनमित्यादि प्रयोगश्च ज्ञेयः प्रकृते जगन्नाथसागर इति नामकरणप्रयोजनन्तु राज्ञा रामचन्द्रदेवेन स्वसचिवस्य जगन्नाथपात्रस्य तत्खनने बहुपरिश्रमं ज्ञात्वा तस्मिन् स्वस्य कृतज्ञतां भगवति देवे जगन्नाथे च भक्त्यतिशयं दर्शयता भगवदर्पितत्वेन तस्य जगन्नाथसागर इति नाम कृतमिति मन्तव्यम् ॥

२९८. न्यधायीति ॥ वदान्येषु दानशौण्डेषु मान्यः पूज्यः 'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे' इत्यमरः तेन रामचन्द्रदेवेन तद्दक्षिणपश्चिमाशयोः तस्य जगन्नाथसागरस्य दक्षिणपश्चिमयोर्दिशोः सागरादर्धक्रोशपरिमितान्तरे इति ज्ञेयं शासनद्वयं अग्रहारद्वयं न्यधायि स्थापितं निपूर्वाद्दधातेः कर्मणि लुङ् चिण् आतो युक् चिण् कृतो रितियुक् तस्य लुक् द्विजसंवासो ग्रामः शासनमिति अग्रहारमिति चोच्यते यत्र शासनद्वये विभागतः स्वस्य विभागं लब्ध्वेत्यर्थः क्रमात् दक्षिणपश्चिमोभयशासनक्रमात् चतुर्दशतत्परिमिताः अष्टौ तत्परिमिताश्च धरासुरा भूसुराः ब्राह्मणा इति यावत् । न्यवसन् निवासं कृतवन्तः दक्षिणे जगन्नाथपुरनाम्नि शासने चतुर्दशविभागान् लब्ध्वा चतुर्दशब्राह्मणाः पश्चिमे गङ्गमापुरनाम्नि शासनेऽष्टौ भागान् लब्ध्वाऽष्टौ ब्राह्मणाः क्रमेण निवसन्ति स्मेत्यर्थः एतदुभयमपि शासनं मन्त्रिणो जगन्नाथपात्रस्य तत्पत्न्याः गङ्गमानाम्न्याश्च कृते दत्तमिति तदुभयनामभ्यां प्रख्यापितमिति ज्ञेयं । चतुर्णवत्युत्तरसप्तदश (१७९४) शताब्दादौ शासनद्वय करणं सागरस्यापि तदासन्नः समयः प्रतिपत्तव्यः ॥

२९९. सरोपयन् सागरपार्श्वयोः फलप्रशस्तचूतोपवनद्वयं महत् ।
प्रधानयोद्धृनधिवेश्य पश्चिमे व्यधत्त पूर्वेऽस्य च राज्यमात्मनः ॥

३००. स मल्लराजेन विरुध्य विप्लुते प्रगोपितां नन्दपुरेऽप्यनिन्दिताम् ।
स दिव्यसिंहाह्वय नन्दसंज्ञिनाऽवगम्य सर्वज्ञवरेण चाम्बिकाम् ॥

---

२९९. स इति ॥ स रामचन्द्रदेवः सागरपार्श्वयोः सागरस्य पूर्वपश्चिमतटयोरित्यर्थः महत् बहुवृक्षोपेतं फलैः प्रशस्तं मधुरमहत्फलप्रसवित्वेनोत्कृष्टं चूतोपवनद्वयं आम्रारामयुगळं रोपयन् रोपयित्वा प्रतिष्ठापयन्नित्यर्थः अस्य सागरस्य पश्चिमे प्रदेशे प्रधानाः शस्त्रास्त्रनैपुण्येन युद्धपारङ्गमा ये योद्धारस्तान् अधिवेश्य निवास्य पूर्वे अस्यैव सागरस्य पूर्वप्रदेशे आत्मनः स्वस्य च राज्यं राजधानीमित्यर्थः व्यधत्त चक्रे सागरखननानन्तरं नासिक (नाकटि) पर्वतसमीपस्थित पुरातनदुर्गं विहाय तत्पश्चिमे सागरस्य पूर्वतटे जयपुरराजधानीं स्थापयित्वा तत्रैव राज्यं कृतवानित्यर्थः तदानीं जयनगराख्ये सागरपश्चिमप्रदेशे युद्धविशारदाः पदातयः (५००) पञ्चशताधिका निवसन्ति स्म राजधान्या उत्तरभागे सूदपदवाच्यानां तथाविधपदातीनां (२००) द्विशतगृहाण्यासन् तथा बोम्मालिकरणपदवाच्याश्चानेके योद्धार आसन् राजभवनस्य दक्षिणे राजवीथ्यां राजवंशीयान्तराः राजुभायिपुत्रपदवाच्याः निवसन्ति स्म तद्दक्षिणे अष्टदुर्गीयवीथ्यां (अटगडिया साहीति प्रसिद्धायां) केचन राजवंशीयाश्च न्यवसन् तथा मन्त्रिपुरोहितादयः प्रकृतिवर्गाश्च यथास्थानं स्थितान्यवसन्निति बोध्यम् ॥

३००. स इति ॥ युग्मकमेतत् तेन सः अयाजयदिति द्वितीयश्लोकेन सम्बन्धः । रामचन्द्रदेवः नन्दपुरराष्ट्रे मल्लराजेन मल्लराज इति मलपराज इति च कश्चन पुरुषः तेन हेतुना विरुध्य परस्परेण विद्विष्य विप्लुते उपद्रुते सति मल्लराजकर्तृकदेशोपद्रवे जाते सतीत्यर्थः अनिन्दितां सौम्यविग्रहामित्यर्थः अत एव प्रगोपितां अनन्यवेद्यतया प्रगोप्य स्थापितां अम्बिकां कनकमयजयदुर्गामूर्तिमित्यर्थः 'अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिके' त्यमरः स दिव्यसिंहाह्वयनन्दसंज्ञिना दिव्यसिंह इति आह्वायेन नाम्ना सह वर्तमानश्चासौ नन्द इति संज्ञास्त्यस्य इति स च तेन । दृष्टा दृष्टं जानन्ति कर्मविद्याबलैः प्रत्यक्षीकुर्वन्तीति सर्वज्ञाः तेषु वरः श्रेष्ठः तेन दुर्गामन्त्रोपास्तिबलाल्लब्धसर्वज्ञत्वसिद्धिना दिव्यसिंहनन्दाख्येन द्विजन्मनेत्यर्थः अवगम्य अज्ञातामपि तां ज्ञात्वेत्यर्थः अत्रेदं बोध्यं नारायणपुरे राज्यं कृतवतो विक्रमस्य समयएव कदाचित् मलपराज इति केनचिद्राजविद्रोहिणा कियतीः प्रजाः स्वायत्तीकृत्य नन्दपुरे निर्लुण्ठनादिना देशोपद्रवः कृतः तदानीं नन्दपुरदुर्गाधिष्ठितदुर्गामूर्तिं कश्चित्तत्सेवकः प्रगोप्य एकस्मिन् कूपे निक्षिप्तवान् कियद्दिनान्तरं स च सेवको नियत्या लोकान्तरं गतः अथ निवृत्ते मलपराजकृतदेशोपद्रवे राज्ञा बहुप्रयत्नेनान्विष्यमाणापि सा कनकमयजयदुर्गामूर्तिरन्यैर्दुर्ज्ञाततया दुर्लभैवासीत् एवं गच्छति काले अस्य रामचन्द्रदेवस्य राज्यसमये अस्मदतिवृद्धप्रपितामहा श्रीदिव्यसिंहनन्दशर्माणः पुरुषोत्तमक्षेत्रसमीपस्थविद्याधरपुरनाम्नि शासने कृतनिवासा अपि देशपर्यटनेच्छया तत आगत्य अस्मिन् जयपुरे प्रविष्टाः तैरेव यथा यस्मिन् कूपे निक्षिप्ता स्थिता सा दुर्गामूर्तिः तत्सर्वं राज्ञे निवेदितं तथा च सा दुर्गामूर्तिर्लब्धेति ॥

३०१. महैः समारोहितदोलिकां बलिं प्रकल्प्य मार्गे विधिना पदे पदे ।
निकाय्यमानाय्य निजं नियोजयन् नियोगचर्यासु जनानयाजयत् ॥

३०२. पुराच्च नारायणपत्तनात्समानयन् सनारायणमूर्तिमादरात् ।
स्वराजधान्यामधिवेश्य भक्तिमान् सराजचिह्नं स्वसमर्पणं व्यधात् ॥

---

अथ तथावगमानन्तरं किं कृतवान् राजा तदाह—

३०१. महैरिति ॥ महैरुत्सवैः सह 'मह उद्धव उत्सव' इत्यमरः समारोहिता वाहकादिस्कन्धे सम्यगधिरोहिता दोलिका दोला यस्यास्तां 'दोला प्रेङ्खादिकास्त्रिया'मित्यमरः दोलिका विमाने उपवेशितां तामेव दुर्गामित्यर्थः समारोहितदोलिकामिति समाङ् पूर्वात् रुहधातोर्हेतुमण्णयन्तात्कर्मणिक्तः प्रयोज्य कर्मणिप्रत्ययः प्रयोज्यात्र दोलिकाप्रधानकर्मात्र वाहकस्कन्धादि प्रयोजको राजपुरुषादिः तदुभय-माक्षिप्यते दोलाया देवीमूर्तेश्चाधाराधेयभावसम्बन्धः तेन सम्बन्धसामान्यषष्ठ्या बहुव्रीहिः न च प्रधानकर्मणि प्रत्यय इति भ्रमितव्यं उक्तञ्च गौणेकर्मणि दुह्यादेः प्रधाने नीहृकृष्वहां । बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया । प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मता इति दुर्गामूर्तेः प्रयोजकत्व-विवक्षायां समारोहिता दोलिकाययेति वा समासः तां दुर्गां मार्गे नन्दपुराज्जयपुरागमनमार्गे पदे पदे स्थाने स्थाने विधिना शास्त्रोक्तमार्गेण बलिं पशूपहारादिकं प्रकल्प्य देव्यै बलिं दत्वेत्यर्थः निजं स्वकीयं निकाय्यं निलयं जयपुरीयराजभवनमित्यर्थः 'निकाय्यनिलयालया' इत्यमरः आनाय्य जनैरिति शेषः णिजन्ताल्ल्यप् नियोगचर्यासु तस्या एव देव्या नियमसेवासु परिचर्येत्यत्र परीत्यस्या विवक्षणाच्चर्येति साधुः जनान् सेवकजनान् नियोजयन् अस्मिन् सेवानियोगे अयमेव नियोज्य इति नियमेन योजयन्नित्यर्थः अयाजयत् तैरेव पूजकजनैः प्रतिदिनं पूजयामासेत्यर्थः एवं च स च राजा दुर्ज्ञेयतया दुष्प्रापां दुर्गां प्रापयन्तं दिव्यसिंहनन्दशर्माणं द्विजवरं बहुमानदानाभ्यां परितोष्य तमेव सर्वतन्त्र स्वतन्त्रं तस्या देव्याः शरद्वसन्तादि महोत्सवकृत्येष्वाचार्यं प्राबोधयत नन्दपुरसमीपस्थितान् शल्यामुण्डा प्रजाबिल्वग्रामः, रूलापग्रामः, इति ग्रामत्रयं तदानीमेव तस्मै आचार्यदक्षिणास्वरूपेण च प्रादात् ततः प्रभृत्येवास्मिन् नन्दपुरप्रदेशे नन्दवंशीयानामस्माकं प्रतिष्ठा वेदितव्या एतत्सर्वं ग्रन्थादावेव निजवंशकथनप्रस्तावेऽस्माभिः प्रदर्शितमित्यधिकं तत्रैव द्रष्टव्यमिति ॥

३०२ पुरादिति ॥ स रामचन्द्रदेवः नारायणपत्तनात् तदाख्यात् पुरात् नगरात् नारायणपुर-पट्टणाख्यपुरादित्यर्थः नारायणमूर्तिं च वल्लभनारायणाख्य मणिमयविष्णुविग्रहमपि आदरात् समादर-पूर्वकमित्यर्थः आनयन् स्वराजधान्यां धीयतेऽस्यामिति धानी नगरी धाधातोरधिकरणे ल्युट् ङीप् राज्ञो धानी राजधानी स्वकीयायां तस्यां जयपुरनाम्न्यां नगर्यामित्यर्थः अधिवेश्य नवमन्दिरनिर्माणेन तत्राधि-ष्ठाप्य भक्तिमान् ईश्वरे परानुरक्तिर्भक्तिः 'अथातो भक्तिजिज्ञासा' 'सापरानुरक्तिरीश्वरे' इति शाण्डिल्य-सूत्रात् तद्वान् तद्युक्तः सन्नित्यर्थः स राजचिह्नं राजचिह्नैः छत्रचामरादिभिः सहितं यथातथा स्वस्यात्मनः समर्पणं व्यधात् तस्मै भगवते स्वात्मसमर्पणं कृतवानित्यर्थः निखिलमपि राजोपचारं तस्मै समर्प्य तत्सेवायां स्वात्मानमपि समर्पितवानिति फलितोर्थः तदानीं नारायणपुरपट्टणस्थित दुर्गामूर्तिं विजया-प्रतिमां चानाय्य निजान्तःपुरे दुर्गामन्दिरे पूर्वोक्तप्रकारेण स्थापयामासेत्यपि बोध्यम् ॥

३०३. अथो सुतं विक्रममेव संस्तुतं स यौवराज्ये समयेऽभिषेचयन् ।
स्वपौत्रकृष्णाख्य विमातृजोद्भवा वने समाधाय समाधिभागभूत् ॥

३०४. सुवैष्णवस्यास्य च वैष्णवं पदं गतस्य याता वनिता चितां यदा ।
विनाभ्रमभ्रात्पतितोह्यनातपश्चमत्कृतिं चेतसि पश्यतां दधौ ॥

---

३०३. अथो इति ॥ स रामचन्द्रदेवः समये स्ववार्धकावस्थायां संस्तुतं सर्वैरपि राजगुणैः परिचितमेव भूभारभरणक्षमतापन्नमिति यावत् विक्रमं तन्नामानं सुतं पुत्रं युवराजस्य भावः कर्म वा यौवराज्यं ब्राह्मणादित्वात्ष्यञ् तस्मिन् अभिषेचयन् अभिषिक्तं कुर्वन् स्वस्य रामचन्द्रदेवस्य राज्ञः पौत्रः कृष्णाख्यः कृष्णचन्द्रदेवनामाचेत्यर्थः यः विमातृजोद्भवः विक्रमदेवस्यैव वैमात्रेय भ्रातुष्पुत्रः तस्यावने रक्षणे समाधाय समाधानेन प्रबोध्य समाधिभाक् समाधियोगयुक्तोऽभूत् समयान्तरे समाधियोगेन देहं विसृष्टवानिति फलितोऽर्थः अत्रेदं बोध्यं राज्ञो रामचन्द्रदेवस्य तिस्रो भार्याः प्रथमभार्यायामुत्पन्नो वल्लभनारायणदेवनामा एकः पुत्रः तृतीयभार्यायामुत्पन्नो विक्रमदेवः तत्र वल्लभनारायणदेवः कृष्णचन्द्रनामानं पुत्रं जनयित्वा युवावस्थायामेव लोकान्तरं गतः अत्र तेन ज्येष्ठपुत्र विरहानलसन्तप्तो वृद्धो राजा रामचन्द्रदेवः द्वितीयपुत्राय विक्रमदेवाय राज्यभारं दत्वा शिशोः कृष्णचन्द्रस्य स्वपौत्रस्य पालने तं प्रबोध्यसमये स्वयं देहं विससर्जेति ॥

३०४. स्विति ॥ विष्णुर्देवतास्येति वैष्णवः अण् शोभनो वैष्णवः सुवैष्णवः तस्य अतएव वैष्णवं विष्णोः सम्बन्धिपदं स्थानं वैकुण्ठपुरमित्यर्थः गतस्य यातस्य अस्य रामचन्द्रदेवस्य वनिता तृतीयराज्ञीत्यर्थः चितां चित्यां याता प्राप्ता सहगमनं कृतवतीत्यर्थः यदा तदैवेत्यर्थः यत्तदोर्नित्यसम्बन्धात् अभ्रं मेघं विना अभ्रादाकाशात्पतितः अनातपश्छाया पश्यतां जनानामित्यर्थः चेतसि चित्ते चमत्कृतिः विस्मयापरपर्यायः चित्तविस्ताररूपः लोकातीतार्थाकलनेन किमेतदिति ज्ञानधाराजनने चित्तस्य दीर्घप्रायत्वं चित्तविस्तार इति साहित्यदर्पण टीकाकारादयः तां दधौ जनयामास तं तथाभूतं दृष्ट्वा सर्वेऽपि चमत्कृता अभवन्नित्यर्थः हीत्यवधारणे अत्रेदं कथानकं राज्ञो रामचन्द्रदेवस्य स्वर्गारोहणसमये तस्य तृतीयाराज्ञी पतिशरीरेण सह गमनं चिकीर्षन्ती यथाविधि श्रीगौरीपूजास्यात्महत्या निवारणप्रायश्चित्तादि नानाविधदानानि कृत्वा प्रार्थनापूर्वकं चितां प्रदक्षिणं त्रिः परिभ्राम्य तदग्निं निरीक्ष्य क्षणं स्थितवती तदानीं भर्तृसहगमने कालविलम्बे हेतुं पृच्छन्तं स्वदेवरं पूर्वोक्तनरसिंहदेवनामानं तद्धेतुमिदानीमेव पश्यसीति यावत्सा कथयति तावदेव आकाशादकस्मादेकाच्छाया दण्डाकारेण तदग्निकुण्डे निष्पपात तदानीं कालविलम्बेऽयमेवहेतु 'रिति तद्दर्शयित्वा सर्वजन चमत्कारं जनयन्त्या तयाभिहितं किमिति ? श्वः प्रभातेऽप्यत्र भवद्भिरागन्तव्यं अत्र यल्लभ्येत तदस्मद्भ्वाः पट्टमहिष्यागोचरे दातव्यमिति कथयित्वा च धन्यवादपुरस्सरमग्नौ प्रविश्य भर्तृलोकं जगाम तत आगामि प्रभातसमये ते सर्वेजनास्तत्रागत्यतदाग्निकुण्डसमीपे तस्याएव राज्ञ्या मस्तकधृतामम्लानां पुष्पमालामेकां समीक्ष्य चमत्कृतास्तां महोत्सवेन राजभवनं प्रापयामासु 'रिति अयं रामचन्द्रदेवः पञ्चपञ्चाशदधिकसप्तदश (१७५५) शततमे क्रिष्टाब्दे समुत्पन्नः (१८२५) क्रिष्टाब्दे लोकान्तरं गतवानिति ॥

३०५. अथास्य भद्रासनगं पुरोधसः सभद्रकुम्भार्चनमङ्गसम्भवं ।
विधाय भद्रार्पणकर्मगङ्गिकादिकाम्भसा भद्रजनैरसि स्नपन् ॥

३०६. शिरोल्लसच्छत्रतलज्वलद्वपुर्गृहीतदण्डः परिमण्डितोऽर्थिभिः ।
बुधालिवन्द्यो बलिमौळिचङ्क्रमी त्रिविक्रमेणोपममे स विक्रमः ॥

३०७. निबध्य पाशैर्बहुदेशविद्विषो जनाननेकाननु यो निपातयन् ।
सहायतां स्निह्यत एव हूणभूप्रशासकान् प्रीणयति स साग्रहः ॥

---

३०५ अथेति ॥ अथ रामचन्द्रदेवस्य लोकान्तरगमनानन्तरं पुरोधसः पुरोहिताः भद्रासनगं राजसिंहासनोपविष्टं नृपासनं तु यद्भद्रासनं सिंहासनं तु तदित्याद्यमरः अस्य स्वर्यातस्य रामचन्द्रदेवस्य अङ्गसम्भवं तनुजं विक्रमदेवमित्यर्थः असिस्नपन्निति सम्बन्धः किं कृत्वा तदेवाह सभद्रकुम्भार्चनमित्यादि भद्रकुम्भेषु मङ्गलार्थकलशेषु अर्चनं गणपत्यादिपूजनं तत्सहितं तत्पूर्वकमित्यर्थः भद्रार्पणकर्म मङ्गलार्पणकर्म 'भूमिं दीपं फलं दूर्वां पुष्पं गोरोचनास्तथा । दर्पणं दधिसिद्धार्थं घृतं चासादयेत्क्रमा'दित्याद्युक्तरूपं विधाय विधिना कृत्वेत्यर्थः भद्रजनैः मन्त्रिसामन्तप्रकृति पुरुषादिभिः सहगङ्गाएव गङ्गिका स्वार्थे कन् अभाषितपुंस्काच्चेति पक्षे इत् सा आदिर्येषां तीर्थानां तेषामम्भसा गङ्गादितीर्थतोयेनेत्यर्थः असिस्नपन् अभिषेकेण स्नपयामासुः स्नातेर्णिजन्ताल्लुङ् ॥

३०६. शिर इति ॥ समूर्धाभिषिक्तो विक्रमो विक्रमदेवनामा राजा शिरसि तदुपरिभागे उल्लसत् प्रकाशमानं यत् छत्रमातपत्रं तस्य तलेऽधोभागे ज्वलज्ज्वाज्वल्यमानं वपुः शरीरं यस्य सः स्वमस्तकोपरि भृत्यैरुत्तोलितच्छत्र इत्यर्थः अन्यत्र निजवामहस्तधृतछत्र इत्यर्थः गृहीतदण्डः शासनदण्डयुक्तः राज्ञां दण्डधरत्वात् अन्यत्र ब्राह्मणो बैल्वपालाशावित्यादि मनूक्तब्रह्मचारिधार्यलगुडविशेषधारीत्यर्थः अर्थिभिर्याचकैः परिमण्डितो वेष्टितः दानशौण्डत्वादिति भावः अन्यत्र भिक्षाटनं कृतवद्भिः सहितः स्वस्यापि तद्धर्मावलम्बित्वात् बुधालिभिः पण्डितराजिभिः अन्यत्र देववृन्दैरपि 'वन्द्यः स्तुत्यः बुधः सौम्ये च पण्डिते' इति मेदिनी ज्ञातृचान्द्रि स्तुरा बुधा इति च क्षीरस्वामी बलिनां बलवतां वीरपुरुषाणामित्यर्थः मौळिषु मस्तकेषु चङ्क्रमी चङ्क्रमणशीलः पदनमिताशेषवीरपुरुष इत्यर्थः अन्यत्र बलिनामासुरस्य मस्तके पादनिक्षेपकारी अतएव तथाभूतः सः त्रिविक्रमेण त्रिषु लोकेषु विक्रमो बलिवञ्चनार्थं विशेषेण पादविक्षेपोयस्य तेन वामनावतारिणा विष्णुनेत्यर्थः उपममे उपमितो बभूव कर्मणि तङ् अयं विक्रमः (१७९४) आंग्लाब्दे जातः ॥

३०७. निबध्येति ॥ यः विक्रमदेवः बहून् देशान् विद्विषन्तीति बहुदेशविद्विषः तान् अनेकदेशोपद्रवकारिणः अनेकान् जनान् पाशैः निबध्य स्वबलैर्निगृह्य तान् पाशैर्नितरां बन्धयित्वेत्यर्थः निपातयन् कांश्चित्घातयन् सहायतां स्निह्यतः साहाय्ये स्नेहं कुर्वतः तत्तद्दुर्जनग्रहणमारणादौ स्वसाहाय्यमिच्छत एवेत्यर्थः हूणाहूणजातीया ये भूप्रशासकाः भारतभूमिपरिपालनाधिकृताः तान् इंग्लण्ड् राजपुरुषानित्यर्थः साग्रहः तेषां तथाविधसाहाय्यदाने आग्रहसहितः सन् प्रीणयति स्म तान् प्रीणयामासेत्यर्थः स्म योगे भूतार्थे लट् अत्रेदमवधेयं अस्य राज्ञो राज्यसमये आंग्लाब्दस्य (१८३०) प्रभृति (१८६०) एतत्पर्यन्तं

३०८. अवाप्य काशीशनिदेशमात्मनो महारुजार्तिं व्यपनेतुमागतः ।
इहैव भुक्त्वा परिमुक्तवान् ततो द्विजो यदाघ्रातमुपेत्य पायसम् ॥

३०९. यदीयकाले कुलिशेन साद्भुतं गतेन गुप्तेश्वर गुप्तभूधरः ।
अभूदुदग्द्वार निरोधपूर्वकं तथैव विद्धं कृतमूर्धपद्धतिः ॥

तन्मध्ये एतत्प्रदेशेषु अधिकृततां प्राप्तवतां आंग्लदेशीयानां १-कलक्टर् मिष्टर् आबॅतूनाट् साहेबः, २-असिष्टाण्ट् कलक्टर् मिष्टर् उलुकसेनसाहेबः, ३ कलक्टर् मिष्टर् डब्ल्युरिड् साहेबः, ४ हनरभल् कमीषनर् रस्पुल् साहेबः इत्येवमादीनामवसरे विशाखपट्टणगञ्जामजिल्लान्तर्गत तत्तद्देशेषु कैश्चिद्दुष्टमतिभिः गवर्नमेन्टीयशासनोल्लङ्घनेन कियतो जनान् स्वायत्तीकृत्य देशविप्लवः कृतः तद्यथा गोलुकोण्डा प्रभृति स्थलेषु नागदोरनामा कश्चिद्दुर्गाधिपतिः विजयनगर शृङ्गवरपुकोटादिषु मुखी वीरभद्रराजप्रभृतयः अम्बारेलि, नीपडा, कुप्पिलि, पार्वतीपुर, वीरघट्टम् इत्यादि देशेषु समये समये उपद्रवदाता कश्चन व्याघ्रनायक नामा वणिक् पर्लाकिमुडि प्रभृतिषु देशेषु उठाणसिंहः रामराजः जगन्नाथराजः नरसिंहराजः रामचन्द्रदोरागारय्य दोरा नरसिंहपट्टनायकः हरिसिंहपट्टनायकश्चेत्यादयः गुणपुरप्रदेशे लिमाइ् चरणदेवनामा कश्चित् शृङ्गवरपुकोट, लक्कवरपुकोटादिस्थलेषु लच्चन्न दोरनामा कश्चित् जयपुरान्तर्गत महीदळपुरग्रामे घनसायिनिगिनामा कश्चित् एवं गोलुकोन्डास्थित सन्यासि भूपतिनामा च एतान् गवर्नमेन्ट् विद्रोहिणः स च राजा कांश्चिन्निपात्य कांश्चित्पाशैर्बध्वा पूर्वोक्ताधिकारिणां समीपे समर्प्य केषांचिद्रूहणमारणादौ वलसाहाय्यं दत्वा तानधिकारिणः प्रीणयामासेति पूर्वलेखकादयः ॥

३०८. अवाप्येति ॥ द्विजो ब्राह्मणः कश्चिदित्यर्थः आत्मनः स्वस्य महती प्रबला या रुजार्ति जीर्णशूलरूपरोगजन्यापीडा तां व्यपनेतुं अपनोदयितुं काशीशस्य श्रीकाशीविश्वेश्वरस्य निदेशं आज्ञां स्वप्नादेशमित्यर्थः अवाप्य प्राप्य आगतः जयपुरं प्राप्तः इहैव जयपुरे इत्यर्थः यदा घ्रातं येन विक्रमेणाघ्रातं पायसं क्षीरान्नविशेषं 'परमान्नं तु पायस'मित्यमरः उपेत्य प्राप्य भुक्त्वा तद्भोजनं कृत्वा ततः रोगात् परिमुक्तवान् परि सर्वतो भावेन मुक्तो बभूव अत्रेयं कथा—काशीस्थः कश्चिद्ब्राह्मणः जीर्णशूलरोगेण पीडितः बहुविधया चिकित्सयापि अप्राप्तारोग्यः श्रीकाशीविश्वेश्वरस्य सन्निधौ निराहारः स्थितः अथ कियद्दिनान्तरे रात्रौ स्वप्नादेशं लब्धवान् किमिति ? दक्षिणसौराष्ट्रदेशे जयपुरनाम्नि नगरे स्थितस्य राज्ञो विक्रमस्य अर्धभुक्तोच्छिष्टं पायसं भुक्त्वा अस्माद्रोगान्मुक्तो भविष्यसीति तस्मात् स ब्राह्मणस्तत आगत्य इह राज्ञे विक्रमदेवाय तत्सर्वं विज्ञप्तवान् तच्छ्रुत्वाऽयं राजा ब्राह्मणायोच्छिष्टं कथं दातव्यमिति सदसि पण्डितान् पृष्टवान् तत्सर्वं सभ्यैरालोच्य आघ्राणं ह्यर्धभोजनमिति निश्चित्य राज्ञे विज्ञप्तं तथानुष्ठिते स च ब्राह्मणः सद्यएव तस्माद्रोगान्निर्मुक्तो बभूवेति प्रवादः ॥

३०९. यदित्यादि ॥ यदीयकाले यस्य राज्ञः सम्बन्धिनि समये तदीय राज्यसमये इत्यर्थः गुप्तेश्वरस्तन्नामा शिवलिङ्गविशेषः गुप्तो गुप्ततया स्थितो यस्मिन् स भूधरः पूर्वोक्तः पर्वतः साद्भुतं साश्चर्यं यथा तथा गतेन प्राप्तेन पतितेनेत्यर्थः कुलिशेन वज्रेण यथा येन प्रकारेण उत्तरत्र तथा शब्दोपादानाद्-

३१०. अनेकखड्गोष्ट्रगजाश्वसंग्रही पुरे गृहे नित्यमहोत्सवाग्रही ।
य एव दुर्वृत्तजनस्य निग्रही सतां प्रसङ्गेषु सदाप्यनुग्रही ॥

३११. स कृष्णचैतन्यसहोदरावर स्वकृष्णचैतन्यसहोदरादरः ।
स कृष्णचैतन्यनिविष्टमानसः स कृष्णचैतन्यमठं विनिर्ममौ ॥

---

तयथेत्यध्याहृतः उदग्द्वारस्य पर्वतस्योत्तरदिग्भागस्थितस्य गुहामार्गस्य निरोधोऽवरोधनं पूर्वं प्रथमं यस्मिन् वेधकर्मणि तद्यथा तथा विद्धस्ताडितः सन् कृता मूर्ध्नि पद्धतिः सरणिर्यस्य सः, 'सरणिः पद्धतिः पद्यावर्त्मन्येकपदी'ति चेत्यमरः तथाभूतो यथा भवति तथैव तेन रूपेणैवाभूत् यथा कृतमस्तकमार्गः स्यात्तथैव उदग्द्वारनिरोधपूर्वकं विद्धो बभूवेत्यर्थः अत्रेदं वृत्तं अयं राजा एकदा शिवरात्रिमुद्दिश्य गुप्तेश्वरदर्शनार्थं जगाम तत्र च उदग्दिशि स्थितस्य गुहामार्गस्य सङ्कोचाज्जनगमने बह्वायासं समालोच्य ईश्वरं मार्गविकाशार्थं प्रार्थयते स्म आगामिनि ज्येष्ठे मासि वज्रपातेन पर्वतस्योर्ध्वप्रदेशे देवसन्निधिं प्रतिस्वच्छन्दगमनोपयोगिमार्गः स्फोटितः तदानीं महाशिलापातेन पूर्वस्थितोदग्बिलमार्गोऽपि मुद्रितः आसीदिति ॥

३१०. अनेकेत्यादि ॥ यः विक्रमः अनेकेषां खड्गानां गण्डाख्यानां 'गण्डके खड्गखड्गिना'वित्यमरः उष्ट्राणां गजानामश्वानां च सङ्ग्रही सञ्चयकर्ता पुरे नगरे गृहे राजभवने च नित्यं महोत्सवेषु आग्रह आदरोऽस्यास्तीति तथा दुर्वृत्तजनस्य दुर्विनीतजनस्य निग्रहो दण्डोऽस्यास्तीति निग्रह्येव केवलं दण्डदाता तथा सतां सज्जनानां प्रसङ्गेषु सङ्गतिषु सदापि सर्वदैव अनुग्रहोऽभ्युपपत्तिरस्यास्तीति तथा आसीदित्यर्थः 'अभ्युपत्तिरनुग्रह' इत्यमरः ॥

३११. स इति ॥ कृष्णो वासुदेवः चैतन्यो भगवदवतारविशेषः तथा च अनन्तसंहितायां ब्राह्मणं प्रति भगवदुक्तिः अवतीर्णो भविष्यामि कलौ निजगणैस्सह । शचीगर्भे नवद्वीपे स्वर्धुनीपरिवारिते इति तथा 'कृष्णश्चैतन्यो गोरांगो गौरचन्द्रो गौरहरिः । शचीसुतः प्रभुर्गौरो नामानि भक्तिदानि' मे इत्यादि तयोः सहोदरौ तुल्यौ सहोदरशब्दोऽत्र सादृश्यवाचकः उक्तञ्च कविकल्पलतायां 'बन्धुश्चौरः सुहृद्वादीकल्पः प्रख्यः प्रभः समः । देशीयदेश्यविभ्राभाः सोदराद्या इवार्थका इति अवरौ कनिष्ठौ स्वौ स्वकीयौ ज्ञातिरूपौ वा यौ कृष्णश्च चैतन्यश्च तन्नामानौ सहोदरौ भ्रातरौ तयोर्यं आदरः समादरस्तेन सहितः अत्रेदमवधेयं अस्य राज्ञः समये नवरङ्गपुरे कृष्णदेव, चैतन्यदेवनामानौ द्वौ पितृव्यपुत्रौ स्थितौ अन्यो कृष्णदेवस्तु निजवैमात्रेयभ्रातृपुत्रः अयं भैरवसिंहपुरे कियद्दिनं राज्यं कृत्वा लोकान्तरं गतः पितृव्यपुत्रावेव चिरकालं स्थितौ निस्सन्तानौ मृतौ चेत्यादिकं "जगेयवीयाञ्चरसिंहनामत" इत्येतच्छ्लोकव्याख्यानेऽभिहितं कृष्णचैतन्ययोर्भगवदवतारविशेषयोर्निविष्टं स्थितं मानसं मनो यस्य सः अतएव स विक्रमदेवः कृष्णचैतन्याभ्यां सहितं मठं देवगृहविशेषं 'मठश्छात्रादिनिलय' इत्यमरः विनिर्ममौ निर्मितवान् मण्डपाकारमेकं देवगृहं निर्माय तत्र राधाकृष्णयुगळं चैतन्यनित्यानन्दमूर्तिद्वयं च प्रतिष्ठाप्य चैतन्य मठनाम्ना प्रख्यापयति स्मेत्यर्थो बोध्यः अयं च मठः पण्यवीथिकामार्गसंलग्न एव वर्तत इति ॥

३१२. सजम्बुमुण्डावसथाधिवासिनीं पुरीं समानीय च मुण्डमार्दिनीम् ।
निवासयन् तां नवमण्डपालये पदार्चनात्खण्डयति स चापदः ॥

३१३. विभासते या भगवत्यभिख्यया सहायुधैः षोडशबाहुकोमला ।
अनल्पशिल्पैः सुशिलाप्रकल्पिताभिवन्द्य सर्वावयवैः समुज्ज्वला ॥

३१४. शिवस्य सिंहासनमध्यवर्तिनो निबद्धपद्मासनिकाऽपि मूर्धनि ।
स्वमस्तके विस्तृतपीठनिष्ठितं समाधिरूढं दधती मृडान्तरम् ॥

३१२ स इति ॥ स विक्रमः जम्बुमुण्डावसथाधिवासिनीं जम्बुमुण्डाख्यग्राममधिष्ठितां आवसन्त्यस्मिन्नित्यावसथो ग्रामः उपसर्गेव स इत्यथच् 'समौ संवसथग्रामा'वित्यमरः जम्बुमुण्डाख्ये ग्रामे य आवसथो विश्रामस्थानं गृहं वा तदधिवासिनीमित्यर्थः 'आसनावसथौ शय्या मनुव्रज्यामुपासना' वित्यत्र मनौ तथा व्याख्यानात् स च जाम्बु (जाम) मुण्डाख्यो ग्रामः जयपुरादुत्तरभागे चतुःक्रोशान्तरे वर्तते मुण्डोनामा सुरविशेषः तन्मर्दिनीं दुर्गां तां दुर्गामूर्तिमित्यर्थः पुरीं निजराजधानीं समानीय तस्माद्ग्रामादानाय्य तां च मूर्तिं नवमण्डपालये नूतनं मण्डपाकारं देवगृहं निर्माय तत्रेत्यर्थः निवासयन् संस्थापयन् पदार्चनात् तस्या देव्याः पादपद्माराधनाद्धेतोः आपदः विपत्तीः खण्डयति स्म तदाराधनेनैव विपद्भूस्तो नाभूदित्यर्थः इयं हि देवी मूर्तिश्चिरादेव जाम्बमुण्डाग्रामे स्थिता स्वराजधानीं तामानीय समाराधयितुं स्वप्नसमादिष्टो राजा तथानुष्ठितवानित्यवधेयम् ॥

किमाख्यया प्रसिद्धा किं स्वरूपा वा सेति तत्कथनमुखेन इतः प्रभृति तामेव षोडशभिः श्लोकैर्विशिष्य प्रस्तौति ॥

३१३. विभासत इत्यादि ॥ या देवी मूर्तिः भगवतीति अभिख्यानाम तया विभासते शोभते भगवतीति नाम्ना प्रसिद्धेत्यर्थः आयुधैः चक्रादिभिः सह सहितेत्यर्थः षोडशभिर्बाहुभिः भुजैः कोमला सुकुमारशरीरा अत्र शिलाकल्पितमूर्तेरपि देव्या अभेदोपचारात् कोमलत्वादिकमवगन्तव्यं एवमन्यत्रापि देवमूर्त्यादौ सचेतनोचितस्तवनकल्पनं कविभिः सर्वत्र सुप्रसिद्धं अनल्पैर्बहुविधैः शिल्पैः मूर्तिघटनाकौशल्यकर्मभिः सुशिलायां सुदृढकृष्णवर्णपाषाणमणौ प्रकल्पिता निर्मिताः अभिवन्द्याः स्तुत्याः ये सर्वावयवाः सकलनखमुखनासिकादिप्रतीकाः तैः समुज्ज्वला प्रस्फुटा ॥

३१४. शिवस्येति ॥ सिंहासनस्य निजपीठकल्पितसिंहद्वयस्येत्यर्थः मध्यवर्तिनो मध्ये विद्यमानस्य शिवस्य भैरवाकारस्य मूर्धनि मस्तकोपरिभागे निबद्धं पद्मासनं ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे इति लक्षणोपेतमासनं यया सा तथाभूतापि स्वमस्तके निजमस्तकोपरिभागे विस्तृतं विस्तृततया कल्पितं यत्पीठं तत्र निष्ठितं निविष्टं समाधिरूढं ध्यानासक्तं अन्यो मृडो मृडान्तरस्तं योगारूढभैरवरूपिणं शिवमित्यर्थः 'गिरिशो मृड' इति शिवपर्यायेऽमरः दधती दधाना एतत्सर्वं ध्यानबाह्यमपि यथा स्थितं वर्णितमस्माभिः तद्ध्यानस्वरूपमुक्तं चन्द्रिकायां शङ्खं चक्रधनुर्गदाङ्कुशवरप्रासान् कपालायसं वामैर्बाहुभिरन्यतोऽरि कुलिशं शूलाग्निपाशानपि खड्गं सायकतोमरे च दधती श्यामाभि·

३१५. परस्परस्पर्धितयाभिमानिनोर्मनोभवस्यापि भवस्य चोभयोः ।
तमेकमेत्यापरगर्वपातने वपुर्वहन्ती नवमेव यौवतम् ॥

३१६. पुरस्य जेतुर्विजयार्थिनोऽतनोः शुभेजयस्तम्भयुगे सुसंस्कृते ।
यदूरुयुग्मे स्वपदद्वयं स्फुटं दधाति पूजार्पितपङ्कजश्रियम् ॥

---

रामाकृतिर्ध्येया षोडशबाहुभिर्भगवती भूपाभरं बिभ्रतीत्यादि षोडशभुजाया ध्यानस्वरूपनिरूपकग्रन्थेषु क्वचिन्महिषोत्तमाङ्गस्थत्वं क्वचित्सिंहस्कन्धाधिरूढत्वमित्येव दृश्यते तदुक्तमाचार्यैः चक्रदरखड्गखेटक-शरकार्मुकशूलसंज्ञककपालैः ऋष्टिमुशलकुन्तनन्दकवलयगदाभिन्दिपालशक्त्याद्यैः उद्यद्विकृतिभुजाढ्या माहिषके सजलजलदसङ्काशा इति माहिषके माहिषसम्बन्धिमस्तके कं शिरोम्बुनोरिति कोशात् विकृतिभुजा षोडशभुजा अन्यत्रापि ज्वलदग्निनिभां सिंहस्कन्धारूढां भयावहां ध्यायेत् षोडशबाहुं तां सम्यक् वैरिविमर्दने इति अधिकन्तु राघवभट्टीयशारदाव्याख्याने द्रष्टव्यं एवं चात्र शिला पट्टोपरिभागे गजखेचरादिप्रतिकृतयोऽपि कल्पितास्सन्ति तत्सर्वमपि देवीमूर्तिबाह्यमिति द्रष्टृभिः प्रतिपत्तव्यम् ॥

अत्र तस्या एव देव्याः पादादिमस्तकान्तं वर्णयिष्यन् तत्रादौ तच्छरीरमानं भङ्ग्यन्तरेण स्फुटयति ॥

३१५. परस्परेति ॥ परस्परस्यान्योन्यस्य स्पर्धितया सङ्घर्षितया हेतुना स्पर्धसङ्घर्षे इति धातुः सङ्घर्षः पराभिभवेच्छा इति व्याकरणं अभिमानिनोः गर्वितयोः मनोभवस्य कन्दर्पस्य भवस्य शिवस्य च उभयोरपि मनोभवभवयोरपि मध्ये इत्यर्थः निर्धारणे षष्ठी सप्तमी वा एकं तयोरन्यतरं तं मनोभवं भवं वाएत्य प्राप्य सहायीभूयेति यावत् अपरस्य तयोरन्यतरस्यैव भवस्य मनोभवस्य वा गर्वस्याभिमानस्य पातने विध्वंसने विषये एव नवं नूतनं अभूतपूर्वमिति यावत् युवत्या इदं यौवतं यौतः शबन्ताद्युवतीशब्दात्तस्येदमित्यण् यूनस्तिरिति त्यन्तादणि कृते भस्याढे तद्धिते इति पुंवद्भावे अप्तितिप्रकृतिभावे च यौवनमिति वा पाठः तत् वपुः शरीरं नवयौवनविशिष्टस्त्रीस्वरूपमित्यर्थः वहन्ती दधानेव स्थितेत्यर्थः तथा च सेयं भगवती मूर्तिः षोडशवार्षिकस्त्रीसमानशरीरपरिमाणेति फलितम् ॥

३१६. पुरस्येति ॥ पुरस्य पुरत्रयस्य मयदानवरचितस्येत्यर्थः त्रिपुरासुरस्य वा जेतुः विजयिनः अत्र पुरशब्देन नामैकदेशग्रहणे नाममात्रस्यापि ग्रहणमित्यनुशासनात् यथा भीमपदेन भीमसेन-रूपार्थस्य बोधस्तद्वत् त्रिपुरस्य बोधः त्रिपुरविजयिनः शिवस्येत्यर्थः विजयं पराभवमर्थयत इति विजयार्थी तस्य अतनोः कन्दर्पस्य शुभे शोभने मङ्गलस्वरूपे वा सुसंस्कृते सुष्ठु संस्कृत्य स्थापिते स्तम्भयोर्युगं स्तम्भयुगं जयार्थस्तम्भयुगं तस्मिन् विजयस्तम्भद्वयस्वरूपे इत्यर्थः यदूरुयुग्मे यस्या भगवती मूर्तेः सक्थियुगळे 'सक्थि क्लीबे पुमानूरु'रित्यमरः स्वपदद्वयं स्वकीयपादयुगळं पूजया अर्पिते पूजार्पिते ते च ते पङ्कजे च तयोः श्रियं शोभां स्फुटं प्रव्यक्तं यथातथा दधाति बिभर्ति बद्धपद्मासनिकायास्तस्याः भगवती मूर्तेः ऊरुयुगळोपरि पादपद्मद्वयस्य प्रव्यक्तत्वात् तथारोपिते तस्मिन् तस्य तथा निदर्शनत्वमिति भावः ॥

३१७. प्रभाविनं भर्गमथ स्मरन् स्मरः सशङ्कमूरुद्वयदुर्गमध्यगः ।
प्रकल्प्य मार्गार्गळिके व्यतिष्ठिते तदीयजङ्घे किमुतं जिघांसति ॥

३१८. स्वपृष्ठसौन्दर्यचयं हि तत्कटिं निगृह्य मुष्ट्यातुलयन् तया विधिः ।
तदंशलेशासममेव वीक्ष्य तत्सुनाभिकूपे निखिलं किमक्षिपत् ॥

३१९. विभेद्य मूर्तिं स्वतनौ तथा हरौ द्विधा स्थितं शम्भुमियं प्रभाभरैः ।
प्रकृष्य पिण्डीकृतमीर्ष्यया प्रियं स्तनच्छलान्मेलयतीव वक्षसा ॥

---

३१७. प्रभाविनमिति ॥ अथ तथाविधविजयसाधनसम्पादनानन्तरं स्मरः कन्दर्पः भर्गं शिवं प्रभाविनं नेत्रानलेन स्वशरीरदाहकत्वेन प्रतापशालिनं कृत्वा स्मरन् चिन्तयन् अतएव सशङ्कं पुनः *स मां पराभवेदिति* शङ्कया सह वर्तमानं यथातथा ऊरुद्वयदुर्गमध्यगः तस्या भगवतीमूर्तेः ऊरुद्वयमेव दुर्गं प्रावरणविशेषः तन्मध्यस्थितः सन् व्यतिष्ठिते पद्मासननिबद्धत्वात् व्यतिभेदेनस्थिते तदीयजङ्घे तस्या भगवत्याः सम्बन्धिजङ्घायुगळमित्यर्थः मार्गार्गळिके दुर्गप्रवेशनमार्गरोधकसुदृढा-र्गळाद्वयस्वरूपं तद्युगलमित्यर्थः प्रकल्प्य प्रकर्षेण कल्पयित्वा तं भर्गमेव जिघांसति हन्तुमिच्छति किमु इत्युत्प्रेक्षा हन्तेः सनिद्वित्वं कुहोश्चुरित्यभ्यासस्य चुत्वं सन्यत इतीत्वं अभ्यासाच्चेति कुत्वं अज्झनग-मांसनीति दीर्घः दुर्बला हि जिगीषवः परदुष्प्रवेश्यदुर्गाद्याश्रयन्तीति भावः तथा च हरविजया-र्थिनः कन्दर्पस्य स्थानतया तस्य सर्वोत्कृष्टत्वं ध्वनितं एतेनोरुपर्यन्तं वर्णितं वेदितव्यम् ॥

कटिं वर्णयति ॥

३१८ स्वेत्यादि ॥ विधिर्लोकविधाता ब्रह्मा, 'विधाता विश्वसृड्विधि'रित्यमरः मुष्ट्या निजैककर-मुष्टिबन्धेन तत्कटिं तस्या भगवती मूर्तेः कटिप्रदेशं निगृह्य धृत्वा एतेन तत्कट्या मुष्टिमेयत्वं प्रदर्शितं तया कट्या तत्कटिनिष्ठसौन्दर्यगुणेनेत्यर्थः गुणगुणिनोरभेदोपचारात् अन्यथा तयोर्विजातीयत्वेन तुलनाऽयोग्यत्वात् यद्वा सर्वनाम्नः बुद्धिस्थवाचिकतया तयेत्यत्र तच्छब्देन कटिनिष्ठरम्यतागुणो वाच्यः रम्यता सौन्दर्य मित्यनर्थान्तरं अथवा सौन्दर्यचयपदेन सौन्दर्यवद्वस्तुचयो लक्ष्यः गुणिनं विहाय गुणस्यासत्त्वात् ततश्च तच्छब्देन कटिर्वाच्या तया साकं स्वेन सृष्टानि निर्मितानि यानि सौन्दर्याणि ब्रह्माण्डोदरस्थितानि तेषां चयं समूहं तुलयन् समीकुर्वन् हीत्यवधारणे तदंशलेशासमं तस्या कटेरंश-लेशस्य एकदेशलवस्य असमोऽसमानः तत्कट्येकदेशसौन्दर्यलवस्याप्यसमान इत्यर्थः पूर्ववद्योजना तं तथाभूतं स्वसृष्टसौन्दर्यचयमेव वीक्ष्य दृष्ट्वा तस्या भगवतीमूर्तेः शोभननाभिरेव कूपं तस्मिन् तस्य कटिसमीपवर्तित्वादिति भावः निखिलं तमेव सौन्दर्यचयं अक्षिपत् निचिक्षेप किमित्युत्प्रेक्षा एतेन भगवतीमूर्तेः कटिसौष्ठवं विश्वातिशायि सौन्दर्यवत्तया निरुपमं नाभिकूपं ब्रह्माण्डान्तर्वर्ति निखिलसौन्दर्य-निधानमिति च फलितम् ॥

वक्षः प्रदेशं वर्णयति ॥

३१९. विभेद्येति ॥ इयं भगवती वक्षसा निजोरसा प्रयोज्यकर्त्रा प्रभाभरैः कान्तिपटलैः करणैः मूर्तिं ऐश्वरं वपुः विभेद्य द्विधा विभक्तीकृत्य एको भागः स्वतनौ निजपार्वतीशरीरे अर्धनारीश्वरत्वादिति

३२०. निरन्तरे स्निग्धकुचद्वयान्तरे विभाति मातुर्भुजगोपवीतकम् ।
विभागसीमेव समं पयः पिबद्द्विपास्य षड्वक्त्रविवादभञ्जिनी ॥

३२१. चतुर्दशानां जगतां महेशितुर्गळस्य चेच्छाफलमाल्यकल्पिकाः ।
चतुर्दश द्वे च सुपाणिपल्लवा विभान्ति यस्या भुजकल्पवल्लिकाः ॥

भावः तथा अपरो भागः हरो श्रीमन्नारायणे हरिहरयोरेकात्मत्वादिति भावः तथा च "अर्धं दानववैरिणा गिरिजयाप्यर्धं शिवस्याहृतमि"त्यादिप्रयोगः तथा द्विधास्थितं द्विप्रकारीभूय प्रवृत्तं प्रियं निजभर्तारं अतएव ईर्ष्यया अक्षान्ततया प्रकृष्य प्रकर्षेणाकृष्य तदुभयभागमेकत्रीकृत्येत्यर्थः स्तनच्छलात् कुचयोर्व्याजात् अपिण्डो पिण्डो सम्पाद्य कृतः पिण्डीकृतः तं तथाभूतं शम्भुं शिवं मेलयति मिश्रयतीव स्तनयोः शम्भुसादृश्यात् द्विधास्थितस्य तस्य तथैक्यं सम्पादयति किमित्युत्प्रेक्षा एतेन स्तनयोः स्नैग्ध्यं नैरन्तर्यं वक्षसश्च लावण्यातिशयश्च ध्वनितम् ॥

३२०. निरन्तर इति ॥ मातुः समस्तजगतः द्विपास्य षड्वक्त्रयोर्वा जनन्यास्तस्या भगवत्याः निरन्तरे नास्ति अन्तरमवकाशो यस्मिन् तस्मिन् तथाभूते स्निग्धयोर्मसृणयोः कुचयोर्द्वयस्यान्तरे मध्यप्रदेशे । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये, छिद्रात्मीयविना बहिरवसरमध्येऽन्तरात्मनि' चेत्यमरः भुजगः सर्पएव उपवीतं ततः स्वार्थे कन् नागयज्ञोपवीतमित्यर्थः विभाति विशेषेण शोभते कीदृगिव तदेवाह विभागेत्यादि समं समकालं पयः पिबतोः स्तन्यपानं कुर्वतोः द्वाभ्यां करपुष्करमुखाभ्यां पिबतीति द्विपः तस्य आस्यमेवास्यं मुखं यस्य स गजाननः षड्वक्त्रः षडाननश्च 'कार्तिकेयो महासेनः शरजन्मा षडानन' इत्यमरः तयोः यो विवादः एकस्य द्विपास्यत्वेन अपरस्य षड्वक्त्रत्वेन च उभयोरपि ममैवैतौ कुचौ स्तन्यपानार्हौ इति अहमहमिकया वाक्कलहः तस्य भञ्जिनी निवर्तिनी विभागस्य बन्टस्य सीमा मर्यादेव एतदवधिकएव तव स्तन्यपानाधिकार इति निबद्धसीमेव स्थितमित्यर्थः ॥

३२१. चतुर्दशानामिति ॥ यस्याः भगवत्याः भुजकल्पवल्लिकाः विभान्तीत्यन्वयः किंभूतास्ताः चतुर्दशानां जगतां चतुर्दशभुवनानां तथा महांश्चासौ ईशिता महेशिता तस्य महेश्वरस्य गळस्य शिवकण्ठदेशस्य चेत्यर्थः इच्छाविषयभूतानि फलानि इच्छाफलानि तेषां माल्यस्य कुसुमस्रजश्च 'माल्यं कुसुमतत्स्रजो'रिति मेदिनी । कल्पिका विधात्र्यः अत्र तृजकाभ्यां कर्तरीति षष्ठीसमासप्रतिषेधेऽपि याजकादित्वात्समासः क्रियानुगतिमास्थाय लोके ख्यातिमुपागताः ये कान्ताः पाचकाद्यास्ते द्रष्टव्या याजकादिषु इति गणरत्नकृतः यद्वा इच्छाफलमाल्ययोः कल्पः कल्पनाविधानमिति यावत् यतः याभिरिति वा ततः 'स्वार्थिकः कः कल्पे विधिक्रमा'वित्यमरः अतएव चतुर्दशद्वे च चतुर्दशभुवनानामिच्छाफलविधानार्थं चतुर्दश महेशगळमाल्यविधानार्थं द्वे एवं सम्भूय षोडशसङ्ख्याका इत्यर्थः शोभनाः पाणयएव पल्लवा यासां तथाभूताः भुजाएव कल्पवल्ल्यः ततः स्वार्थे ठक् विभान्ति विशेषेण शोभन्ते ॥

३२२. भवेन्महार्घ्यो यदि कम्बुरर्चितोऽम्बुजेन साक्षाद्विधुमण्डलेन वा ।
ततो लसच्चारुमुखेन साङ्गिना गळस्य तस्याः कलयेत्कियत्तुलाम् ॥

३२३. ललाटपट्टाष्टमिकेन्दुमूर्ध्वतो ग्रसज्जटास्तोमतमः समीक्षणात् ।
किमास्यमस्यास्तरलो नवारुणोऽधरौष्ठसिन्दूरमिषाद्विशत्यसौ ॥

३२४. अभीक्ष्णमक्ष्णोर्द्युनिशोः प्रकाशिनोः सुमेरुदण्डश्रियमन्तरास्थितेः ।
दधत्स्व घोणाग्रगमौक्तिकच्छलाज्जगन्मयी खेलयति ध्रुवं ध्रुवम् ॥

---

३२२. भवेदिति ॥ महार्घायायं महार्घ्यः दक्षिणावर्तादिगुणयुक्तत्वेन बहुमूल्य इत्यर्थः अथ च अर्घायेदमर्घ्यं पूजार्थद्रव्यं 'मूल्ये पूजा विधावर्घे' इत्यमरः पादार्घाभ्यां चेति यत् महत् विशेषरूपमर्घ्यं यस्मिन् सः विशेषार्घ्यसंस्कारक्रमेण संस्कृत्य स्थापित इत्यर्थः तथाभूतः कम्बुः शङ्खः 'शङ्खः स्यात्कम्बुरस्त्रिया' मित्यमरः अम्बुजेन पद्मपुष्पेण अथ साक्षात् प्रत्यक्षभूतेन विधुमण्डलेन षोडशकलात्मक सोममण्डलेन वा अर्चितः पूजितो भवेद्यदि स्याच्चेत् ततः तर्हि तस्याः भगवत्याः लसत् प्रफुल्लं चारु मनोहरं च यन्मुखं वदनं तेन सङ्गिनः संसर्गिणः गळस्य कण्ठप्रदेशस्य कियन्तीं कियत्परिमितां तुलां साम्यं स्वल्पसाम्यमित्यर्थः कलयेत् प्राप्नुयादित्यर्थः देवपूजायां शङ्खेऽर्घ्यस्थापनकर्मणि पुष्पादिना पूजनं क्रमेणाग्निसूर्यसोममण्डलत्रयपूजनं च विहितमस्ति तथा मुखस्य चन्द्रपद्मसाम्यं गळस्य शङ्ख साम्यं च सुप्रसिद्धं तथा चात्र कम्बौ अम्बुजस्य साक्षाद्विधुमण्डलस्य वा सम्बन्धाभावेऽपि सम्बन्धित्वसम्भावनया उपमानभूतयोस्तयोः वैशिष्ट्येन कियत्तुलां कलयेदिति सम्भावनया उपमेयत्वकल्पनात् असम्बन्धे सम्बन्धरूपातिशयोक्त्याऽनुप्राणितोऽयं प्रतीपालङ्कारो वेदितव्य इति ॥

३२३. ललाटेति ॥ अस्याः भगवत्याः ललाटपट्टो भालप्रदेशः एव आष्टमिकेन्दुः अष्टमी सम्बन्धी चन्द्रः तं ऊर्ध्वत उपरिभागात् ग्रसतो ग्रासं कुर्वतो जटास्तोम एव तमो राहुस्तस्य समीक्षणात् सम्यक् दर्शनाद्धेतोः तरळोऽस्थिरः अयं भावः कदाचिदपि पर्वण्येव पूर्णचन्द्रं राहुर्ग्रसति तस्य च भूच्छायारूपत्वेन अधोभागादेव सङ्क्रमः अत्र च ललाटभागस्य खण्डचन्द्रसाम्येन आष्टमेन्दुरूपत्वात् जटापुंजस्यापि कृष्णवर्णत्वेन राहुसाम्यात् तद्रूपस्य राहोस्तद्रूपस्येन्दोरूर्ध्वतएव ग्रासं कुर्वतस्तथाभूताकालिकप्रवृत्तिरूपाद्भुतदर्शनेन मामप्ययं ग्रसिष्यतीति भिया तरळितचित्त इत्यर्थः तथाभूतोऽसौ परिदृश्यमानः नवारुणो नवोदितसूर्यः अधरौष्ठसिन्दूरमिषात् ओष्ठाधरपरिलिप्त सिन्दूरव्याजात् आस्यं अस्या भगवती मूर्तेर्मुखविवरं विशति स्वात्मसङ्गोपनार्थं प्रविशति किमित्युत्प्रेक्षा एतेन भगवतीमूर्तेः ललाटोपरि लम्बमाना जटाः ओष्ठाधरान्तरे च सिन्दूरं विलिप्तमिति च सूचितम् ॥

३२४. अभीक्ष्णमिति ॥ जगन्मयी जगद्रूपा सा भगवतीमूर्तिः अभीक्ष्णमनवरतं द्युश्चनिशाच द्युनिशे द्युशब्दोऽत्र दिवसवाची तयोर्दिवाराव्योः प्रकाशिनोः प्रकाशकयोः सूर्यचन्द्ररूपयोरित्यर्थः अक्ष्णोर्नयनयोः देव्यादक्षनेत्रस्य सूर्यात्मकत्वात् वामनेत्रस्य चन्द्ररूपत्वात् दिवारात्रिप्रकाशहेतुभूतयोस्तयोरित्यर्थः अन्तरा मध्येस्थितेर्विद्यमानत्वात् अतएव सुमेरुरेव दण्डस्तस्य श्रियं सूर्यचन्द्रमसो-

३२५. पुनस्तनुष्मान् स भवेदिहेतियत्कपोलनासा नयनभ्रुकैतवात् ।
विधिर्निधत्ते हि फलेषुधिज्यकाधनूंषि विध्वस्ततनोर्मनोभुवः ॥

३२६. स्वभक्तवक्त्रोद्गतदुःखसन्ततिं निगृह्य विस्तारितकर्णपाशयोः ।
कटाक्षकौक्षेयकधारयारयादयामयी छेत्तुमियं किमिच्छति ॥

---

राच्छादकत्वेन दिनरात्रिव्यवस्थापकमेरुदण्डशोभामित्यर्थः 'मेरुः सुमेरुर्हेमाद्री'त्यमरः दधती धारयन्ती या स्वघोणा निजनासिका गमकत्वात्समासः 'घोणा नासा च नासिके'त्यमरः तस्या अग्रगं यन्मौक्तिकं मुक्ताफलं तदेव च्छलं तस्मात् नासामणिव्याजादित्यर्थः ध्रुवं ध्रुवाख्यताराविशेषं खेलयति विलासयति ध्रुवं निश्चितं उत्प्रेक्षाव्यञ्जकोयं शब्दः उक्तञ्च 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रेक्षा व्यञ्जकाः शब्दा इव शब्दोऽपि तादृशः ॥' इति मेरोरुपरिभागे ध्रुवमण्डलं प्रसिद्धं तथा च जगद्रूपाया-स्तस्यास्तथोपकरणं युक्तमिति भावः ॥

३२५ पुनरिति ॥ विधिर्विधाता सः हरनेत्रानलदग्धशरीरो मनोभूरित्यर्थः इह भगवतीमूर्तौ पार्वतीरूपा या एतस्याविषये वा परिणेष्यति पार्वतीं यदेत्यादि प्रामाण्यादित्यर्थः पुनः पार्वतीपरिणया-नन्तरमित्यर्थः तनुष्मान् मूर्तिमान् भवेत् स्यादिति सम्भावनयैवेत्यर्थः यस्या भगवत्याः कपोलौ गण्डः नासा नयने भ्रुवौ च कपोल नासा नयनभ्रुप्राण्यङ्गत्वादेकवद्भावः प्रतिमायामपि देव्या अभेदव्यपदेशात् प्राणप्रतिष्ठादिक्रियाविधानाच्च प्राणित्वेबाधकाभावात् प्राण्यङ्गत्वाविवक्षायामपि समाहारे द्वन्द्वैकवद्भावः स नपुंसकमिति क्लीबत्वं ह्रस्वो नपुंसकइति ह्रस्वत्वञ्च तत्कैतवात् तद्व्याजात् द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत इति न्यायात् कैतवशब्दस्य प्रत्येकं योगः तेन कपोलकैतवात् नासाकैतवा-दित्यादि ज्ञेयं विध्वस्ता हरनेत्रानलेन दग्धा तनुः शरीरं यस्य तस्य मनोभुवः कन्दर्पस्य फलं फलकं इषुधिस्तूणीरं ज्याएव ज्यका मौर्वी 'मौर्वी ज्या सिञ्जिनीगुण' इत्यमरः धनुः कार्मुकं च तानि क्रमेण कपोलकैतवात् फलकं नासाकैतवादिषुधिं नयनकैतवात् ज्यकां भ्रुकैतवाद्धनुश्च निधत्ते स्थापयति हीत्यवधारणे तथा चास्या वदनं कामोपकरणस्थानभूतत्वात् सर्वोत्कृष्टसौष्ठवशालीति ध्वनितम् ॥

३२६. स्वेत्यादि ॥ दयामयी दयाप्रचुरा इयं भगवती कटाक्षोपाङ्गदर्शनमेव कौक्षेयकः खड्गः 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः कौक्षेयको मण्डलाग्रः करवालः कृपाणवदि'त्यमरः तस्य धारया परम्परया विस्तारितौ कर्णावेव पाशौ तयोरुपश्लिष्टामित्यर्थः स्वभक्तानां स्वकीयभक्तजनानां वक्त्रेभ्य-उद्गतानि यानि दुःखानि तेषां सन्ततिं समूहं निगृह्य ताभ्यां कर्णपाशाभ्यामेवेत्यर्थः रयात् वेगात् अनालस्यादेवेत्यर्थः छेत्तुं तामेव दुःखसन्ततिं खण्डयितुं इच्छति किमित्युत्प्रेक्षा तेन च तस्या दयामयी पदं सार्थकमिति भावः एवं तावत् पादादिकेशान्तं वर्णितं वेदितव्यं अधरौष्ठवर्णनप्रस्तावे कपोलजट-योर्वर्णितत्वान्नात्र पुनः प्रकटनं देवादीनां पादादितो वर्ण्यत्वमुक्तं यथा 'मानवामौलितोवर्ण्यादेवा-श्चरणतः पुनः' इति ॥

३२७. नवाम्बुवाहद्युतिभृत्तनुस्तडित्प्रदीप्तनानाभरणैः समुल्बणा ।
समर्हणीया द्रुहिणादिदैवतैः प्रहीणदोषा महिषी महेशितुः ॥

३२८. उपासनायात्मनिषेवणार्थिनां कृपावतीर्णा परिपूर्णविग्रहा ।
अगम्यरूपा निगमागमेषु सा निषेव्यतां भक्तिपरैर्जगत्प्रसूः ॥

३२९. स पञ्चजानिर्मनुजाधिपस्ततस्तदीयपादाब्जनिमज्जितान्तरः ।
अजीजनत्स्वादिममध्यमस्त्रियोः श्रियोज्ज्वलान् द्वौ च तथैकमात्मजान् ।

---

शरीरशोभां वर्णयति ॥

३२७. नवेत्यादि ॥ महेशितुः महेश्वरस्य महिषी कृतपट्टाभिषेकरूपा सा भगवतीत्यर्थः 'कृताभिषेका महिषी'त्यमरः नवाम्बुवाहस्य नूतनजलधरस्य द्युतिं बिभर्तीति तथाभूता या तनुः शरीरं स्निग्धकृष्णपाषाणमणिघटितत्वादिति भावः तस्यां तटिदिव विद्युदिव प्रदीप्तानि यानि नानाभरणानि केयूरकटकमुक्ताहारादि बहुप्रकारभूषणानि तैः समुल्बणा सम्यक् प्रव्यक्ता 'स्फुटं प्रव्यक्तमुल्बण' मित्यमरः अतएव प्रहीणाः परित्यक्ता दोषा दुर्लक्षणरूपा यस्याः सा सर्वलक्षणसम्पन्नेत्यर्थः द्रुहिणादिदैवतैः ब्रह्मादिदेवैः समर्हणीया पूजनीया अतएव सर्वैरपि चतुर्वर्गेप्सुभिराराधनीयेति भावः ॥

ननु ब्रह्मरूपिण्या भगवत्याः शरीरित्वमेव कुतः कुतो वा तस्या उपास्यत्वमित्यत आह ॥

३२८. उपासनायेति ॥ आत्मनः स्वस्याः ब्रह्माधिष्ठानशक्तिरूपाया इत्यर्थः परमात्मरूपिण्या वा न हि परमात्मनः सर्वेश्वरस्यापि शक्तेर्वास्तवो भेदः तदुक्तं 'पावकस्योष्णतेवेयमुष्णांशोरिव दीधितिः । चन्द्रस्य चन्द्रिकेवेयं शिवस्य सहजा ध्रुवे'ति ॥ निषेवणं सेवा तदेवार्थः प्रयोजनमेषामस्तीति तथा आत्मनिषेवणमर्थयन्ते इति वा तेषां स्वभक्तानामित्यर्थः उपासनाय सेवार्थं उपासनार्थं भक्तानां ब्रह्मणोरूपकल्पनेति स्मृतेः कृपयावतीर्णा आविर्भूता सती परिपूर्णविग्रहा गृहीतपूर्णब्रह्मविग्रहेत्यर्थः ततश्चास्याः शरीरित्वमिति भावः ननु शरीररहितैवोपास्यतामित्यत्राह अगम्यरूपेति निगमो वेदः आगमं तद्भिन्नं शास्त्रमात्रं तेषु सर्वेष्वपि अगम्यरूपा दुर्ज्ञेयस्वरूपा तथा च केवलज्ञानगम्यायाः सूक्ष्मरूपायास्तस्याः प्राधान्येऽपि तत्र तत्तदुपासकानां दर्शनादिव्यवहारायोग्यत्वात् स्थूलरूपकल्पनमिति भावः ननु ब्रह्मविष्णुरुद्रादिमूर्तिभेदानामपि तथा सत्त्वात्तान् विहाय किमर्थमियं सेवनीयेत्यत आह जगत्प्रसूरिति ब्रह्मविष्णुरुद्रादीनां सर्वेषामपि जनयित्रीत्यर्थः 'जनयित्री प्रसूर्माता जननी'त्यमरः अतएव सा तथाभूता भगवतीभक्तिरेव परं प्रधानं येषां तैः सर्वैरपि चतुर्वर्गेप्सुभिरित्यर्थः निषेव्यतां आराध्यतां एकैकगुणोपाधि ब्रह्मविष्णुरुद्रापेक्षया साम्यावस्थोपाधिकाया भगवत्या एवोपासनं युक्तं साम्यावस्थायाः सर्वकारणभूतायाः सर्वोत्कृष्टत्वादिति भावः 'सत्त्वं रजस्तम इति गुणत्रयमुदाहृतं । साम्यावस्थेति या तेषामव्यक्तां प्रकृतिं विदु'रिति ॥

अथ भगवत्यानयनानन्तरं राज्ञः पुत्रप्राप्तिस्तदाह ॥

३२९. स इति ॥ पञ्च जाया यस्य सः पञ्चजानिः जाया यानि ङिति जायान्तस्य बहुव्रीहेर्निङादेशः लोपो व्योर्वलीति यलोपः पञ्चभार्य इत्यर्थः 'भार्या जाये'त्यमरः सः पूर्वोक्तविक्रमदेवनामा मनुजाधिपो

३३०. सलक्ष्मणोभूतनयावनोचितो गुणप्रकर्षाज्जनकस्य हर्षदः ।
पितामहख्यापितपूर्वमात्मनो जगाम रामाह्वयमत्र पूर्वजः ॥

३३१. निजेऽग्रजे भ्रातरि भक्तिमान् ननूद्धतः सुमित्राधिकहर्षवर्धनः ।
अनन्ततेजो बलबुद्धिसंयुतोऽनुजोऽस्य विश्वम्भर इत्यभण्यत ॥

३३२. यशोदयाप्यायितमूर्तिरन्यजः स कृष्णचन्द्रोऽलभतात्मजं च यः ।
प्रबन्धरत्यास्तृतपाटवं निजं प्रनाटयन्तं भुवि नाम विक्रमम् ॥

---

नरपतिः तस्या भगवत्या इमे तदीये ये पादपद्मे तयोर्निमज्जितं निवेशितमन्तरात्मा यस्य येन वा स तथाभूतः सन् अतएव स्वादिममध्यमस्त्रियोः स्वकीययोः पत्नीनां मध्ये प्रथमतृतीययोर्भार्ययोरित्यर्थः श्रिया शोभया उज्ज्वलान् प्रकाशमानान् द्वौ च तथा एकं च एवं सम्भूय त्रीनित्यर्थः आत्मजान् पुत्रान् अजीजनत् प्रथमायां पट्टमहिष्यां द्वौ पुत्रौ तृतीयायामेकं पुत्रञ्च क्रमेण जनयामासेत्यर्थः ॥

३३० सलक्षण इति ॥ अत्र एषु त्रिषु मध्ये इत्यर्थः पूर्वजोऽग्रजः पट्टमहिष्यामुत्पन्नः प्रथमः पुत्र इत्यर्थः सलक्षणः सकलराजलक्षणसम्पन्नः अन्यत्र सौमित्रिणा सहितः भूतानां प्राणिनां नयेन नीतिमार्गेण अवने रक्षणे विषये उचितो योग्य इत्यर्थः अन्यत्र भूतनयायाः सीतादेव्या अवनोचितः गुणानां प्रकर्षादुत्कर्षात् निखिलराजगुणोत्कृष्टत्वादित्यर्थः जनकस्य पितुः हर्षदः प्रीतिजनकः अन्यत्र शिवधनुर्गुणाकर्षणात् जनकनाम्नो राजर्षेर्हर्षदः तथाभूतः पूर्वजो दाशरथिरिवेति व्यज्यते पूर्वं पितामहे स्वपितुः पितरि ख्यापितं आख्यात्वेन प्रकाशितं अभिजनैरिति शेषः पितामहख्यापितपूर्वं तत् सुप्सुपेति समासः भूतपूर्वे चरडिति निर्देशात्पूर्वशब्दस्य परनिपातः दृष्टपूर्वज्ञातपूर्वेत्यादि प्रयोगदर्शनात् अन्यत्र ब्रह्मणा कथितपूर्वं आत्मनः स्वस्य राम इति आह्वयः नाम तं जगाम रामचन्द्रदेव इत्याह्वयं प्राप्तवानित्यर्थः ॥

३३१ निज इति ॥ अस्य ज्येष्ठस्य रामचन्द्रस्य अनुजः कनिष्ठभ्राता निजे स्वकीये अग्रजे ज्येष्ठे भ्रातरि रामचन्द्रे भक्तिमान् लक्ष्मण इवेति व्यज्यते उद्धतोऽविनीतो ननु विनयसम्पन्न आसीदित्यर्थः अन्यत्र धीरोद्धतनायकत्वादौद्धत्ययुक्तः नन्वित्यवधारणे सुमित्राणां सत्सुहृदां अधिकहर्षवर्धनः अत्यानन्दजनकः अन्यत्र सुमित्राया निजमातुः अनन्तेनापरिमितेन तेजसा बलेन बुद्ध्या च संयुतो युक्तः अन्यत्र अनन्तस्य शेषदेवस्य तस्यैव लक्ष्मणावतारत्वात् अतएव विश्वम्भर इति अभण्यत उच्यते स्म विश्वम्भरदेव इति नाम्ना आहूयतेस्मेत्यर्थः विश्वं बिभर्तीति व्युत्पत्त्याशेषोपि तत्पदवाच्य इति भावः एतौ द्वौ सहोदरौ तत्र ज्येष्ठो राजा रामचन्द्रदेवः चतुस्त्रिंशदधिकाष्टादश (१८३४) शताब्द्यामुत्पन्नः ॥

३३२. यश इति ॥ अन्यस्यां तृतीयमहिष्यां जातोऽन्यजः अन्यत्र देवक्यां जातः यशसा शौर्यप्रशस्यादयया परदुःखापनोदनेच्छया च आप्यायिता वर्धिता मूर्तिः शरीरं यस्य सः अन्यत्र यशोदयातन्नाम्न्या नन्दपत्न्या पालितशरीरः सप्रसिद्धः उत्तरत्र यच्छब्दोपादानादत्र स इति वा निर्देशः कृष्णचन्द्रः वासुदेव इवेति व्यज्यते कृष्णचन्द्रदेवनामा बभूवेत्यर्थः यश्च कृष्णचन्द्रः आत्मजं पुत्रं कन्दर्पमिवेति

३३३. अथैकदान्तः पुरगर्भगं नृपं समेत्य कौचित्प्रथमाश्रमाश्रितौ ।
तिरोदधाते स्म पुरः कृतस्मितौ यदैव देहं विजहौ तदैव सः ॥

---

व्यज्यते तस्यापि आत्मजन्यत्वात् अलभत प्राप किंभूतमात्मजं तमेवाह प्रबन्धेत्यादि निजं स्वकीयं प्रबन्धेषु संस्कृतादि भाषा निबद्ध काव्यनाटकादिरूपेषु या रतिः प्रीतिस्तया आस्तृतं विस्तारितं यत्पाटवं पटुत्वं तत् भुवि पृथिव्यां नाटयन्तं सर्वत्रापि भूमण्डले निजविद्वत्त्वनानाभाषाविस्वकवित्यादि सामर्थ्यं प्रकटयन्तमित्यर्थः नाम्ना विक्रमस्तं विक्रमदेवनामानमित्यर्थः कन्दर्पपक्षे प्रबन्धाः सुरतप्रयोगाः ते च चतुःषष्ठिप्रकाराः पञ्चसायकादि ग्रन्थोक्तरूपाः तेषु षोडशबन्धाः प्रधानाः ते यथा रतिमञ्जर्यां पद्मासनो नागपदो लतावेष्टोऽर्धसम्पुटः । कुलिशं सुन्दरं चैव तथा केशर एव च । हिल्लोलो नरसिंहोपि विपरीतस्तथा परः । क्षुब्धो वै धेनुकश्चैव समुत्कण्ठस्ततः परः । सिंहासनो रतिर्नागो विद्याधरस्तु षोडश इति तल्लक्षणानि तत्रैव द्रष्टव्यानि तेषु रतां निजपत्न्यां रतीदेव्यां आस्तृतं पाटवं येन तं प्रबन्धप्रधानासु रतिषु रतकर्मसु आस्तृतपाटवं लोके इति वार्थः अतएव भुवि पृथिव्यां निजं विक्रमं जगद्वशकारित्वरूपं प्रनाटयन्तं नामेति सम्भावनायां अयं कृष्णचन्द्रदेवः षट् त्रिंशदधिकाष्टादश (१८३६) शतपरिमिते क्रिष्टाब्दे समुत्पन्नः पितुर्विक्रमस्यानन्तरं राजसिंहासनमारूढस्य ज्येष्ठभ्रातृ रामचन्द्रदेवस्य वैमनस्याज्जय-पुरं परित्यज्य गञ्जां जिल्लान्तर्गत सिकाकोल् नगर्या नातिदूरे पर्वपेण्ठ (पर्वतालपेट) नामकब्राह्मणशासने निवासं कृतवान् तत्रैव (१८६९) एकोनसप्तत्यधिकाष्टादशशतपरिमिते क्रिष्टाब्दे अस्य विक्रमदेवस्य जन्म तत्र वर्षचतुष्टयं स्थित्वा वंशधारानद्याः तटान्तरे नगरि कटकग्रामे निजान्तःपुरं निर्माय तत्रैव कियत्कालं सुखेन निवसन् (१८८४) क्रिष्टाब्दे कृष्णचन्द्रदेवो लोकान्तरं गतः ततः वर्षद्वयान्तरे अयं पुत्रो विक्रमदेवः विशाखपट्टणनगरीमागत्य तत्रैव चिरं निवसति स्म अयं निजपितृव्यपालस्य राज्ञो रामचन्द्रदेवस्यानन्तरं तत आगत्य जयपुरराजसिंहासनमलङ्कारेत्यादि तद्विशेषविवरणं ग्रन्थ-स्यास्य चरमभागे व्यक्तीभविष्यति इति ॥

३३३. अथेति ॥ अथानन्तरं एकदा एकस्मिन् समये निजदेहयात्रासमये इत्यर्थः कौचित् अनिर्दिष्टस्थाननामानावित्यर्थः प्रथमाश्रमाश्रितौ ब्रह्मचर्याश्रमिणौ द्वौ ब्रह्मचारिणावित्यर्थः अन्तः पुरगर्भगं अवरोधनान्तः शयानमित्यर्थः 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधन'मित्यमरः नृपं पूर्वोक्तविक्रम-देवनामानं समेत्य सङ्गत्य पुरः तदग्रे कृतं स्मितमीषद्धासो याभ्यां तौ स्मेराननौ सन्तौ यदा यस्मिन् क्षणे एव तिरोदधाते स्म अन्तर्हितौ बभूवतुः तदैव स विक्रमदेवः देहं निजशरीरं विजहौ तत्याज कालधर्मं गतवानित्यर्थः अत्रेयमद्भुतं किं वदन्ती राज्ञोऽस्य विक्रमस्य लोकान्तरगमनात् प्राक् क्षणे द्वौ ब्रह्मचारिणौ अकस्मादागत्य राज्ञः समीपे प्रविष्टौ तदानीमचेतनोऽपि राजा चेतनां प्राप्य स्मयते स्म तं दृष्ट्वा तावपि स्मयमानौ जग्मतुः तत्क्षणादेव राजापि प्राणान् तत्याज तथाद्भुतघटनां दृष्ट्वा अन्तः पुरगता मन्त्रिपुरोध-सादयस्सर्वेऽपि मिलित्वा कावेतौ ब्रह्मचारिणौ कुत आगतौ क्व वा गताविति विस्मयमाना तयोरन्वेषणे बहुप्रयत्नं कृतवन्तोऽपि नैव किमपि जानन्तिस्मेति अयं राजा विक्रमः (१८९०) परिमिते क्रिष्टाब्दे देहं विजहौ ॥

३३४. ततो हहाहेति समूह्य मुह्यतां महीतले शोकतमिस्रसङ्कुले ।
अभूज्जनानां ज्वलितोमहौजसा स रामचन्द्रो दृशि चेतनाप्रदः ॥

३३५. पयो निनीयास्य च मन्त्रसंस्कृतं शिरः समुद्दिश्य यथाविधि प्रभोः ।
व्यधुस्तदालङ्कृतपूर्वभूभृदासनस्य नीराजनकं पुरोधसः ॥

---

३३४. तत इति ॥ ततो राज्ञो विक्रमस्य तस्य स्वर्गमनानन्तरं शोकस्तमिस्रमन्धकार इव तेन सङ्कुले व्याप्ते महीतले भूमण्डले समूह्य समूहीभूय राजा पञ्चत्वं गत इति सम्यक् ऊह्य सन्तर्क्य वा ऊह वितर्के इति धातुः हहेति हेति च शब्दः खेदवचनः खेदातिशयद्योतकत्वाद्बहुव्यक्तिगतत्वाच्च न पौनरुक्त्यं हहाहा इति विलप्येत्यर्थः मुह्यतां मोहं प्राप्नुवतां जनानां लोकानां महौजसा राजलक्षणेन तेजोविशेषेण ज्वलितो जाज्वल्यमानः सः पट्टमहिषी गर्भसम्भूतत्वेन ज्येष्ठत्वेन च निर्दिष्टः रामचन्द्रः तन्नामा राजपुत्रः रमणीयचन्द्ररूपार्थोऽपि व्यज्यते उत्तरत्रापि राज्ञा रामचन्द्रेणानेन सह तस्य श्लेषेण वर्णितत्वात् दृशि चक्षुषि तेषां जनानामित्यर्थः जातावेकवचनं चेतनाप्रदः संज्ञाप्रदायकः अभूत् सर्वेषामपि नेत्रानन्दजनको बभूवेत्यर्थः ॥

अथ तत्र कर्तव्यमाह ॥

३३५ पय इति ॥ पुरोधसः पुरोहिताः तदा तस्मिन् समये भुवं बिभ्रतीति भूभृतः राजानः तेषामासनं सिंहासनमित्यर्थः पूर्वस्थापितं भूभृदासनं पूर्वभूभृदासनं अलंकृतं स्वोपवेशनेन मण्डितं तद्येन तस्य राजसिंहासनारूढस्येत्यर्थः अस्य रामचन्द्रदेवनाम्न प्रभोरधिपस्य 'प्रभुः परिवृढोऽधिप' इत्यमरः शिरः समुद्दिश्य मस्तकं लक्षीकृत्य विधिमनतिक्रम्य यथाविधि राजाभिषेकविधानेनेत्यर्थः मन्त्रैर्वेदपुराणादि-प्रतिपादितैः संस्कृतं पयः तीर्थजलानि जातावेकवचनं निनीय शिरसि तीर्थजलैरभिषिच्येत्यर्थः नीराजन-मेव नीराजनकं तत् व्यधुः विदधुः विपूर्वकधाधातोः लुङि प्रथमपुरुषबहुवचनं नीराजनविधिनाबन्दा-पनां चक्रुरित्यर्थः चन्द्रपक्षे पुरोधसः शान्तिकपौष्टिककर्मकारिणो विप्राः विप्राणामेव पौरोहित्यकार्य-कारित्वादित्यर्थः तदा चन्द्रोदयसमये अलंकृतं पूर्वभूभृत् पूर्वपर्वतएवासनं येन तस्य पूर्वाचलसन्निहि-तत्वेन नवोदितस्येत्यर्थः प्रभोः अस्य चन्द्रस्य शिरः मस्तकप्रदेशं समुद्दिश्य ध्यानगोचरं कृत्वेत्यर्थः शिरस्यर्घ्यदानस्य विहितत्वादिति भावः यथाविधि चन्द्रार्घ्यदानविधानेनेत्यर्थः मन्त्रसंस्कृतं मन्त्रपूतं पयः क्षीरं 'पयः क्षीरं पयोम्बु'चेति कोशात् निनीय पयोरूपार्घ्यदानं कृत्वेत्यर्थः अनन्तरं नीराजनकं बन्दापनं व्यधुः अत्रालंकृतपूर्वभूभृदासनस्येत्यनेन पूर्णिमाचन्द्रो लक्ष्यते न च द्वितीयायामेव चन्द्रार्घ्यदानं विहितमस्ति विशेषतो पूर्णिमायामेव तस्योक्तत्वात् तथा च शारदायां 'पौर्णमास्यां निराहारो दद्यादर्घ्यं विधूदये । प्राक्प्रत्यगायतं कुर्यात् भूतले मण्डलत्रयं । निषण्णः पश्चिमे मन्त्री मण्डले विहितासने ॥ मध्यस्थे स्थापयेत्पश्चात्पूजाद्रव्याण्यशेषतः । अन्यस्मिन् मण्डले सोममर्चयित्वाम्बुजान्विते ॥ राजतं चषकं तत्र स्थापयेत्पुरतः सुधीः । गोदुग्धेन समापूर्य स्पृष्ट्वा तं प्रजपेन्मनुं ॥ अष्टोत्तरशतं पश्चाद्विद्यामन्त्रेणदेशिकः । दद्यादर्घ्यं शशाङ्काय सर्वकार्यार्थसिद्धये ॥ अनेन विधिना कुर्यात्प्रतिमासमतन्द्रितः ' इत्यादि ॥

३३६. प्रहर्षितक्षीरपयोधितन्मयीकृतत्वदुर्लक्षितताकनीरधिः ।
स तारकान्तः करदण्डदीपितो व्यदुद्रुवद्द्राकुमुदास्य मुद्रणम् ॥

३३७. स्वकीयकीर्त्या विमलीकृतेऽवनीतले प्रसिक्ते करवर्जितामृतैः ।
प्रभावनीराजित सौष्ठवस्फुटां स राजलक्ष्मीं जयिनीमयाजयत् ॥

---

३३६. प्रहर्षितेत्यादि ॥ प्रहर्षितमानन्दः भावे क्तः तदेव क्षीरपयोधिः क्षीरसमुद्रः तेन स एव तन्मयः स्वरूपार्थे मयट् अतन्मयस्तन्मयः सम्पद्य कृतः तन्मयीकृतः अभूततद्भावे च्विः तस्य भावस्तत्वं तेन दुर्लक्षितता दुर्ज्ञातता यस्य स तथाभूतोऽकं दुःखमेव नीरधिर्जलधिर्यस्य येन वा सः स्वस्य राजत्वप्राप्तिजन्यानन्दरूपक्षीरपयोधिना संवलितत्वेन अलक्षिततातविरहजन्यदुःखसमुद्र इत्यर्थः तारा विशुद्धमौक्तिकानि 'तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके' इति विश्वः । तैः कान्तः कमनीयः मुक्ताहारादिभूषित इत्यर्थः करे स्वदक्षिणहस्ते यो दण्डः शासनदण्डः तेन दीपितो जाज्वल्यमानः तथाभूतः स रामचन्द्रदेवः द्राक् सपदि कुत्सिता मुत् मोदो येषां ते कुमुदः मृतराजविरहात् हतानन्दा जना इत्यर्थः । तेषामास्यमुद्रणं मुखम्लानिं व्यदुद्रुवत् विद्रावयामास स्वयं राजा भूत्वा तानानन्दयामासेत्यर्थः ॥

चन्द्रपक्षे ॥ प्रहर्षितः प्रवृद्धिं गमितः स्वोत्पन्नस्योदयदर्शनेनेति भावः क्षीरसमुद्रोत्पन्नत्वं हि चन्द्रस्य प्रसिद्धं तथाभूतो यः क्षीरपयोधिस्तेन तन्मयीकृतत्वेन दुर्लक्षितता यस्य स प्रहर्षितक्षीरपयोधिः तन्मयीकृतत्व दुर्लक्षिततारकः उच्छलित क्षीरावयवाच्छादितत्वेन दुर्ज्ञेयस्वरूप इत्यर्थः अत्र समासान्त कप्रत्ययः तथाभूतो नीरधिर्जलसमुद्रो येन सः नीराणि धीयन्तेऽस्मिन्निति व्युत्पत्त्या नीरधिपदेन नीरसमुद्र एव बोध्यते यद्वा नीरधिशब्दः समुद्रसामान्यवाचकः गोबलीवर्दन्यायेन क्षीरसमुद्रेतरपरः तथा च प्रहर्षितक्षीरपयोधि तन्मयीकृतत्व दुर्लक्षितताका नीरधयोऽन्येलवणादि षट्समुद्रा येन स तथाभूतः चन्द्रोदये अविशेषेण समुद्रवृद्धेर्वर्णितत्वेऽपि क्षीरसमुद्रस्यैव जनकत्वेनात्र विशेषेण वृद्धिप्रदर्शनमिति बोध्यं तारकाणां नक्षत्राणां अन्तर्मध्ये करदण्डैर्मृणालदण्डाकारकिरणैः चन्द्रिकारूपैरित्यर्थः दीपितः प्रकाशितः तथाभूतः स चन्द्रः द्राक् कुमुदानां कैरवानां आस्यमुद्रणं मुखमुद्रां व्यदुद्रुवत् तानि प्रस्फुटयामासेत्यर्थः चन्द्रोदये हि कुमुदविकसनं कविसङ्केतसिद्धम् ॥

३३७. स्वकीयेत्यादि ॥ स रामचन्द्रदेवः स्वकीयया कीर्त्या यशसा विमलीकृते परिष्कृते तथा करेण निजहस्तेन वर्जितानि उत्सृष्टानि यानि अमृतानि जलानि 'पयः कीलालममृतमिति जलपर्यायेष्वमरः तैः दानजलैरित्यर्थः प्रसिक्ते सेचनविशिष्टे पूजास्थानं हि सम्मार्जनोपलेपनादिना परिष्कुर्वन्ति तद्वदेव स्थिते इत्यर्थः अवनीतले भूतले प्रभावः तेजोविशेषः 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डज' मित्यमरः तेन नीराजितां कृतनीराजनां सौष्ठवेन प्रशंसनीयतया स्फुटां प्रव्यक्तां च 'सुष्ठु प्रशंसने' इत्यमरः उभयोर्विशेषणत्वेऽपि उत्तरस्य विशेष्यत्वविवक्षया विशेष्यविशेषणसमासः अतएव जयिनीं जयशालिनीं सर्वोत्कृष्टामिति यावत् तथाभूतां राजलक्ष्मीं राजश्रियं निजराज्याभिमानिनीं सम्पद्रूपां देवतामित्यर्थः अयाजयत् पूजयामास सर्वैरपि लोकैरिति शेषः एतेनास्य कीर्तिप्रतापसम्पन्नत्वमुक्तम् ॥

३३८. स नागदेहोपरिभागशोभिनः सुवर्णदुर्वर्णकृतातितेजसः ।
स्वतश्च सम्भाव्य विमानसञ्चयान्महार्घरत्नौघविजृम्भितोऽभवत् ॥

३३९. सपक्षिणां स्वेन च जीवरक्षिणां प्रगोप्य रम्पारण कर्म शर्मदः ।
कृताग्रहस्तीर्थपरिग्रहे बभौ कुतोऽप्यभीर्भूपरिधेः परिभ्रमात् ॥

---

चन्द्रपक्षे ॥ स्वकीयकीर्त्या निजप्रसादेन 'कीर्तिः प्रसादयशसो'रिति कोशात् विमलीकृते तमो मालिन्यरहिते तथा करैः किरणैः वर्जितानि यानि अमृतानि पीयूषाणि तैः 'पीयूषममृतं सुधे'त्यमरः तस्य सुधाकरत्वादिति भावः प्रसिक्ते अवनीतले प्रभाभिः अधः स्तकान्तिभिरवनीराजितां अधः कृत नीराजनां सौष्ठवस्फुटां च पूर्ववत्समासः अवशब्दोऽत्राधो वाची यद्वा प्रभाभिः अवनीराजितसौष्ठवा- प्रकाशातिशया अतएव स्फुटा प्रव्यक्ता च यया तां तथोक्तां बहुपदो बहुव्रीहिः आहिताग्न्यादित्वात्समासः प्रभाभिः पृथिव्याः सुष्ठुतां सम्पाद्य प्रकाशिकामित्यर्थः जयिनीं सर्वोत्कर्षेण वर्तमानां राजलक्ष्मीं निजराज- श्रियं स्वस्य राजपदवाच्यत्वादिति भावः राजाप्रभौ नृपे चन्द्रे इत्यादिकोशात् अयाजयत् सर्वैरप्यपूजयत् ॥

३३८. स इति ॥ स रामचन्द्रदेवः नागानां गजानां देहो परिभागे शरीरोपरिप्रदेशे पृष्ठे इति यावत् शोभितुं शीलं येषां तान् सुवर्णैः कनकैः दुर्वर्णैः रजतैश्च कृता निर्मिताश्च तेऽतितेजसो दीप्त्यति- शायिनश्च तान् दुर्वर्णं रजतं रूप्यमित्यमरः विमानसञ्चयान् हस्तिपृष्ठे सज्जनोचितोपवेशनयान विशेषानित्यर्थः हमारि (हावुदा) इति नाम्ना लोकप्रसिद्धानिति यावत् स्वतः स्वस्य स्वस्मै स्वेन वा सार्वविभक्तिकस्तसिल् सम्भाव्य सम्पाद्य महार्घाणि बहुमूल्यानि 'मूल्ये पूजाविधावर्घ' इत्यमरः यानि रत्नानि हीरकादिनवरत्नानि तत्खचितराजपट्टादीन्यपीत्यर्थः तेषामोघेन समूहेन विजृम्भितः हर्षोत्फुल्लोऽभवत् अस्यैव राज्ञोऽवसरे अम्बारिनाम्ना प्रसिद्धं विमानद्वयं एकं सुवर्णमयं अपरं सुवर्णरू प्योभयघटितं चेति तथा हावुदा परनाम्ना प्रसिद्धं विमानद्वयं च सर्वोत्कृष्टत्वेन निर्माय स्थापितं अन्यान्यपि तानि निर्मितानि सन्ति एवं नवरत्नखचितमेकं केवलहीरकखचितमन्यं चेति राजपट्टद्वयं श्रीपेच इति लोकप्रसिद्धं तथा बाहुभूषणद्वयं चेत्यादि रत्नानि बहुमूल्यव्ययेन क्रीत्वा सङ्गृहीतानि सन्तीति बोध्यम् ॥

चन्द्रपक्षे ॥ स चन्द्रः नागाः सर्पाः देहे यस्य स सर्पालङ्कृतशरीरः शिवः नागः पन्नगमातङ्गक्रूरा- चारिषु तोयदे इति मेदिनी तस्य उपरिभागे मस्तकप्रदेशे शोभिनः शोभाशालिनः स्वतिशयितोवर्णः स्वशुभ्ररूपं तेन दुर्वर्णाः कृताः म्लानीकृताः अतितेजसो दीप्तिमन्तः पदार्था येन तस्मात् अतएव सम्भाव्यं सम्भावनार्हं यत् विमानं विशेषेण चित्तसमुन्नतिः 'मानं चित्तसमुन्नतिरि' त्यमरः तस्य सञ्चयः सञ्चयनं प्राप्तिरिति यावत् स यस्मात् यस्य वा तस्मात्तथा भूतात् स्वतश्च स्वस्मादेव हरचूडामणीकृत स्वकीयकला- रूपादेवेत्यर्थः महार्घरत्नौघेषु हरशिरसि किरीटसङ्घटितेषु मध्ये इत्यर्थः विजृम्भितः प्रकाशितोऽभवत् पुरुषोत्तम इत्यादि वत्साधुत्वम् ॥

३३९. स इति ॥ स राजा पक्षः सहायोस्त्येषामिति पक्षिणः स्वसहायिवर्गाः तेषां तथा स्वेनपरि- पालकेनात्मना जीवरक्षिणां प्राणधारिणां च स्वोपजीविनामित्यर्थः प्रगोप्य तान् संरक्ष्येत्यर्थः गुपू रक्षणे

३४०. अनेकधान्यान्यविलक्षणश्रिया लसद्गृहाणां कलयन् चिरं स्थितिम् ।
सदुर्विधानां विदधे दयामयो विवाहितानां मिथुनत्वसंस्क्रियाम् ॥

इति धातोर्ल्यप् रम्पानाम कश्चिद्देशविशेषः तत्र यद्रणं युद्धं तदेव कर्म तत्र शर्मदः सुखदो बभूवेति शेषः अत्रेदं बोध्यं जयपुरस्य दक्षिणप्रदेशे राजमहेन्द्रान्तर्भुक्ततया रम्पानाम्ना एकं स्थानमस्ति तत्र (१८७५) मितख्रिष्टाब्दासन्नकाले कारमटीरामन्न, द्वारबन्दचन्द्रय्यप्रभृतयः केचन वीरपुरुषाः गवर्नमेण्ट् विरुद्धतया बहुदेशोपद्रवं ददुः एवं ततः पूर्वमपि गुणपुरप्रदेशे आरण्यकपुरुषा अपि तथा महोपद्रवं चक्रुः तदानीं विशाखपट्टणास्थित जिल्लाकलक्टरुपदे नियुक्तस्य मिष्टरक्यारमेकल् एस्कयर् साहेबनाम्नोऽधिकारिणोऽनुमत्या अयं राजा रामचन्द्रदेवः बहुसैन्यपरिवृतस्तत्र तत्र गत्वा तान् दुष्टान् निहत्य सर्वं तत्कृतोपद्रवं निवर्तयामासेति अथ तीर्थानां गङ्गादीनां परिग्रहे ग्रहणेविषये तीर्थयात्रायामित्यर्थः कृताग्रहः कृतादरः कुतोऽपि नास्ति भीर्भयं यस्य सः अभीः निर्भयस्सन् भूपरिधेर्भूमण्डलस्य परिभ्रमात् परिक्रमणं कृत्वेत्यर्थः ल्यब्लोपे पञ्चमी बभौ (१८७६) मिते क्रिष्टाब्दे श्रीमति विक्टोरियामहाराज्ञ्या ज्येष्ठपुत्रः अत्र भारतखण्डदर्शनार्थं समागतः तदानीमयं राजा मान्द्राजपुरीं गत्वा तत्र तत्समागमेन बहुपुरस्कारं प्राप्य ततः गोतिवाल्लारि, पूना, सीतारा, नासिका, त्रियम्बक, जब्बलपूरु, गया, काशी, प्रयाग, कान्पूरु, नखनौ, आग्रा, मथुरा, बृन्दावन, अयोध्या, बाबावैद्यनाथप्रभृतिदेशान् परिभ्राम्य कलकत्ता नगरीमागत्य तत्र नाटगवर्नरुपदवाच्येन साकं सम्मेल्य ततः श्रीपुरुषोत्तमक्षेत्रदर्शनपूर्वकं स्वराजधानीमाजगामेति बोध्यम् ॥

चन्द्रपक्षे ॥ स चन्द्रः स्वेन जीवरक्षिणां स्वोपजीविनां पक्षिणां चकोराणामित्यर्थः पारणकर्मणि उपवासान्तभोजनकर्मणि शर्मदः ज्योत्स्नारूपपेयप्रदानेन सुखप्रद इत्यर्थः ज्योत्स्ना पेया चकोरैरिति कविसमयः अतएव अरमत्यन्तं प्रगोपी तेषां रक्षकः तीर्थस्य गुरोः परिग्रहः पत्नी 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ, पत्नी परिजनादानमूलशापाः परिग्रहाः' इत्युभयत्राप्यमरः तस्यां स्वगुरोर्बृहस्पतेर्भार्यायां तारायामित्यर्थः कृत आग्रहो येन सः तां रममाण इत्यर्थः तथाभूतोऽपि कुतोऽपि अभीः निर्भय एवेत्यर्थः भूपरिधेः परिभ्रमात् आकाशमार्गेण भूमण्डलं परिक्रम्येत्यर्थः बभौ शुशुभे ॥

३४०. अनेकेति ॥ अनेकैरपरिमितैर्धान्यैः अन्येभ्यो विलक्षणा अनन्यसाधारणा या श्रीर्लक्ष्मीः सम्पदिति यावत् तया लसन्ति परिपूर्णतया भासमानानि यानि गृहाणि तेषां स्थितिं चिरं चिराय कलयन् चिरकालपर्यन्तं यथा स्थास्यन्ति तथा सुदृढं धान्यागाराणि कृत्वा तानि धान्यपूर्णानि स्थापयन्नित्यर्थः तथाभूतः दयामयः कृपावान् स रामचन्द्रदेवः दुर्विधानां दरिद्राणां 'दुर्विधो दीनो दरिद्रो दुर्गतोऽपि स' इत्यमरः अत एव अविवाहितानां दरिद्रत्वेन कन्या संलभ्यात् विवाहरहितानां जनानामित्यर्थः मिथुनत्वसंस्क्रियां मिथुनत्वप्रापकसंस्कारं विवाहमित्यर्थः विदधे कारयति स्मेत्यर्थः अयं हि कोरापुट्यादि शाखानगरेषु बहूनि धान्यानि सञ्चयामास तथा दरिद्रब्राह्मणादीनां प्रचुरधनदानेन विवाहादिकमपि कारयति स्मेति फलितम् ॥

चन्द्रपक्षे ॥ विवाहितानां विवाहसंस्कृतानां कृतभर्तृपाणिग्रहणानामित्यर्थः तथाभूतानामपि दुर्विधानां दुःखिनीनां भर्तृवात्सल्यमलभमानानामित्यर्थः स्वस्य रोहिण्यामेवात्यन्तासक्तत्वादिति भावः तथाभूतानां अन्योन्यविलक्षणश्रिया परस्पराधिकशोभया लसतां गृहाणां निजदाराणामश्विन्यादीनामित्यर्थः

३४१. कदाश्वयुक् प्रीतमना द्विजार्चने धियं समाधाय च कृत्तिकामनः ।
सरोहिणीस्पर्शशतप्रमाणितः खगैरखेलन्मृगशीर्षकर्षणे ॥

३४२. शुभोदयार्द्रः स पुनर्वसून्नतः कदा च पुष्योत्सवतुष्यदन्तरः ।
कृताशिराश्लेषतनूमघास्पृशं स्वमेव मेने बहुफल्गुनीरतिः ॥

---

दारेष्वपि गृहा इति कोशात् चिरं चिरादेव स्थिति तथा दुःखावस्थानं अनेकधा कलयन् बहुवारं विमृशन् अतएव दयामयः तेषु करुणायुक्तः स चन्द्रः मिथुनत्वसंस्क्रियां मिथुनत्वेन संस्कारं मिथुनत्वरूपं कर्म वा तेषां सङ्गमनमित्यर्थः विदधे क्रमेण कृतवान् यथा च क्रमेण सङ्गमनं तदग्रे कथयिष्यते ॥

३४१ कदेति ॥ रोहिणीनां गवां स्पर्शशतेन दानशतेन शतसङ्ख्याकगोदानैरित्यर्थः प्रमाणितः निश्चितः स्पर्शो वर्गाक्षरे दाने स्पर्शने स्पर्शकेरुजीति हैमः स रामचन्द्रः कदा कस्मिंश्चित्समये द्विजार्चने ब्राह्मणाराधने विषये धियं समाधाय स्वमतिं निधाय कृत्तिश्चर्मतां कामयत इति कृत्तिका मनः चर्माभिलाषी द्विजानामेवासनार्थं मृगचर्माहरणकाम इत्यर्थः कामयते युंच् अश्वं युनक्तीति अश्वयुक् सत्सूद्विषेत्यादिना क्विप् घोटकारूढ इत्यर्थः तथा प्रीतमना हर्षितचित्तस्सन् खगैः शरैः मृगाणां हरिणादीनां शीर्षकर्षणे शिरश्छेदने विषये अखेलत् चिक्रीडे तथा च तस्य मृगयादिकं द्विजार्थमेवेति फलितम् ॥

चन्द्रपक्षे ॥ स चन्द्रः कदा अश्वयुजा अश्विन्याप्रीतं मनो यस्य सः अश्विन्या दाक्षायण्या सङ्गमेन हर्षोत्फुल्लमानस इत्यर्थः 'अश्वयुगश्विनी'त्यमरः द्विजया भरण्या कृतमर्चनं द्विजार्चनं तस्मिन् कदा च भरणीसङ्गमे तत्कृतपूजायामित्यर्थः धियं समाधाय तत्पूजनमविस्मृत्येत्यर्थः कृत्तौ कृत्तिकायां कामनः कामुकः अत्रापि कदा चेति योज्यं एवमुत्तरत्रापि 'कृतिश्चर्मत्वचोर्भूर्जे कृत्तिकायां द्वयं स्त्रियां' इति मेदिनी रोहिण्याः स्पर्शशतेन आलिङ्गनशतेन प्रमाणितो निरूपितः यद्वा रोहिण्या प्रयोजिकया स्वसङ्गमे स्वमस्तकाद्यङ्गानां स्पर्शशतेन प्रमाणितः कृतप्रमाणः त्वमेव मम प्रियतमासीति कृतशपथ इत्यर्थः तथा मृगशीर्षस्य आग्रहायण्याः कर्षणे आकर्षणे सति तद्विषये वा खगैः खे गच्छन्तीति खगास्तैः ग्रहनक्षत्रविशेषैः सह अखेलत् आकाशे विजहारेत्यर्थः ॥

३४२. शुभ इति ॥ शुभः सकलशुभलक्षणसम्पन्नः दयार्द्रः सदा दयार्द्रीकृतचित्तः पुनः पूर्वापेक्षया वसुभिर्धनैः उन्नतोऽधिकधनशालीत्यर्थः फल्गुनि असारे वस्तुनि निरस्ता रतिः प्रीतिर्यस्य स फल्गुनो रतिः असाराग्राही अर्थात् सारग्राहीत्यर्थः 'असारं फल्गु' इत्यमरः अतएव तथाभूतः स रामचन्द्रदेवः कदा च कस्मिंश्चित्समये पौषपूर्णिमायामित्यर्थः पुष्योत्सवे पुष्यनक्षत्रविहितोत्सवे पुष्याभिषेकोत्सवे इति यावत् । पुष्यत् तुष्टिं प्राप्नुवत् अन्तरं अन्तरात्मा यस्य सः तथाभूतः सन् कृतः सम्पन्नः आशीर्भिर्ब्राह्मण-कर्तृकाशीर्वादैरित्यर्थः आश्लेषः शिरः प्रदेशे आलिङ्गनं यस्याः तथाभूता तनूः शरीरं यस्य तं ब्राह्मणैः कृताशीर्वादश्लिष्टवपुषमित्यर्थः अतएव अघास्पृशं स्पृशतीति स्पृशः इगुपधलक्षणः कप्रत्ययः न

३४३. तदुत्तराफल्गुनिकोत्सवक्रिया व्यधायि हस्तास्तृतचर्चिका चयैः ।
स चित्रया स्वातिसुभक्तिराधयाऽमुनानुराधारमणेऽर्पितात्मना ॥

---

स्पृशोऽस्पृशः अघानामपापानामस्पृशोऽघास्पृशः अघानि अस्पृशानि यस्य स इति वा निरस्तनिखिलकल्मष इत्यर्थः तं तथाभूतं स्वं स्वात्मानं बहुमेने बहुमानेन सम्भावितवानित्यर्थः ॥

चन्द्रपक्षे ॥ स चन्द्रः शुभः शुभकर उदयो यस्याः तथाभूता आर्द्रा ताराविशेषो येन स तथाभूतः स्वसङ्गमनेनार्द्रायाः कल्याणसम्पादक इत्यर्थः पुनर्वसूरुन्नता उन्नतिं प्रापिता यस्मात्स तथोक्तः कदा च पुनर्वसू सम्भोगानन्तरमित्यर्थः पुष्यस्य नक्षत्रविशेषस्य स्वदाररूपस्येत्यर्थं उत्सवेन सम्भोगक्षणेन तुष्यत् अन्तरं यस्य स तथाभूतः अश्लेषाया इयं आश्लेषी तस्येदमित्यण् आश्लेषी चासौ तनूश्चेति आश्लेषतनूः स्त्रियाः पुंवत् कृता आशीः शुभचिन्तनं यस्यास्तथाभूता आश्लेषतनूः अश्लेषाख्यदाक्षायणी-सम्बन्धिशरीरं येन स चासौ मघां स्पृशतीति मघास्पृशो मघाख्य तारकाश्लेषी च तं तथाभूतं स्वं स्वात्मानं बहुमेने एवकारोऽत्राप्यर्थकः फल्गुन्यां पूर्वफाल्गुन्यां तारकायां रतिर्यस्य तथाभूतोऽपि आसीदिति शेषः न सत्तां पदार्थो व्यभिचरतीत्युक्तेः भिन्नवाक्यमेतत् अन्यथा क्रमभङ्गः स्यात् फल्गुनस्त्वर्जुनेमासे नक्षत्रे फल्गुनीस्मृतेति गोवर्धनानन्दः ॥

३४३. तदित्यादि ॥ सचित्रया फल्गुरजश्चन्दनविलेपनादिना चित्रतया राधया राधिकामूर्त्या सह वर्तमाने इत्यर्थः सहार्थे तृतीया राधारमणे श्रीकृष्णे स्वख्यातिशयिता शोभना भक्तिराराध्यत्वेन ज्ञानं यस्मिन् कर्मणि तद्यथा तथा अर्पितः आत्मा मनोरूपान्तरात्मा येन तेन तथाभूतेन अमुना रामचन्द्रदेवेन राज्ञा नु इत्यनुनये भगवदुत्सवसङ्गतान् सर्वानपि जनाननुनीयेत्यर्थः हस्तैः समस्तजनानां पाणिभिः आस्तृताः परस्परनिक्षेपादिना विस्तृतीकृताः या चर्चिकाश्चर्चिक्यानि फल्गुरजश्चन्दनादिविलेपनानि तेषां चयैः चर्चिका क्रीडानिर्वहैरित्यर्थः तदुत्तरा तस्य पुष्याभिषेकोत्सवस्योत्तरकालीना पुष्योत्सवानन्तर-मित्यर्थः फाल्गुनिकोत्सवक्रिया फाल्गुनमाससम्बन्धिमहोत्सवकर्म दोलायात्रासम्बन्धिनीति यावत् व्यधायि विहिता कर्मणि लुङि तङ चिण् तलुक् ॥

चन्द्रपक्षे ॥ अमुना चन्द्रेण तत्तस्मात् तदित्यव्ययं पूर्वाफल्गुनीनक्षत्रसम्भोगानन्तरमित्यर्थः उत्तरा उत्तरापदवाच्या संज्ञाशब्दत्वान्नपुंवद्भावः उत्तरार्यमदेवा चेति हेमचन्द्रः सा चासौ फाल्गुन्येव फाल्गुनिका च स्वार्थे ठक् तस्याः उत्सवक्रिया व्यधायि तत्सङ्गमनेन तदुत्सवकर्म कृतमित्यर्थः किम्भूतेन तदाह हस्तेत्यादि हस्तया तन्नाम्न्या दाक्षायण्या आस्तृता विस्तृती कृताया चर्चिकाश्चन्दनादिलेपनानि रतिक्रीडाविहितानीत्यर्थः तासां चयैः निवहैः उपलक्षिष्यमाणेनेत्यर्थः सचित्रया चित्राख्यतारया सहितया स्वात्यां तारायां ज्येष्ठत्वेन शोभना भक्तिर्यस्यास्तथाभूताया राधाविशाखा 'राधाविशाखे'त्यमरः तयासहेत्यर्थः सहार्थे तृतीया चित्रास्वातिविशाखाभिस्तारकाभिः सहीभूयेत्यर्थः अनुराधाया रमणे सम्भोगक्रीडायां अर्पित आत्मा येन तेन तथाभूतेन क्रमेण हस्तादिसङ्गमेप्सुना अमुना चन्द्रेण उत्तराफल्गुनीसङ्गमहोत्सवः कृत इति समुदितोऽर्थः ॥

३४४. विधाय स ज्येष्ठतया तथाविधं क्रियाकलापं समकाममूलकम् ।
विवेदनापाढिकयोरथादिमान्तिमक्षणक्रीडनयोरतिश्रमम् ॥

३४५. स्तुतौ प्रयुक्तश्रवणं श्रविष्ठया गिरानुनीतं शततारकान्वितम् ।
जगत्प्रभुं भाद्रपदद्वयानुगं स रेवतीकान्तमपि स्वमार्चयत् ॥

३४४. विधायेति ॥ समोऽत्र सर्वपर्यायः समेषां जनानां न तु स्वस्यैव काम इच्छा सएव मूलं प्रधानं यत्र तं निखिलजनाभिलषितमित्यर्थः स ज्येष्ठतया ज्येष्ठमाससहिततयोपलक्षितमित्यर्थः अक्षयतृतीयामारभ्य एकविंशतिदिनपर्यन्तत्वेन चन्दनोत्सवस्य ज्येष्ठमाससहितता बोध्या ज्येष्ठानक्षत्रसहिततयोपलक्षितं वा ज्येष्ठपौर्णमास्यां स्नानोत्सवस्य विहितत्वात् तथाविधं पूर्वोक्तरूपं चन्दनचर्चिकाद्युपेतमित्यर्थः येन प्रकारेण विधेयं तथाप्रकारकमिति वार्थः क्रियाकलापं चन्दनोत्सवादिकर्मनिवहं विधाय तद्विधानानन्तरं आपाढिकयोः आपाढमासोत्पन्नयोः भवार्थे ठक् रथानां यानविशेषाणां आदौ भव आदिमः अन्ते भवोऽन्तिमश्च भवार्थे डिमिच् यौ क्षणौ उत्सवौ क्षणउद्धर्षो महउद्धव उत्सव इत्यमरः रथगमनागमनविहितोत्सवावित्यर्थः तयोः ये क्रीडने यातायातरूपक्रीडाविशेषौ तयोः अतिश्रमं तदानीं स्वस्य जायमानं महापरिश्रमं न विवेद न जानाति स्म भगवतो रथोत्सवे स्वयमेव पादचारितया याता यातादौ तत्सम्पादने बहुपरिश्रमं स्वीचकारेत्यर्थः प्रकरणात्सराजेति गम्यते उत्तरश्लोकाद्वा स इत्यनुसञ्जनीयम् ॥

चन्द्रपक्षे ॥ अत्रापि स इत्यध्याहार्यः स चन्द्रः स ज्येष्ठतया ज्येष्ठानक्षत्रसहिततयोपलक्षितः समस्तुल्यः स्वानुरूप इति यावत् कामः कन्दर्पो यस्याः तथाभूता मूला तन्नाम्नी दाक्षायणी यस्मिन् तं तथाविधं क्रियाकलापं सम्भोगोचितकर्मजालं विधाय अथानन्तरं आपाढैवापाढिका स्वार्थे कन् प्रत्ययस्यादितीत्वं आपाढिकयोः पूर्वोत्तरारूपयोरापाढातारयोः आदिमान्तिमक्षणयोराद्यप्रान्तसमययोर्ये क्रीडने केलिप्रकारौ तयोः जायमानमित्यर्थः रतिश्रमं स्वस्य सुरतपरिश्रमं न विवेद न ज्ञातवान् ॥

अथ रथोत्सवे भगवतः स्वस्य च रथं प्रति याता यातसमयोचितप्रकारं वर्णयति ॥

३४५. स्तुताविति ॥ स रामचन्द्रदेवः स्वं स्वकीयं स्वेष्टदेवत्वेन कल्पितमित्यर्थः रेवतीकान्तं रेवतीपतिं बलदेवमित्यर्थः तथा भद्राया इदं भाद्रं सुभद्रा सम्बन्धि यत् पदद्वयं पादयुगलं तदनुसृत्य गच्छतीति तथा यात्रासमये भगवतो भद्रापृष्ठगामित्वादिति भावः तं जगत्प्रभुं जगन्नाथं स्वं स्वात्मानमपीत्यर्थः आर्चयत् पथि पूजयामासेति सम्बन्धः किम्भूतं स्तुतौ समस्तकृतस्वस्तुति कथायां प्रयुक्तश्रवणं दत्तकर्णं श्रविष्ठया श्रवणं श्रवः प्रसिद्धिः रुदो रप् श्रवोऽस्यास्तीति मतुप् अतिशयेन श्रववती श्रविष्ठा इष्ठन् विन्मतोर्लुगिति मतुपोलुक् तया अतिप्रसिद्धया गिरा वेदपाठादिरूपयेत्यर्थः स्वपक्षे राजस्तुति समुचितया वाचा अनुनीतं अनुक्रमेण नीतं प्रसादितं च शतैर्बहुभिः शतसहस्रादिशब्दा बहुत्ववाचकाः तारकैर्दृग्भिरन्वितं समस्तजनावलोकितमित्यर्थः उभयत्र समानं यद्वा तारएव तारकाः शुद्धमौक्तिकानि शतैस्तैरन्वितं मुक्ताहारादिभूपितमित्यर्थः 'तारको दैत्यभित्कर्णधारयोर्नद्वयोर्दृशि' कनीनिकायामृक्षे च न पुमांस्त्रातरित्रिषु इति 'तारो मुक्ता विशुद्धौ च तरणे शुद्धमौक्तिके' इति च कोशात् ॥

३४६. प्रपूजयन् तामपराजितां जगत्समुच्छ्रितां स्वां शरदिज्ज्वलच्छ्रियम् ।
चकाशयामास च पादसङ्कुचत्प्रतापिवारोपहृतार्थभासुरः ॥

३४७. नमेषजाताभिरुचिस्तथा क्वचित् कळानिधेर्गोमिथुनानुरागिता ।
यथास्य कर्काधिगतस्य चापलच्छटाऽभ्रगासिंहगतिश्चसोत्कटा ॥

---

चन्द्रपक्षे ॥ स चन्द्रः स्तुतौ स्वस्तवने प्रयुक्ताश्रवणा ताराविशेषो येन तं श्रविष्ठया धनिष्ठया कर्त्र्या गिरा नमैवचनेनानुनीतं अनुगृहीतं शततारकान्वितं शतसङ्ख्याकतारकाभिरुपलक्षितशतभिषाख्यतारया युक्तं जगत्प्रभुं लाकाधिपं भाद्रपदद्वयं पूर्वभाद्रपदोत्तरभाद्रपदयोर्युगलं अनुक्रमेण गच्छतीति तथाभूतस्तं रेवत्यास्तदाख्याया दाक्षायण्याः कान्तं भर्तारमपि तथाभूतं स्वं स्वात्मानं आर्चयत् लोकैरिति शेषः अर्चपूजायां इति धातोर्णिजन्ताल्लङ् ॥

३४६. प्रेति ॥ स च राजा शरदि शरदृतौ आश्विनशुक्लदशम्यां दशहरामहोत्सवे इत्यर्थः तां प्रसिद्धां अपराजितां तदाख्यां भगवतो मूर्तिं विजयार्थिनां राज्ञां आश्विनशुक्लदशम्यामपराजितापूजाया विहितत्वादिति भावः प्रपूजयन् प्रकर्षेणार्चयन् पादे निजपादसन्निहितप्रदेशे सङ्कुचन्तः प्रणमनैः सङ्कुचीभवन्तो ये प्रतापिनां वाराः प्रतापशालिनां स्वसामन्तभूतानां राज्ञां समूहाः तैरुपहृता उपहारत्वेन दत्ता येऽर्था उपायनधनानि 'उपायनमुपग्राह्यमुपहारस्तथोपदे'त्यमरः तैः भासुरः प्रकाशमानः सन् जगति समुच्छ्रितां सर्वोत्कर्षेण वर्तमानां स्वां स्वकीयां ज्वलन्ती दीप्यमाना या श्रीः राजलक्ष्मीस्तां चकाशयामास अत्र दशहरामहोत्सवे यादृगस्यैश्वर्यसम्पत् तथा नान्यत्र कस्यापीति भावः ॥

चन्द्रपक्षे ॥ पादैः स्वहिमरश्मिभिः सङ्कुचन्तः प्रतापिनां प्रकर्षेण तापो विद्यते येषां तेषामुष्णगुणविशिष्टानां पदार्थानां वाराः समूहा यस्य स तथोक्तः अपहृतोऽर्थः प्रयोजनं येभ्यस्ते निरर्थकाभासुरा अन्ये प्रकाशकपदार्था यस्मात् स तथाभूतः स चन्द्रः शरदि अपराजितां मेघादिनानभिभूतां अतएव जगति समुच्छ्रितां स्वां ज्वलच्छ्रियं जाज्वल्यमानां शोभां चकाशयामास प्रकाशितवान् ॥

३४७. नेति ॥ निधीयन्तेऽस्मिन्निति निधिः कर्मण्यधिकरणे चेति किः कळानां शैवतन्त्रोक्तचतुःषष्टीप्रकाराणां निधिः स्थानभूतः मेषयुद्धादीनामपि चतुःषष्टीकलान्तर्गतत्वं वेदितव्यं तस्य तथाभूतस्यास्य रामचन्द्रदेवस्य यथा मेषेषु एडकेषु तद्युद्धदर्शनलालसयेति भावः जाता याऽभिरुचिः प्रीतिः तथा क्वचित् न अन्यत्र क्वचिदपि नासीदित्यर्थः यथास्य तथा क्वचिन्नेति उत्तरत्राप्यनुसञ्जनीयं अस्य यथा गोमिथुनेषु स्त्रीगोषु वृषभेष्वपि अनुरागिता स्नेहः तथा क्वचिन्नेत्यर्थः कर्कः 'श्वेताश्वः सितः कर्क' इत्यमरः तमधिगतस्य श्वेतघोटकाधिरूढस्यास्य अभ्रगा अन्तरिक्षगा घोटकोपरिभागे इत्यर्थः चपलस्य भावः कर्म वा चापलं युवादित्वादण् चापलानां छटा समूहः यथातथा क्वचिन्नेत्यर्थः सोत्कटा सोद्रेका सिंहगतिश्च सिंहस्येव पराक्रमश्च यथास्य तथा क्वचिन्नेति भावः ॥

चन्द्रपक्षे ॥ कळानिधेः षोडशकळाश्रयस्यास्य चन्द्रस्य मेषे मेषराशौ जाताभिरुचिः यथा गवि वृषराशौ मिथुने राशौ च तयोरनुरागिता यथा कर्काधिगतस्य कर्कटराशिं प्राप्तस्य चास्य अभ्रगामे-

३४८. अनन्यरूपां वरकन्यकातुला रुचिं विचिन्वन् स सदालिसंवृतः ।
धनुर्धरप्राग्रगतिर्मृगादरोऽप्यभूद्घटारक्त झषप्रसादनः ॥

३४९. यदा न कस्याप्ययमप्रियः श्रयन् परां गतिं विष्णुपदे व्यलीयत ।
तदा दुरालोकतया कुलेक्षणैर्व्यलोकि शून्यं परितोऽखिलैर्जनैः ॥

---

घान्तर्लक्षिता चापलच्छटा चाञ्चल्यनिवहः सोत्कटा सिंहराशौ गतिश्च यथातथा क्वचिदन्यत्र कस्यापि नेत्यर्थः ॥

३४८. अनन्येत्यादि ॥ स रामचन्द्रदेवः । वरश्च कन्यैव कन्यका च तयोस्तुला तुलना अस्य वरस्य इयमेव कन्या विवाहायोपयुक्ता इत्यादि रूपेण समीकृत्य या सम्बन्धघटना तस्यां या रुचिः प्रीतिस्तां अनन्यरूपामनन्यसदृशीं विचिन्वन् गृह्णन् ब्राह्मणादिसर्वजातिषु वरकन्या सम्बन्धकरणे गाढप्रीतिं दधान इत्यर्थः । सतां सज्जनानामालिभिः समूहैः संवृतः परिवेष्टितः । धनुर्धराणां धन्विनां मध्येप्राग्रगतिरग्रसरः । मृगेषु शम्बरहरिणादिजातिषु आदरो यस्य स तथाभूतः हरिणादि नानाविध-वन्यजन्तुसङ्ग्राहकत्वादिति भावः । घटानां करिसमूहानां 'करिणां घटना घटे'त्यमरः रक्तझषाणां रक्तवर्णमत्स्यविशेषाणां च प्रसादनः परिपोषकोऽपि अभूत् यस्तु महोन्नतान् हस्तिनः रक्तादिनाना-वर्णमत्स्यांश्च बहुधनव्ययैर्दूरदेशादप्यानाय्य रक्षितवानित्यर्थः ॥

चन्द्रपक्षे ॥ स चन्द्रः वरा श्रेष्ठा या कन्यका कन्याराशिः तुलाराशिश्च तयोः रुचिं प्रीतिं दीप्तिं वा अनन्यरूपां अन्या सदृशीं विचन्वन् सदा सर्वदा मासि मासि परिवृत्त्येत्यर्थः अलिना वृश्चिकराशिना संवृतः सहितः धनुर्धरे धनूराशौ प्राग्रा प्रकृष्टा गतिर्यस्य सः मृगे मकरराशौ आदरो यस्य सः घटे कुम्भराशौ आसर्वतोभावेन रक्तोऽनुरागयुक्तश्चासौ झषस्य मीनराशेः प्रसादनोऽनुग्राहकश्च तथाभूतोऽप्यभूत् श्लोकद्वयेन चन्द्रस्य द्वादशराशिभोक्तृत्वमभिहितम् ॥

३४९. यदेति ॥ कस्यापि अप्रियो न सर्वस्यापि प्रियाकारक इत्यर्थः अयं रामचन्द्रदेवः यदा यस्मिन् समये परां गतिं श्रयन् ऊर्ध्वगतिं लभमानः विष्णुपदे वैष्णवधामनि व्यलीयत विलीनोऽभूत् यदा लोकान्तरं गतवानित्यर्थः तदा तस्मिन् समये दुरालोकतया आलोकराहित्येन स्वपरिपालकविरह-जन्य दुःखान्धकाराच्छन्नतयेत्यर्थः आकुलानीक्षणानि येषां तैः अखिलैः समस्तैर्जनैः परितः शून्यं व्यलोकि रक्षकाभावात्स्वसंरक्षणे ज्ञानशून्याः खसूचयोऽभूवन्नित्यर्थः अयं राजा रामचन्द्रदेवः (१८३४) क्रिष्टाब्दे चतुस्त्रिंशदधिकाष्टशतोत्तरसहस्रपरिमिते समुत्पन्नः षष्ट्यधिकाष्टशतोत्तरसहस्रपरिमिते (१८६०) ब्दे स्व-पितुः सकाशाद्राज्यं लब्ध्वा एकोननवत्यधिकाष्टशतोत्तर सहस्रपरिमिते (१८८९) लोकान्तरं गत इति ॥

चन्द्रपक्षे ॥ कस्यापि अप्रियः न सर्वस्यापि आह्लादकत्वादिना प्रियकर इत्यर्थः अयं चन्द्रः विष्णुपदे आकाशे 'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी'त्यमरः परां गतिं श्रयन् दूरगतिं केवलां गतिं वा विदधत् 'परश्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले' इति मेदिनी व्यलीयत अस्तंगतवान् यदा तदा दुरालोकतया आलोकाभाववत्तया आकुलेक्षणैः अखिलैर्जनैः शून्यमाकाशमण्डलं परितः व्यलोकि विलोकितं सूर्योदयमपेक्ष्येत्यर्थः ॥

३५०. अथास्य तेजः प्रभवः पुरस्फुरन्निवार्यमा विक्रमदेवनामवान् ।
निशान्त निःशेष दिशास्रसंस्रवं समस्तशुभ्रांशुकशोषितं व्यधात् ॥

३५१. द्रुतं तदा वेदविदो द्विजातयो विशुद्धगात्राः सपवित्रपाणयः ।
ज्वलत्कपोलाभसितैः सिताम्बराः समन्त्रमस्मिन्नुदकान्युदक्षिपन् ॥

---

अथास्य पुत्रं विक्रमदेवं सूर्येण साकं वर्णितुमारभते ॥

३५०. अथेति ॥ अथ रामचन्द्रदेवस्य लोकान्तरगमनानन्तरं अस्य रामचन्द्रदेवस्य तेजो रेतः प्रभवत्यस्मादिति प्रभवः कारणं तेज एव प्रभवो यस्य सः औरसपुत्र इत्यर्थः विक्रमदेव इति नाम तद्वान् प्रशस्तार्थकमतुपा विक्रमेण दीव्यतीति व्युत्पत्त्याऽन्वर्थनामेत्यर्थः अर्यमा सूर्य इव पुरे जयपुरनामनगरे निजान्तः पुरे वा स्फुरन् प्रकाशमानः सन् निशान्ते निजराजभवने 'निशान्तवस्त्यसदनं भवनागार-मन्दिर'मित्यमरः निःशेषदिशासु निखिलदिक्षु जायमान इत्यर्थः योऽस्राणां संस्रवो लोतकस्रावः राज्ञो रामचन्द्रदेवस्य विरहसन्तप्तानां जनानामित्यर्थः तं मस्तेन शिरसा सहितं यत् शुभ्रांशुकं उष्णीषीभूत-श्वेतवस्त्रं राज्ञामभिषेककाले पट्टबन्धनार्थं हि श्वेतोष्णीषबन्धनं समुचितं तेन हेतुना शोषितं प्रोञ्छितं व्यधात् नवराज्याभिषेकार्थं विक्रमदेवस्य शिरसि पट्टबन्धनं दृष्ट्वा सर्वे विशोका अभवन्नित्यर्थः अयं विक्रमदेवः पञ्चसप्तत्यधिक अष्टशतोत्तरसहस्रपरिमिते (१८७५) क्रिष्टाब्दे समुत्पन्नः (१८८९) क्रिष्टाब्दे पितुः सकाशात् पट्टं लब्धवान् ॥

सूर्यपक्षे ॥ अथ चन्द्रास्तानन्तरं अस्य चन्द्रस्य तेजसो दीप्तेः प्रभवत्यस्मादिति प्रभवः कारणं गमकत्वात्समासः सूर्यकरप्रवेशादेव चन्द्रमसो दीप्तिः 'तेजः प्रभावे दीप्तौ' चेत्यमरः विक्रमेण निजपराक्रमेण देवेषु मध्ये नामवान् प्रख्यातनामा इवेत्युत्प्रेक्षया इदमपि सूर्ये विशेषणीयं अर्यमा सूर्यः पुरः पूर्वदिशि अत्र विसर्गस्य खर्परेशरीतिपाक्षिको लोपः स्फुरन् प्रकाशमानः सन् निशान्ते निशावसाने निःशेष दिशासु सकलदिक्षु अस्रसंस्रवं रक्तस्रावं सूर्योदयात्प्राक् जायमानं रक्तस्राववदरुणिमानमित्यर्थः यदि च प्रातः काले पूर्वदिशएवारुणिमावर्णनं स्वीक्रियेत तदा दिशायां पुरोदिशीत्यर्थो ज्ञेयः निःशेषपदं अस्रसंस्रवस्य विशेषणं 'अस्रः कोणेकचेपुंसि क्लीबमश्रुणि शोणिते' इति मेदिनी समस्तैर्निखिलैः शुभ्रै रुद्दीप्तैः 'शुभ्रमुद्दीप्त शुक्लयो'रित्यमरः अंशुभिरेवांशुकैः किरणैः स्वार्थे कप् शोषितं नष्टं तथाभूतं कृत्वा व्यधात् स्वसहस्रकिरणप्रसारणैर्दिगरुणिमानं विनाशयामासेत्यर्थः ॥

३५१. द्रुतमिति ॥ तदा विक्रमस्य नवराज्याभिषेकसमये वेदं विदन्तीति वेदविदो वैदिका विशुद्धगात्राः स्नानपरिष्कृतशरीराः सिताम्बराः परिहितशुक्लवस्त्राः भसितैर्भस्मभिः ज्वलत्कपोलाः कपोलकृतत्रिपुण्ड्राः सपवित्रपाणयः कुशसहितहस्ताः तथाभूता द्विजातयो ब्राह्मणादयः क्षत्रियादीनामपि राज्ञामभिषेके प्रयोज्यत्वाभिधानात् द्रुतं सत्वरं अस्मिन् राज्ञि तच्छिरसीत्यर्थः उदकानि गाङ्गादीनि समन्त्रं मन्त्रैः सहितं यथातथा उदक्षिपन् उत्क्षिप्तवन्तः मन्त्रपाठपूर्वकमभिषिषिचुरित्यर्थः ॥

सूर्यपक्षे ॥ तदा सूर्योदयसमये उक्तरूपा द्विजातयः अस्मिन् सूर्ये अमुमुद्दिश्य इत्यर्थः उदकानि अञ्जलिगृहीतानि जलानि समन्त्रं मन्त्रपाठसहितं यथातथा उदक्षिपन् वीनुदकाञ्जलीनादित्यं

३५२. प्रसादितस्तैर्विधिना प्रदक्षिणं तनूं परिभ्राम्य च सप्तवर्तिभिः ।
परैरहार्ये कृतपूर्व आसनेऽभ्यवन्दि विभ्राट् प्रमुखैः सवन्दिभिः ॥

३५३. शिवालये शङ्खमवादयन् तदा प्रमोदिनः केचिदिहाभिषेचने ।
श्रुतिं पुरस्कृत्य जगुः पदक्रमैः प्रचाल्य हस्तं ननृतुः परे पुरः ॥

---

प्रतिक्षिपेत्सावित्र्या इति गोभिलसूत्रणात् "कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितं । आदित्याभिमुखस्तिष्ठन् त्रिरूर्ध्वं सन्ध्ययोः क्षिपे"दिति च स्मृत्यन्तरादिति भावः । अन्यत्सर्वं पूर्ववत् जलाञ्जलिदानप्रयोजनमुक्तं यथा वीरसर्वस्वे "त्रिंशत्कोटिमिता विरिञ्चिशपथान्मन्देह नामासुरा नित्यं प्रातरहस्करं प्रहरणैरुद्यन्तमाघ्नन्ति वै । तान् हन्तुं सलिलाञ्जलित्रयमतो दद्यात्तदा ब्राह्मणो गायत्र्यास्य विमुक्तयेऽनुदिवसं हन्त्यन्यथा भास्कर"मिति ॥

३५२. प्रसादित इति ॥ परैरितरैः शत्रुभिर्वा अहार्ये हर्तुमशक्ये पूर्वं पूर्वसमयात् पूर्वपुरुषैर्वा कृतं कृतपूर्वं सुप्सुपेति समासः भूतपूर्वे चरडिति निर्देशात् क्तान्तस्य पूर्वनिपातः ज्ञातपूर्वः दृष्टपूर्व इत्यादिप्रयोगदर्शनात् तस्मिन् पूर्वसम्पादिते आसने सिंहासने विभ्राट् विभ्राजमानः स विक्रमदेवः तैः अभिषेचकैः द्विजातिभिः कर्तृभिः विधिना नीराजनविधानेन सप्तवर्तिभिः सप्तवर्तिप्रज्वलितदीपैः करणैः तनूं राज्ञः स्वस्य शरीरं प्रदक्षिणं दक्षिणावर्तेन भ्रमणं यथा स्यात्तथा परिभ्राम्य भ्रामणेन वन्दापयित्वा प्रसादितः प्रसन्नतां प्रापितः सन् प्रमुखैः प्रधानैः स्तुतिपठननिपुणैरित्यर्थः वन्दिभिः स्तुतिपाठकैः अभ्यवन्दि वन्दितः ॥

सूर्यपक्षे ॥ कृतपूर्वे पूर्वस्यां दिशि कृते अहार्ये पूर्वपर्वतरूपे आसने विद्यमान इत्यर्थः 'महीध्र शिखरिक्ष्माभृदहार्यधरपर्वता' इत्यमरः स सूर्यः विधिना सूर्यप्रदक्षिणविधिना तनूं निजशरीराणि जातावेकवचनं प्रदक्षिणं परिभ्राम्य सप्तसङ्ख्यां वर्तयन्ते प्रदक्षिणभ्रामणेषु पूरयन्तीति तैः पूर्वोक्तरूपैर्द्विजातिभिः प्रसादित आनूकूल्यं प्रापित आसीदित्यर्थः वन्दिभिः वेदोक्तमन्त्रैः स्तुवद्भिः परैः कैश्चिद्द्विजैरित्यर्थः विभ्राट्प्रमुखैः विभ्राडाद्यनुवाकमुख्यैर्वैदिकमन्त्रैः अभ्यवन्दि वन्द्यते स्म ननु मध्येत्वह्नउपर्यस्य विभ्राडादीच्छया जपेदिति कात्यायनादिवचनेषु मध्याह्नएव विभ्राडादिजपउक्त इति चेत्सत्यं तत्र मध्येत्वह्न उदये चेत्यादि पाठभेदो नारायणोपाध्यायकृतभाष्यादौ दृश्यत इति प्रातः सन्ध्यावसानेऽपि तज्जपो विधीयते कैश्चित् ततश्च परैः कैश्चिदित्युक्तम् ॥

३५३. शिवालय इति ॥ तदा तस्मिन् समये इह शिवालये शुभराजभवने अभिषेचने अभिषेकमहोत्सवे प्रमोदिन आनन्दिताः शङ्खवादका इत्यर्थः शङ्खं शङ्खानीत्यर्थः जातावेकवचनं अवादयन् केचित् वारस्त्रीप्रमुखा नटाः पुरोऽग्रे श्रुतिः स्वरारम्भिकानन्दीचालनिकेत्यादि पूर्वोक्तरूपा तां पुरस्कृत्य जगुः गानं कृतवन्तः परे इतरे वारस्त्रीप्रमुखाः हस्तं प्रचाल्य हस्तचालनैरभिनीय पदक्रमैः पादविक्षेपैः ननृतुः ॥

सूर्यपक्षे ॥ तदा सूर्योदयसमये शिवालये शङ्करालये शङ्खं अवादयन् तत्सेवका इति शेषः सायं प्रातश्च शिवालयेषु सेवकमालिकैः शङ्खवादनं सुप्रसिद्धं इह शिवसन्निधौ अभिषेचने अभिषेकसमये प्रमोदिनः श्रद्धाभक्तिसमन्विता इत्यर्थः केचित् ब्राह्मणादयः श्रुतिं वेदं रुद्राध्यायरूपां मन्त्रसन्तति-

३५४. सुहृत्सरोजास्यमभूद्विकासितं प्रकाशितं दैन्यममित्रकैरवैः ।
गृहाद्बहिर्गत्य समीक्ष्य तत्क्षणं जहुः प्रियाश्लेषसुखं कुलस्त्रियः ॥

३५५. परस्परातिक्रमणात्पुरःसरा बभूवुरादानफलार्थिनो द्विजाः ।
हठादलुण्ठन् मधुपाः प्रमोदिनः प्रसारितश्र्यालय सर्वसम्पदः ॥

---

मित्यर्थः पदक्रमैः पदानां पाठक्रमैः वेदाध्ययन नियमविशेषैरिति यावत् पुरस्कृत्य प्रारभ्य हस्तं प्रचाल्य जगुः वेदगानं कृतवन्त इत्यर्थः "हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितं । ऋग्यजुस्सामभिर्दग्धो वियोनिमधिगच्छ"तीत्यादि स्मृतेरिति भावः परे इतरे ब्राह्मणादयः पुरः शिवस्य पुरोभागे ननृतुः नर्तनं चक्रुः "योन्वहं शिवलिङ्गाग्रे नर्तनं न करिष्यति । स कोटिजन्मपर्यन्तं मूलकूपेऽधितिष्ठती"त्यादि शिवरहस्याद्युक्तेः शैवानां शिवाग्रे नृत्यस्य नित्यत्वावगमादिति भावः ॥

३५४. सुहृदित्यादि ॥ तत्क्षणं तस्य राज्ञो विक्रमस्य क्षणमभिषेकोत्सवं समीक्ष्य दृष्ट्वा सुहृदां मित्राणां सरोजमिवास्यं वदनानि जातावेकवचनं विकासितं हर्षोद्रेकात्प्रसादितमभूत् अमित्रैरेवामित्रकैः स्वार्थिकः कप् शत्रुभिः रवैः काकुसूचकैर्ध्वनिभिः दैन्यं स्वकीयदीनभावं प्रकाशितं कुलस्त्रियः कुलवध्वः गृहात् निजभवनात् बहिर्गत्य तत्क्षणं समीक्ष्येति सर्वत्रयोजना प्रियाश्लेषसुखं निजभर्त्रालिङ्गनसुखं जहुस्तत्यजुः स्वभर्त्राश्लेषसुखमविगणय्य तदुत्सवदर्शनलालसा एव बभूवुरित्यर्थः ॥

सूर्यपक्षे ॥ तदा सूर्योदयसमये सुहृद्भूतानां सरोजानामास्यं विकासितमभूत् पद्मानि विकसितानीत्यर्थः अमित्रभूतैः कैरवैः दैन्यं मुद्रणं प्रकाशितं कुमुदानि मुद्रितानीत्यर्थः कुलस्त्रियः कुलवध्वः गृहात् वासभवनात् बहिर्गत्य बहिः भूत्वा तत्क्षणं सूर्योदयसमयं समीक्ष्य दृष्ट्वा प्रियाश्लेषसुखं सम्भोगसुखं जहुः दिवा मैथुनस्य निषिद्धत्वादिति भावः ॥

३५५. परस्परेत्यादि ॥ अत्रापि तदेत्यनुषञ्जनीयं तदा राज्ञोऽभिषेकसमये आदानफलार्थिनः प्रतिग्रहरूपफलाभीप्सवः द्विजा ब्राह्मणाः परस्परातिक्रमणात् अन्योन्योल्लङ्घनात् अग्रदानलिप्सयेतिभावः पुरःसरा अग्रगामिनो बभूवुः मधुपा मद्यपाश्चण्डालादयः प्रमोदिनः पानोन्मत्तत्वात् तदानीं निर्लुण्ठनेऽप्यदण्ड्यत्वप्रतिज्ञानात् धनापहरणोत्सुका सन्तः प्रसारिताः विक्रयार्थं निर्लुण्ठनार्थं वा बहिरुद्घाटिताः श्र्यालयस्य विक्रेतॄणां सम्पत्तियुक्तगृहस्य राज्ञो भाण्डागारस्य वा सर्वसम्पदः रत्नवस्त्रादिरूपाः हठात् प्रसभात् 'प्रसभन्तु बलात्कारो हठ' इत्यमरः । अलुण्ठन् निर्लुण्ठितवन्तः राज्ञोऽभिषेकादिमहोत्सवे निर्लुण्ठनादिकं लोकप्रसिद्धम् ॥

सूर्यपक्षे ॥ द्विजाः पक्षिणः आदानाय भक्षणार्थं सङ्ग्रहणाय फलान्यर्थयन्त इति फलार्थिनः जम्ब्वादि नानाविधफलाभीप्सवः दोऽवखण्डने इति वा धातुः आसर्वतोभावेन दानं चञ्च्वाघातादिकरणकखण्डनं तेन फलार्थिनः तथा भूत्वा परस्पराति क्रमणात् उड्डयनशैघ्र्यादन्योऽन्योल्लङ्घनात् पुरस्सराः बभूवुः रात्रिशेषे सूर्यकरप्रकाशलब्धावकाशाः पक्षिणो यथेष्टमाहारार्थं विजहुरित्यर्थः प्रमोदिनः सूर्योदये पद्मोन्मेषात् स्फीताः मधुपाः भ्रमराः प्रसारिता विकसिताः ये श्रियः लक्ष्म्याः आलयाः निवासस्थानानि पद्मानीत्यर्थः लक्ष्म्याः पद्मालयात्वात् तेषां सर्वसम्पदः मकरन्दादिरूपाः ताः हठात् अलुण्ठन् मधुपानादिना पद्मेषु भ्रमरा बभ्रमुरित्यर्थः ॥

३५६. ववौ सुखस्पर्शितया समीरणः प्रसादमाधत्त भृशं दिशां गणः ।
निरन्तरामङ्गळघोषविस्तरैर्निरस्तदोषा शुशुभे वसुन्धरा ॥

३५७. परिष्कृताङ्गैरपि वेषभूषणैर्जनैर्विजह्रे पुरमार्गवीथिषु ।
अवर्ति सर्वत्र नयानयासयार्पयेति लोकव्यवहार ईदृशः ॥

३५८. प्रतिष्ठितेनाप्यथ राजमण्डले सकेतुनैकेन कुचक्रवर्तिना ।
स्वकीययुक्तक्षणसम्प्रतीक्ष्या स्थितेन संस्थान्तरितः प्रतस्थिवान् ।

---

३५६. ववाविति ॥ राज्ञोऽभिषेकसमये समीरणो वायुः सुखः शैत्यमान्द्यगन्धयुक्ततया सुखकरः स्पर्शो यस्य तस्य भावस्तत्ता तया उपलक्षितस्सन् ववौ वाति स्म दिशां गणः दिक्समूहः भृशमत्यन्तं प्रसादं प्रसन्नतामाधत्त दधौ मङ्गळघोषाणां शङ्खस्वनादीनां विस्तरैः 'विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तर' इत्यमरः । निरन्तरा परिपूर्णा अतएव निरस्तदोषा शुभशकुनप्रचुरत्वादशुभशकुनशून्यः वसुन्धरा भूमण्डलं शुशुभे शोभितवती ॥

सूर्यपक्षे ॥ सूर्योदयसमये समीरणो वायुः सुखस्पर्शतया सूर्यकरापरितप्तत्वात् रात्रौ प्राणिनां सञ्चराभावेन रात्रिशेषे पांशुमलासंसृष्टत्वाच्च निर्दोषत्वेन हितकरस्पर्शतया उपलक्षितस्सन् ववौ दिशां गणः भृशं प्रसादमाधत्त सूर्यकरसम्पर्कान्निरस्तान्धकारत्वादिति भावः निरस्ता परिक्षीणा दोषा रात्रिर्यस्यास्सा 'दोषा रात्रौ भुजेऽपि चे'ति कोशात् । अतएव मङ्गळघोषविस्तरैर्मङ्गळपाठघोषनिवहैः निरन्तरापरिपूर्णा प्रातः काले ईश्वरनामकीर्तनादिरूपो मङ्गळपाठः प्रातः स्मरणरूपः प्रसिद्धः तथाभूता वसुन्धरा शुशुभे ॥

३५७ परिष्कृताङ्गैरिति ॥ तदा राज्ञोभिषेकसमये जनैः स्त्रीपुंसाधारणैः वेषभूषणैः यथोचितनेपथ्यालङ्करणैः परिष्कृतान्यङ्गान्येषां तैस्तथाभूतैरपि आकल्पवेषौ नेपथ्यं प्रति कर्मप्रसाधनं अलङ्कारस्त्वाभरणं परिष्कारो विभूषणमिति चामरः । पुरमार्गवीथिषु पुरं नगरं गृहोपरिगृहं वा पुरं शरीरमित्याहुर्गृहोपरिगृहे पुरं पुरो गुग्गुलुराख्यातो नगरेऽपि पुरं पुरीति धरणिः । मार्गो यातायातसरणिः वीथ्यतेऽनयेति वीथिः विथृयाचनेति धातोः इगुपधात्किदिति इन् दीर्घस्य बाहुलकत्वात् कृदिकारादिति ङीषो वा वैकल्पिकत्वात् ह्रस्वान्तोऽपि वीथिशब्दः तथा च 'पङ्क्तिवर्त्मगृहाङ्गेषु वीथिर्वीथी च वीथिके'ति रत्नकोशः अत्र वीथिर्गृहाङ्गं आपणः पण्यवीथिका वा आपणः पण्यवीथी च द्वयं वीथीति संज्ञितमिति शाश्वतः तेषु विजह्रे क्रीडितं सर्वत्र तत्तत्स्थानेषु नय, आनय, आसय, उपवेशय, अर्पय, समर्पय, इति ईदृशोऽन्योऽपि लोकव्यवहारः अवर्ति प्रवृत्तः ॥

सूर्यपक्षे ॥ निशावसाने जनैः रात्रिवासपरित्यागस्नानशौचादिपुरस्सरं वेषभूषणैः परिष्कृताङ्गैरपि पुरमार्गवीथिषु विजह्रे नयानयासयार्पयेति ईदृशो निशिनिवृत्तो लोकव्यवहारोऽपि पुनः सर्वत्र अवर्तीति सर्वं पूर्वेण समानम् ॥

३५८. प्रतीति ॥ अथ अभिषेकानन्तरं समयान्तरे इत्यर्थः स त्रिक्रमदेवः एकेन केतुना एकध्वजेनोपलक्षित इत्यर्थः इत्थम्भूतलक्षणे तृतीया जटाभिस्तापस इति वत् । कौ पृथिव्यां चक्रवर्ती

३५९. समन्त्रविद्याभ्यसनैस्समर्चितो भ्रमन्ननेकद्विजतीर्थसङ्कुले ।
सुरार्चनस्नानविसर्जनादिनाप्यगण्यपुण्यान्यतनोद्धरातले ॥

सार्वभौमः तेन अतएव राजमण्डले राजसमूहे अपि शब्दात्सकलजनजातेष्वपि प्रतिष्ठितेन प्रतिष्ठां प्रापितेन भरतखण्डाधिकृतेन (वैस्रायेति) पदवाच्येनेत्यर्थः तदानीं विक्टोरियामहाराज्ञ्याः सर्वाधिपत्येऽपि तन्नियोज्यस्यैव तस्यात्र खण्डे शासकत्वादिति भावः । स्वकीयं स्वसम्बन्धियुक्तं राज्यपालनोचितं यत्क्षणं समयस्तस्य प्रतीक्षया चतुर्दशवर्षवयस्कत्वेन तस्य तदानीं आंग्लनियमानुसारेण राज्यशासनेऽनुपयुक्तत्वात् द्वाविंशतिवर्षपरिमिते वयसि युक्तकालत्वप्रतिज्ञानाच्च तत्कालप्रतीक्षयेत्यर्थः आस्थितेन यत्नं कृतवता युक्तकालपर्यन्तं विशाखपत्तने स्थित्वांग्लविद्याभ्यासः कर्तव्य इति तदाज्ञयेत्यर्थः 'आस्थानयत्नयोरास्थे'त्यमरः । संस्थान्तरितः जय पुरात् स्थानान्तरित इत्यर्थः प्रतस्थिवान् प्रस्थानं कृतवान् लिटस्स्थाने क्वसुश्चेति क्वसुः वस्वेकाजाद्धसामितीट् यद्यपि क्वसुकानचौ छान्दसाविति त्रिमुनिमतं तथापि कवयो बहुलं प्रयुञ्जते "तं तस्थिवांसं नगरोपकण्ठे श्रेयांसि सर्वाण्यधिजग्मुषस्ते" इत्यादि भट्टोजिदीक्षितः कौमुद्याम् ॥

सूर्यपक्षे ॥ अथ कस्मिंश्चित्समये पर्वसन्धौ ससूर्यः एकेन केतुना तन्नाम्ना ग्रहविशेषेणेत्यर्थः बृहत्संहितादौ केतूनामनेकत्वोक्तेरेकेनेत्युक्तं किम्भूतेन राजमण्डले चन्द्रमण्डले प्रतिष्ठितेन "राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ "विति मेदिनी राहुश्चन्द्रमाश्रित्य रविं यदा च्छादयति तद्ग्रासाख्यं न तु तद्गतिरोधकरूपो ग्रास इति ज्योतिर्मतं राहोश्शरीरभागएव केतुरिति प्रसिद्धिः तथाभूतेनापि कुचक्रे भूमण्डले वर्तितुं शीलं यस्य तेन चन्द्रमण्डलाश्रितस्य तस्य छायारूपस्य भूमण्डले लक्षितत्वादिति भावः एवं स्वकीययुक्तक्षणस्य स्वग्रासोचितसमयस्य प्रतीक्षया स्थितेन विद्यमानेन "कृष्णपक्षे तृतीयायां मासर्क्षं यदि जायते । ततस्त्रयोदशेह्यह्नि राहुणा ग्रस्यते रवि"रित्यादि तत्समयस्योक्तत्वादिति भावः तथाभूतेन तेन संस्थान्तरितः संस्थया स्वमण्डलस्थित्या आच्छादितस्सन्नित्यर्थः प्रतस्थिवान् तस्य गतिरोधकत्वाभावाज्जगामेत्यर्थः ॥

स्थानान्तरं गत्वा किं कृतवान् तदाह ॥

३५९. स इति ॥ स विक्रमदेवः मन्त्राणां मन्त्रशास्त्राणां विद्यानां आंग्लभाषा प्रसिद्धानां च अभ्यसनैरभ्यासैस्समर्चितः पूजितः तन्निपुण इत्यर्थः अनन्तरं भ्रमन् देशपर्यटनं कुर्वन् अनेके द्विजा ब्राह्मणादयो येषु तैस्तीर्थैर्गङ्गायमुनादितीर्थविशेषैस्सङ्कुले व्याप्ते धरातले भूमण्डले सुरार्चनैस्तत्तत्क्षेत्र-स्थदेवानां पूजनैः स्नानैस्तत्तत्तीर्थावगाहनैः विसर्जनैः ब्राह्मणेभ्यो धनवितरणैः तदादिनापि दर्शनप्रणामा-दिनेत्यर्थः अगण्यपुण्यानि अपरिमितसुकृतानि अतनोत् विस्तारितवान् ॥

सूर्यपक्षे ॥ समर्चितो लोकपूजितः सपूर्वोक्तरूपः केतुग्रस्तो रविः भ्रमन् केतुग्रस्ततयागच्छन् अनेकैर्द्विजैर्ब्राह्मणादिभिः तीर्थैश्च सङ्कुले धरातले मन्त्राणां हुं फडन्तरूपाणां विद्यानां स्वाहान्तरूपाणां च अभ्यसनैः जपैः मन्त्राः पुंदेवता ज्ञेया विद्याः स्त्रीदेवताः स्मृताः पुं मन्त्रा हुं फडन्तास्स्युर्द्विठान्ताश्च स्त्रियो मताः इति तन्त्रशास्त्रं तथा सुरार्चनस्नानविसर्जनादिनापि अगण्यपुण्यानि अतनोत् लोकाना-मिति शेषः सूर्येन्दुग्रहणं यावत्तावत्कुर्याज्जपादिकमिति 'स्नानं दानं तपश्श्राद्धमनन्तं राहुदर्शने' इत्यादिना च स्नानदानादौ अनन्तफलस्मृतेरिति भावः ॥

३६०. अथोदयं प्राप्य पुरं व्यकाशयत्सपूर्वमेवार्चितविश्वकर्मणः ।
विवाह्य तां धर्मजितस्सुतां ततस्स्वमण्डले स्वां श्रियमुच्छ्रितां दधौ ॥

३६१. विराजमानेऽखिललोकपालके प्रभावमुष्मिन्विधिना प्रतापिनि ।
समन्ततो देवगणाः सुपूजिता हविर्भुजश्च प्रभया विरेजिरे ॥

---

३६०. अथेति ॥ अथ समयान्तरे स विक्रमदेवः पूर्वं प्रथममेव स्वराज्यप्राप्तेरर्वागित्यर्थः उदयं पुरं उदयपुरनामकं नगरविशेषमित्यर्थः प्राप्य गत्वा अर्चितानि पूजितानि विश्वानि सर्वाणि कर्माणि यस्य तस्य नृपोचितसकलसत्कर्मशालिन इत्यर्थः धर्मजितः धर्मजित्संज्ञकस्य राज्ञः तां रूपगुणादिप्रसिद्धां सुतां दुहितरं विवाह्य उपयम्य व्यकाशयत् तत्पुरं प्रकाशयामासेत्यर्थः ततः विवाहानन्तरं स्वमण्डले स्वदेशे 'मण्डलं देशबिम्बयो'रिति कोशात् उच्छ्रितां सर्वोन्नतां स्वां स्वकीयां श्रियं राजलक्ष्मीं दधौ स्वराज्यं प्राप्तवानित्यर्थः अस्य हि त्रिनवत्यधिकाष्टादशशत (१८९३) परिमिते क्रिष्टाब्दे (फिब्रवरि) द्वितीये मासि ऊनविंशति (१९) दिने छोटनागपुरान्तर्गत उदयपुरे वैवाहिकमङ्गलकृत्यमासीत् षण्णवत्यधिकाष्टादशशतपरिमिते (१८९६) क्रिष्टाब्दे (नवम्बर) एकादशमासस्य (२७) सप्तविंशतिदिवसे स्वराज्यप्राप्तिमहोत्सवः राज्यस्वातन्त्र्यञ्च आसीदिति बोध्यम् ॥

सूर्यपक्षे ॥ अथ प्रासानन्तरं स सूर्यः उदयं प्राप्य प्रासाद्विमुच्येत्यर्थः पुरं स्वशरीरं व्यकाशयत् पुरं शरीरमित्याहुरिति धरणिः पूर्वमेव प्रथममपि सृष्ट्यादावित्यर्थः धर्मेण कारुत्वादि स्वधर्मेण जयति लोकानिति धर्मजित् तस्य धर्मजितः अतएव अर्चितो लोकपूजितश्चासौ विश्वं कर्मास्मात् अस्य वा विश्वकर्मा चेत्यन्वर्थनामा तस्य सुरशिल्पिनः तां प्रसिद्धां संज्ञानाम्नीमित्यर्थः सुतां विवाह्य संज्ञानाम्नी विश्वकर्मणो दुहिता सूर्यपत्नीति पुराणप्रसिद्धम् ततः स्वमण्डले स्वगोळे सूर्यलोके इति यावत् उच्छ्रितां स्वां श्रियं विभूतिं दधौ पुपोष ॥

३६१. विराजमान इति ॥ प्रतापिनि प्रभाववति विधिना रक्षाविधानेन अखिललोकपालके समस्तजनरक्षके अस्मिन् प्रभौ परिवृढे विक्रमदेव इत्यर्थः विराजमाने प्रकाशमाने सति देवगणाः देव्यश्च देवाश्च देवाः पुमान् स्त्रियेत्येकशेषः तेषां गणाः समूहाः समन्ततः सर्वत्र स्वदेशे इत्यर्थः सुपूजिताः सुष्ठु समर्चिताः हविर्हवनीयद्रव्यं भुञ्जत इति हविर्भुजश्च सन्तः प्रभया सान्निध्योत्कटया रुचा विरेजिरे विशेषेण दीप्यन्ते स्म ॥

सूर्यपक्षे ॥ प्रतापिनि प्रतापयितुं शीलं यस्य तस्मिन् अखिललोकपालके निखिलभुवनपरिपालके 'लोकस्तु भुवने जन' इत्यमरः तथाभूते प्रभौ ईशितरि सूर्ये विधिना लोकरक्षा विधानेन विधात्रा वा अस्मिन् स्वमण्डलात्मकसूर्यलोके विराजमाने प्रकाशमाने सति समन्ततः सर्वत्र तन्मण्डले विद्यमाना इत्यर्थः देवगणाः सुपूजिताः लोकैस्समर्चिताः हविर्भुजश्च यागादौ हविर्भुञ्जानाश्च सन्तः प्रभया स्वस्वतेजसा विरेजिरे सूर्यमण्डले सर्वदेवनानां स्थितत्वमुक्तं नारदेन भविष्ये यथा 'कदाचित्पर्यटन् लोकान् सूर्यलोकमहं गतः। तत्र दृष्टो मया सूर्यः सर्वदेवगणैर्युतः ॥ गन्धर्वैरप्सरोभिश्च नागैर्यक्षैश्च राक्षसैः' इत्यादि ब्राह्मेपर्वणि पट्सप्ततिमितेऽध्याये ॥

३६२. विधेर्निषेधस्य च सर्वकर्मणां प्रबोध्य साक्षादिह वेदमूर्तयः ।
समन्त्रकाब्राह्मणराशयः पृथक् श्रिया लसन्तः परितो बभासिरे ॥

३६३. यतस्सुवृष्ट्योभयतोमुखी विहायिताम्बुधारा स्रवदापगाकुलैः ।
बभूव सर्वापि सपर्वतस्थला सदैव यावत्फलशालिनीधरा ॥

३६२. विधेरिति ॥ इह जयपुरे राज्ञोऽस्य राज्यसमये वा सर्वकर्मणां धर्माधर्मफलकानां विधेः निषेधस्य च विधिनिषेधाविस्यर्थः कर्मणि षष्ठी प्रबोध्य बोधयित्वा अतएव साक्षात्प्रयक्षभूताः वेदामूर्तयो देहा इव येषां ते मूर्तिमन्तो वेदा इव स्थिता इ यर्थः समन्त्रका मान्त्रिकाः वैदिकतान्त्रिकोभयमन्त्रविद इत्यर्थः तथाभूता ब्राह्मणराशयः विप्रसमूहाः पृथक् श्रिया विभिन्नब्रह्मतेजस्सम्पत्त्या लसन्तः दीप्य-मानास्सन्तः परितस्सर्वत्र बभासिरे दीप्यन्ते स्म ॥

सूर्यपक्षे इह सूर्यलोके परितः समन्त्राः प्रगीता प्रगीतरूपङ्क्तिविधमन्त्रसहिताः स्वार्थिकः कः ब्राह्मणानां विध्यर्थवादानुवादरूपाणामुपनिषदादीनामित्यर्थः राशयः मन्त्रब्राह्मणभेदेन वेदस्य द्वैविध्यादिति भावः ' तद्रूपा वेदमूर्तयः वेदानां ऋग्यजुस्सामाथर्वरूपाणां मूर्तयश्शरीराणि साक्षात् प्रत्यक्षोभूय सर्वकर्मणां विधेर्निषेधस्य च प्रबोध्य 'पशुना यजेत न हि कलञ्जं भक्षये'दित्यादिना विधिनिषेधोभयं बोधयित्वा पृथक् श्रिया मन्त्रब्राह्मणादिरूपविभिन्नसम्पत्त्या लसन्तः तस्मिन्नेव सूर्यलोके श्लिष्यन्तः क्रीडमाना वा लसश्लेषण क्रीडनयोरिति धातुः बभासिरे दीप्यन्ते स्म 'ऋचो यजूंषि सामानि मूर्तिमन्तीह सर्वशः' इति तत्रैव भविष्ये ॥

३६३. यत इति ॥ यतः यस्माद्धेतोः तस्य राज्ञः सत्पालनजपहोमसुरार्चनादि जन्यपुण्यफलादित्यर्थः सपर्वतस्थला पर्वतस्थलसहिता सर्वापि धरा सकला अपि भूप्रदेशाः सुवृष्ट्या जीमूतकामाम्बुवर्षणेन तथा उभयतः पुरः पश्चाच्च मुखे यस्याः सा उभयतो मुखी सद्यः प्रसूयमाना गौः तासां विहायितानि दानानि 'त्यागो विहायितं दान'मित्यमरः "प्रसूयमानां यो दद्याद्धेनुं द्रविणसंयुतां । यावद्वत्सो योनिगतो यावद्गर्भं न मुञ्चति । तावद्गौः पृथिवी ज्ञेया सशैलवनकानने" त्यादिना उभयमुखी दानस्य फलातिशयस्मृतेस्तत्प्रधा-नानि दानानीत्यर्थः तत्सम्बन्धिन्यो या अम्बुधारा जलधाराः "अन्तर्जानुकरं कृत्वा सकुशं सतिलोदकं । फलान्यपि च सन्धायप्रदद्याच्छ्रद्धयान्वित" इति 'ओङ्कारमुच्चरन् प्राज्ञो द्रविणं स कुशोदकं । गृह्णीयाद्दक्षिणे हस्ते तदन्ते स्वस्ति कीर्तये'दिति च दानप्रतिग्रहयोः सजलत्वस्मृतेरिति भावः । ताभिः स्रवन्त्यो या आपगा नद्यस्तासां कुलैः एतेन राज्ञो दानशौण्डत्वं सूच्यते सदा सर्वदैव यावत्फलशालिनी सर्वसस्यसम्पन्ना बभूव नदी देवमातृकतया समविषमोभयप्रदेशेषु सर्वत्राप्युर्वरा बभूवेत्यर्थः ॥

सूर्यपक्षे ॥ यतस्सूर्यात् सुवृष्ट्या सुष्ठु वर्षणेन आदित्याज्जायते वृष्टिरिति स्मरणादिति भावः विहायिता वृष्ट्यैव विसर्जिता या अम्बुधारास्ताभिः स्रवदापगाकुलैः स्रवन्नदीसमूहैः सपर्वतस्थला सर्वापि धरासदैव यावत्फलशालिनी सती उभयतोमुखी वृष्टिनद्युभयतोमुखमुपायो यस्यास्सा तथा बभूवेति पूर्वस्माद्विशेषः "मुखं निस्सरणे वक्त्रे प्रारम्भोपाययो" रिति मेदिनी ॥

३६४. अमुष्य लोकानुपकुर्वतो गतानमित्रता कुत्रचिदप्रकाश्यताम् ।
तथा विलुप्तश्च तदीयतेजसा बभूव नक्षत्रगणो विलक्षितः ॥

३६५. यतोऽन्धकारा इव वैरिणो दिवा नितान्तभीता विविशुर्गुहादिषु ।
व्यधाद्भृशं चौरभुजङ्गसंहतिर्निवृत्तवृत्तिर्निजरूपगोपनम् ॥

३६६. मदातिरिक्तैरपि वारिसङ्गतैर्नदद्भिरुच्चैरदनक्रियातुरैः ।
सुपुष्करोद्यन्नळिका कराश्रितैर्व्यनोदि दुर्वारणचक्रकैर्यतः ॥

३६४. अमुष्येति ॥ लोकान् जनान् उपकुर्वतः निखिललोकोपकारं कुर्वतः अमुष्य राज्ञो विक्रमस्य मित्रता सुहृद्भावः कुत्रचित् कस्मिन्नपिस्थले अप्रकाश्यतां न गता न प्राप्ता समस्तलोकोपकारकत्वेन सर्वत्रैव सुहृद्भावः प्रकाशित इत्यर्थः तथा तद्वत्प्राचुर्यादिसम्पन्नेन तदीयतेजसा तस्य राज्ञस्सम्बन्धिनाप्रतापविभवेन विलुप्तः पराभूतः क्षत्रगणश्च क्षत्रियसमूहोपि विलक्षितः विशेषेण लक्षितः कुत्रचिदपीत्यर्थः न बभूव नासीत् स्वतेजसा समस्तक्षत्रियतेजस्संहृतमिति भावः ॥

सूर्यपक्षे ॥ लोकान् समस्तभुवनानि उपकुर्वतः आलोकदानेन प्रीणयतः अमुष्य सूर्यस्य मित्रता स्नेहनंमित्रसंज्ञितेति यावत् 'द्युमणिस्तरणिर्मित्र' इत्यादि कोशात् कुत्रचिल्लोके इत्यर्थः अप्रकाश्यतां अविदिततां न गता न प्राप्ता समस्तलोकप्रकाशकत्वेन सर्वत्रविदितमित्रनामेत्यर्थः तथा तदीयतेजसा तदीयदीप्त्या 'तेजः प्रभावे दीप्तौ' चेत्यमरः विलुप्तः अभिभूतः नक्षत्रगणः तारानिवहः नलक्षितो विलक्षितः बभूव अलक्षित आसीदित्यर्थः विशेषवैरूप्यनञर्थगति दानेष्विति मुग्धबोधटीकायां दुर्गादासः ॥

३६५. यत इति ॥ यतः विक्रमाद्धेतोः नितान्तभीताः एकान्तत्रस्ताः वैरिणश्शत्रवः दिवा दिवसभागेगुहादिषु गिरिगह्वरादिषु अन्धकारा इव विविशुः प्राविशन् रात्रावेव स्वगृहमागत्य भक्ष्यपानादि निर्वर्तनेन दिवा गुहादिषु दुर्लक्ष्यतया शरीरगोपनं विदधुः लक्षितत्वे प्राणरक्षणेऽपि संशयादिति भावः तथा चौरास्तस्कराः भुजङ्गा पिङ्गाः तेषां संहतिस्समूहः निवृत्ता विरता वृत्तिः स्वस्वव्यापारश्चौर्यपरस्त्रीलम्पटादिरूपो यस्यास्सा तथाभूता सती भृशमत्यन्तं निजरूपगोपनं निजमात्मीयं यद्रूपं स्वभावः परद्रव्यापहरणाभिलाषित्वादि रूपः तस्य गोपनं निन्हुतिं निन्दनं वा गुपगोपनकुत्सनयोरिति धातुः दण्डभयाद्देशान्तरपलायनेन स्वशरीररूपगोपनं वा व्यधाद्विदधौ ॥

सूर्यपक्षे ॥ यतस्सूर्यात् अन्धकाराः तमिस्राणि दिवा दिवसे नितान्तभीताः वैरिणः शत्रव इव नितान्तदिवा भीता इत्यनेन उलूका इवेति च व्यज्यते । तेषामपि दिवा भीतत्वात् गुहादिषु अनातपस्थलेषु गह्वरेषु विविशुः प्रवेशं चक्रुः तथा चौरभुजङ्गसंहतिः चौरास्तस्कराः भुजङ्गाः पिङ्गा सर्पा वा 'भुजङ्गः पिङ्गसर्पयो'रिति कोशात् तेषां संहतिः भृशं निवृत्तवृत्तिर्विगतव्यापारा सती निजरूपगोपनं व्यधात् विदधौ चौराणां पिङ्गानां सर्पाणां वा निशि स्वच्छन्दचारिणां दिवसे इतरजनसन्दर्शनाशङ्कया स्वस्य व्यापारं परित्यज्य स्वात्मगोपनं समुचितमिति भावः ॥

३६६. मदातिरिक्तैरिति ॥ यतः विक्रमदेवाद्धेतोः तमाश्रित्येति वा ल्यब्लोपे पञ्चमी यद्वा यत इति षष्ठीस्थाने सार्वविभक्तिकस्तसिः यत्सम्बन्धिभिरित्यर्थः दुर्वारणचक्रकैः दुष्टानां वारणानां मतङ्गजानां

३६७. प्रशस्तकेशा अपि यानवाहका मनस्समीरोभयतो जवाधिकाः ।
यदीयवाहाः क्षितिचक्रवर्तिनः सकेशियायी सरसाङ्कितोऽप्यभूत् ॥

चक्राण्येव चक्रकानि व्रजाः स्वार्थे कप् तानि च दुर्वारणानि अवारणानि अप्रतिषिद्धगतीनीति यावत् यानि चक्राणि सैन्यानि तानि च तयोरुभयोरेकशेषः 'वारणं प्रतिषेधे स्याद्वारणस्तु मतङ्गजे' इति विश्वः 'चक्रः कोके पुमान्क्लीबं व्रजे सैन्यरथाङ्गयो'रिति मेदिनी । यद्वा दुर्वारणा दुर्गजाः च क्रकाणि सैन्यानि ते च तानि चेति च द्वन्द्वः तैः व्यनोदि विनोदितं भावे तङ् भावस्यैकत्वादेकवचनं किम्भूतैस्तैः तत्र गजपक्षे मदैः दानस्रावैः अतिरिक्तास्समधिकाः तैरुत्कटमदैरित्यर्थः अतएव वारिसङ्गतैः वारिर्गजबन्धनस्थानं 'वारिवा-ग्गजबन्धिन्योः स्त्री क्लीबेऽम्बुनि वालुके' इति मेदिनी । तत्र सङ्गतैर्निबद्धैरित्यर्थः तथापि उच्चैर्नदद्भिः ध्वनिं कुर्वद्भिः तथा रदनक्रियायां तिर्यग्दन्तप्रहाररूपायां तटोत्खातक्रीडायां आतुरैरत्यासक्तैः सुपुष्करैः शोभनकराग्रैरुद्यन्त उद्गच्छन्तो नलिकाकाराः कराः शुण्डा दण्डास्तैरञ्चितैः पूजितैः मस्तकोपरिप्रकाशित-पुष्करैरिति भावः 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले । व्योम्नि खड्गफले पद्मे तीर्थौषधि विशेषयो' रित्यमरः । तथाभूतैर्दुर्वारणैर्व्यनोदीत्यर्थः । सैन्यपक्षे मदो गर्वः तेनातिरिक्तैः बलदर्पितैरित्यर्थः 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयो'रिति विश्वः अरिसङ्गतैररिभिः प्रत्यर्थिभिः सङ्गतैः सङ्गरमिलितैः सद्भिः रदनक्रियया दशनचर्वणक्रियया आतुरैरासक्तैः तथा उच्चैर्नदद्भिः सिंहनादं कुर्वद्भिः सुष्ठु पुष्कराणि खड्गफलानि काण्डा वा 'पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि' चेति विश्वः । तैरुद्यन्त उत्प्लुत्य गच्छन्तः नलिका आयुधविशेषाः नळीति बन्धुक इति लोके प्रसिद्धः उक्तञ्च वैशम्पायनोक्तधनुर्वेदे 'नलिका ऋजुदेहास्यात्तन्वङ्गो मध्यरन्ध्रिका' इत्यादि । अस्या अधिकविवरणं शुक्रनीतौ द्रष्टव्यम् । ताः करेषु येषा-मञ्चिताश्च ते विशेष्यविशेषणभावस्समासः केचित्काण्डखड्गफलकधारिणः केचिन्नलिकाख्यायुधधारिणश्च तैश्चक्रकैः सैन्यैरपिवेति निर्धारणे यतः व्यनोदीनि सम्बन्धः ॥

सूर्यपक्षे ॥ यतस्सूर्याद्धेतोः दुर्वारणैश्चक्रकैश्चक्रवाकैर्व्यनोदीति सम्बन्धः किम्भूतैर्मदेन हर्षेण काममदेन वा अतिरिक्तैरुद्रिक्तैः निशि दाम्पत्यसुखोच्छिन्नानां तेषां दिवासम्मेळनात् सूर्यस्य दिवाकर-त्वादिति भावः । वारिषु वारिप्रधानप्रदेशेषु पुष्करिण्यादिष्वित्यर्थः । सङ्गतैस्सम्मिलितैः उच्चैर्नदद्भिः हर्षोद्रेकादेव परस्पराह्वानं कुर्वद्भिः तथा अदनक्रियायां भक्षणकर्मणि अद भक्षणे इति धातोर्भावे ल्युट् आतुरा आसक्तास्तैः अतएव सुष्ठ्व्यः पुष्कराणां पद्मानां सम्बन्धिन्यः उद्यन्त्यो बहिः प्रकाशमानाः विशदा इति यावत् या नलिका मृणालिकाः ताएव करेषु हस्तेषु अञ्चिता इव कराञ्चिताश्चञ्चुगृहीता येषां तैस्तथाभूतैरपि दुर्वारणा अप्रतिषिद्धप्रसराः निर्भीका इति यावत् । ते च ते चक्रकाश्चेति तैर्व्यनोदीत्यर्थः ॥

३६७. प्रशस्तेत्यादि ॥ यदीयवाहाः यस्य राज्ञः सम्बन्धिनो घोटकाः 'घोटकेपीति तुरगतुरङ्गाश्च-तुरङ्गमाः 'वाजिवाहार्वगन्धर्व हयसैन्धव सप्तयः' इत्यमरः ते किम्भूताः प्रशस्ताः केशा मूर्धजा येषान्ते दीर्घ-केशा इत्यर्थः अश्वकेशानां दैर्घ्यमेव प्राशस्त्यम् उक्तञ्च नकुलशास्त्रे 'आस्यं भुजा केश कृकाटिकाश्च दीर्घं चतुष्कं तुरगस्य शस्त'मिति तथा यानवाहकाः सर्वेऽपि रथवहनसमर्था इत्यर्थः अपिशब्दात्सादिवाहकाश्च मनस्समीरोभयतः मनः पवनोभयस्मादपि जवेनाधिका जवाधिका शीघ्रगामिन इत्यर्थः । गतेरनिशीघ्रय-

३६८. विभिन्नभास्वन्मणिजातसादरो जगत्परिष्कारविधानतत्परः ।
विकाश्य कोशान् वसुभिर्विशेषतः स पद्मरागैकनिकेतनं बभौ ॥

३६९. चिरन्तनं दुर्गमधिष्ठितं वियज्जिघत्सदुच्चैश्छविना जगज्जयि ।
अकारयच्चारुतरं तदादितः स सूर्यनामादिमहल्लसत्पुरम् ॥

---

द्योतनार्थं मनस्समीरोभयत इत्युक्तम् तथाभूता यदीयवाहा आसन्नित्यर्थः स विक्रमदेवः क्षितौ पृथिव्यां चक्रवर्ती सार्वभौमः तस्मात् तत्सकाशात् केशीयायी (के. शि. ऐ. यी.) इति सर् इत्येताभ्यां पदाभ्यां साङ्कितः अङ्कितेन चिह्नेन सहितः तथा आङ्ग्लपदप्रतिष्ठितोऽपि अभूत् ॥

सूर्यपक्षे ॥ यानवाहकाः एकचक्ररूपरथवोढारः प्रशस्तकेशाः प्रशस्तमूर्धजाः अपि शब्दादन्यघोटक-लक्षणसम्पन्नाः यदीयवाहाः यस्य सूर्यस्य सम्बन्धिनो घोटकाः सप्तसङ्ख्या इत्यर्थः मनस्समीरोभयतो जवाधिकाः अतिव्यग्रशालिन इत्यर्थः अतएव क्षितौ भूमण्डलोपरिभागे चक्रवत् वर्तितुं शीलं येषान्ते तथोक्ताः सर्वदा भूगोळस्योर्ध्वभागे वियति चक्रवद्भ्रमणशालिन इत्यर्थः तथाभूता वर्तन्त इति शेषः केशियायी प्रशस्ताः केशाः सन्त्येषामिति केशिनः स्वघोटकाः प्राशस्त्ये इन् स्वघोटकानां प्रशस्तकेशस्योक्तत्वात् तैर्यातुं गन्तुं शीलं यस्य केशियायी स सूर्यः सरसाङ्कितः रसया पृथिव्या सह वर्तमानास्सरसाः पृथिवीस्थितजनाः तैरङ्कितश्चिह्नितः अवलोकित इति यावत् यद्वा रसेन जलेन सहितास्सरसाश्चन्द्रतारकादयः तेषां जलीयत्वात् तेषु अङ्कितः प्रतिबिम्बितः स्वकिरणैः प्रकाशकत्वेन चिह्नित इति यावत् तथाभूतोऽप्यभूदित्यर्थः ॥

३६८. विभिन्नेत्यादि ॥ स विक्रमदेवः विभिन्नानि नानाप्रकाराणि भास्वन्ति जाज्वल्यमानानि च यानि मणिजातानि रत्नसामान्यानि हीरकादीनीत्यर्थः तेषु सादरआदरसहितः तेषां सङ्ग्राहक इत्यर्थः जगति पृथिव्यां ये परिष्कारा विभूषणानि तेषां विधाने निर्मापणे विषये तत्पर आसक्तः नानाप्रकाररत्नखचिता-लङ्कारसङ्ग्राहक इत्यर्थः 'अलङ्कारस्त्वाभरणं परिष्कारो विभूषण'मित्यमरः । अतएव वसुभिर्नानाविधद्रव्यैः कोशान् भाण्डागाराणि विशेषतः बाहुल्यात् विभेदतो वा विकाश्य तानि वसुभिः पूर्णानि कृत्वेत्यर्थः तथा पद्मरागाणां रत्नविशेषाणां एकनिकेतनं एकाश्रयो बभौ भाति स्म पद्मरागाख्यानि रत्नानि बहूनि सञ्चितवानित्यर्थः ॥

सूर्यपक्षे ॥ स सूर्यः विभिन्ना विशेषिताः द्रवीभूता इति यावत् ये भास्वन्मणयः सूर्यकान्तशिलाः तेषां जाते सामान्ये सादरः कृतादरः जगतां भुवनानां परिष्कारविधाने आलोकदानेन परिष्कृतिकरणे तत्परः वसुभिर्मयूखैः 'वसुर्मयूखाग्निजनाधिपेषु' इति विश्वः कोशान् पद्मकुड्मलान् विशेषतः विकाश्य प्रकाश्य पद्मानां पद्मपुष्पाणां रागस्यानुरागस्य एकनिकेतनं एकस्थानं तथाभूतस्सन् बभावित्यर्थः ॥

३६९. चिरन्तनमिति ॥ स विक्रमदेवः आदितः प्रथमतः समस्तपुरप्रासादनिर्माणात्प्रागित्यर्थः तत्प्रसिद्धं सूर्य इति नाम आदौ वाचकशब्दे यस्य तथाभूतं महल्लपदवाच्यं सूर्यमहलाख्यमित्यर्थः सत्पुरं साधुराजभवनं अकारयदिति सम्बन्धः । किम्भूतं तत् चिरन्तनं दुर्गं पुराणप्राकारात्मकं अधिष्ठितं पुराण-प्राकारात्मकदुर्गमध्ये स्थितमित्यर्थः 'अधिशीङ्स्थासां कर्म' उच्चैर्वियदाकाशं जिघत्सत् अभ्रंलिहमित्यर्थः

**३७०. तथापरं प्रावृति दिग्दलान्तरस्फुटाट्टहासाञ्चितसर्वतोमुखम् ।**
**स्वमालयं द्वारचतुष्कशोभितं धरापुरालङ्कृतमप्यकल्पयत् ॥**

---

अत्युन्नतमिति यावत् छविना कान्त्या जगज्जयि जगज्जयशालि सर्वोत्कर्षमित्यर्थः चारुतरं अतिसुन्दरं अत्रेदमवधेयम् अस्य राज्ञः प्रपितामहस्य जगन्नाथसागरादिनिर्मातुः राज्ञो रामचन्द्रदेवस्य राज्यसमये महाप्राकारपरिखादिसहितमेकं राजभवनं निर्मापितम् कालक्रमेण तत्सर्वं विशीर्य प्राकारात्मकदुर्ग-मात्रावशेषं स्थितम् ॥ अयं हि विक्रमदेवः तद्दुर्गमध्ये अभिनवमपरं राजभवनं निर्माय सूर्यमहलनाम्ना तत्प्रख्यापयामासेति ॥

सूर्यपक्षे ॥ सूर्यनामा सूर्य इति नाम यस्य तथाभूतस्सदेवः आदितः प्रथमतः सौरसृष्ट्यादावित्यर्थः चिरन्तनं चिराय भवं सायन्तनेत्यादिना द्युः दुर्गं दुर्गमं इतरैर्दुष्प्रापमित्यर्थः वियदाकाशमधिष्ठितं आकाशे प्रतिष्ठितमित्यर्थः उच्चैश्छविना महाप्रभया जगत् समस्तमपि लोकं अत्तुमिच्छति जिघत्सति जिघत्सतीति जिघत्सत् तत् अदभक्षणे इत्यस्माद्धातोस्सन्नन्ताच्छतृप्रत्ययः ग्रसमानमित्यर्थः अतएव जयि सर्वोत्कर्षशालि चारुतरं अतिसुन्दरं तत्प्रसिद्धं आदिसमस्तपुरादिभूतं महत् विशालं लसत् चलात्मकमित्यर्थः तथाभूतं पुरं सूर्यलोकात्मकं अकारयत् देवशिल्पिनेति शेषः ॥

३७०. तथेति ॥ स विक्रमः तथा तेन रूपेण अपरं स्वं आलयं स्वकीयं राजभवनं अकल्पयत् कारयामास किम्भूतं तत्? प्रावृतौ पुरप्राकारे दिग्दलानां दिक् खण्डानां 'दलमुत्सेदखण्डयो'रिति कोशात् अन्तरेषु मध्येषु स्फुटाः प्रव्यक्ताः ये अट्टाः क्षौमाः 'स्यादट्टः क्षौममस्त्रिया' मित्यमरः प्राकारोपरि विरचिता गृहविशेषा इत्यर्थः तेषां हासैः विकासैः अञ्चितं पूजितं च तत् सर्वतस्समन्तान्मुखानि निस्सरणानि प्रवेशनिर्गमनमार्गा इति यावत् यस्य तच्च तत्तथाभूतं द्वारचतुष्केण चतसृष्वपि दिक्षु चतुर्भिर्द्वारैरित्यर्थः शोभितं धरायां पृथिव्यां यानि पुराणि अगाराणि 'अगारे नगरे पुर'मित्यमरः तेषामलङ्कृतं अलङ्कारभूतं सर्वोत्कृष्टभूतमित्यर्थः ॥

सूर्यपक्षे ॥ स सूर्यः तथा आगमशास्त्रानुसारेण अपरं यन्त्रात्मकमित्यर्थः स्वमालयं निजभवनं अकल्पयत् तस्मिन्नेव सूर्यलोके कल्पयामासेत्यर्थः किम्भूतं तत्? प्रावृतौ वृत्तोपरिभागे दिक्षु अष्टदिक्षु यानि दलानि पत्राणि तेषामन्तरे मध्ये अष्टदलपद्मान्तरकर्णिकायामित्यर्थः स्फुटेन प्रव्यक्तेनाट्टहासेन अतिशयहसनेन 'अट्टोऽतिशये' इति मेदिनी । अञ्चिता पूजिता अट्टहासयुक्तेति यावत् । सर्वतोमुखा नवपीठशक्त्यन्तरगता सर्वतोमुखीनाम्नी श्रीशक्तिर्यस्य तत् स्वाङ्गाच्चोपसर्जनादिति वैकल्पिको ङीपभावः धरापुरेण भूपुरेण चतुरस्रेणेति यावत् अलङ्कृतं भूषितं द्वारचतुष्केण शोभितं चतुरस्रचतुर्द्वारमपीत्यर्थः सूर्यस्य नवपीठशक्तयो यथा 'दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा । अमोघा विद्युता चेति मध्ये श्रीस्सर्वतोमुखी ' इति अष्टदलपद्मात्मकं यन्त्रं सूर्यस्य सुप्रसिद्धमेव ॥

३७१. स्वतापनीयासनमत्रयोज्वलत्प्रभं विनिर्माय विराजितस्स्वयम् ।
अनेकदेवायतनानि तैजसान् विमानसङ्घान् परितोऽप्यभासयत् ॥

३७२. अथोचितालापनकेळिकौतुकैः सहैव राज्ञा विलसन्प्रसन्नधीः ।
स तत्र तद्भावमवर्धयत्क्रमात्सुतस्पृही लोककुलोदयाय हि ॥

---

३७१. स्वेत्यादि ॥ यः विक्रमदेवः ज्वलन्ती जाज्वल्यमाना प्रभा यस्य तथाभूतं तत् स्वं स्वकीयं तापनीयं तपनीयसम्बन्धि तस्येदमित्यण् सुवर्णमयमित्यर्थः 'स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकं तपनीय' मित्याद्यमरः यत् आसनं तत् सूवर्णमयराजसिंहासनमित्यर्थः विनिर्माय कारयित्वा स्वयमत्र विराजितः प्रकाशित आसीदित्यर्थः तथा अनेकदेवायतनानि बहुदेवस्थानानि प्रासादमण्डपादीनीति यावत् । एवं तैजसान् स्वर्णरौप्यादिधातुघटितान् 'सर्वं स्यात्तैजसं लोह'मित्यमरः विमानसङ्घान् यानविशेषानपि विनिर्मायेत्यर्थः परितः समन्तात् अभासयत् प्रकाशयामास स्वस्य सुवर्णमय महासिंहासनं देवी विजयोत्सवार्थमेकं सुवर्णविमानं रौप्यविमानमपरं गजपृष्ठासनविशेषांश्च स्वर्णरौप्यमयान् सम्पाद्य यथायथं तदुपभुञ्जानः स राजा आसीदित्यर्थः ॥

सूर्यपक्षे ॥ यः सूर्यः अत्र यन्त्रात्मकपुरे इत्यर्थः ज्वलत्प्रभं जाज्वल्यमानं तापयतीति तापनः सूर्यः तपनस्तापनः सूर्य इत्यादि प्रयोगदर्शनात् तापनस्य इदं तापनीयं यत् आसनं सौरासनं स्वं स्वकीयं च तत् तापनीयासनं चेति तत् अत्र स्वपदेन सूर्यसम्बन्धित्वबोधेऽपि तापनीयपदं ब्रह्मविष्णुरुद्रात्मकत्वबोधनार्थः सौरपीठस्य ब्रह्मविष्णुरुद्रात्मकत्वप्रसिद्धेः तथाभूतं तद्विनिर्माय स्वयं विराजितः तत्र प्रकाशित आसीदित्यर्थः तथा परितः स्वमण्डले चतुः पार्श्वे अनेकदेवायतनानि नानादैवतानां स्थानानि तैजसान् तेजस्सम्बन्धीन् देवानां तैजसशरीरत्वात् तत्सम्बन्धीनिति वार्थः विमानसङ्घान् व्योमयानसमूहानपि अभासयत् व्योम्नि प्रकाशयामास एतेन तस्य सावरणत्वमुक्तं वेदितव्यम् ॥

३७२. अथेति ॥ अथ प्रसङ्गान्तरे प्रसन्नधीः हर्षोत्फुल्लमानस इत्यर्थः स विक्रमदेवः तत्र जयपुरे लोकानां जनानां कुलस्य स्ववंशस्य च उदयाय सम्पत्तये सुतस्पृही पुत्रकांक्षी हीति निश्चितं सम्भोगाभिलाषस्त्वानु पङ्गिक इति भावः तथाभूतस्सन् राज्ञ्या निजपट्टमहिष्या सहैव उचितालापनकेळिकौतुकैः सम्भोगोचित हास्यालापविलासकुतूहलैरनुभावविशेषैः विलसन् कामक्रीडां कुर्वन् क्रमात् दैनंदिनवृद्धिक्रमात् तद्भावं तस्याः राज्ञ्याः भावः प्रेमातिशयः तं अवर्धयत् पुपोष कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः । गर्भस्सञ्जायते नार्या इत्यादि स्मरणादिति भावः ॥

सूर्यपक्षे ॥ अथ कस्मिंश्चित्समये प्रसन्नधीः स सूर्यः तत्र स्वमण्डले लोकानां भुवनानां कुलस्य स्वसूर्यवंशस्य च उदयाय अभ्युदयाय विस्ताराय च सुतस्पृही पुत्रकांक्षी हि राज्ञ्या निजपत्न्या संज्ञया उक्तञ्च ब्राह्मेपर्वणि भविष्ये 'या संज्ञा सा स्मृता राज्ञी छाया या सा तु निक्षुभा । राजदोसौ स्मृतो धातू राजा राजति यत्सदा । अधिकस्सर्वभूतेभ्यो राजते च दिवाकरः । अधिकं राजते यस्मात्तस्माद्राजा स उच्यते राज्ञः पत्नी तु सा यस्मात्तस्माद्राज्ञी प्रकीर्तिते'ति तया सहैव उचितालापनकेळिकौतुकैः विलसन् क्रमात् तद्भावं अवर्धयदिति पूर्वेण समानोऽर्थः ॥

**३७३. तथा च सा भर्तृमतानुवर्तिनी प्रवर्ध्य तत्प्रेमसुरूपसद्गुणैः ।**
**असूत पुत्रं समयेऽर्यमान्वयप्रदीपकं दीपितमानवश्रियम् ॥**

**३७४. प्रफुल्लितः पद्मवदेव रञ्जनः सुधांशुवद्गौरवपुः प्रसादनः ।**
**त्विषा स भास्वानिव भासुरोऽभवत्प्रलोभनीयोऽपि यथा ज्वलन्मणिः ॥**

**३७५. निशम्य सामान्यजनोऽपि यज्जनिं प्रमोदरत्नाकरसाधितोन्नतिः ।**
**विसृष्टवान् सन्दिशते हि लोष्ठवत्सुवर्णखण्डान्यपि का कथा पितुः ॥**

---

३७३. तथा चेति ॥ सा राज्ञी तथा तेन प्रकारेण च भर्तृमते अनुवर्तितुं शीलं यस्यास्सा पातिव्रत्यपालिनी सती सुरूपसद्गुणैः शोभनं यत् सौन्दर्यं सद्गुणाः विनयार्जवादयश्च तैः तस्य स्वभर्तुः प्रेमस्नेहं प्रवर्ध्य प्रकर्षेण वर्धयित्वा समये गर्भोदयानन्तरं प्रसूतिसमये सति अर्यम्णः सूर्यस्यान्वयो वंशः तस्य प्रदीपयतीति प्रदीपकः प्रकाशकस्तं मनोरियं मानवी प्रदीपिता प्रकाशिता मानवी श्रीरिव श्रीर्येन तं तथाभूतं पुत्रं असूत जनयाम्बभूव वैवस्वतमनुसमानधर्माणं पुत्रं जनयति स्मेत्यर्थः । इतः प्रभृत्यस्य राजपुत्रस्य मनुसाधर्म्यमुत्तरोत्तरत्रापि ज्ञेयम् अयं हि चतुर्णवत्यधिकाष्टादशशतपरिमिते (१८९४) हूणशाके गौणपौषकृष्णनवम्यां रविवासरे समुत्पन्नः ॥

मनुपक्षे ॥ सा राज्ञी सूर्यपत्नी तथा च तेन प्रकारेणैव भर्तृमतानुवर्तिनी भर्तुर्निजस्वामिनस्सूर्यस्य अभिप्रायानुकूल्यसम्पादिनी सती सुरूपसद्गुणैः स्वसौन्दर्यादिभिः तत्प्रेम तस्य सूर्यस्य स्नेहं प्रवर्ध्य अर्यमान्वयस्य सूर्यवंशस्य प्रदीपकं प्रदीपनेन स्थापकं सूर्यवंशीयराजानां मूलभूतत्वात् दीपिता प्रकाशिता मानवी श्रीः चतुर्दशमन्वन्तरगतत्वेन मनुलक्ष्मीर्येन तं तथाभूतं पुत्रं समये सत्ययुगादौ असूत जनयामासेति पूर्वेण समानोऽर्थः ॥

इतः प्रभृति स एव वर्ण्यते ॥

३७४. प्रफुल्लित इति ॥ स तथाभूतो राजपुत्रः प्रफुल्लितः स्फुटसर्वावयवशोभासम्पन्नः ततश्च रञ्जयति सर्वानिति रञ्जनः जनरञ्जकः रञ्जेः णिजन्तात् युच् ल्युड्वा अतएव पद्मवत् पद्मपुष्पेण तुल्यं यथा तथा अभवत् तेन तुल्यं क्रियाचेद्वतिः तथा गौरवपुः गौरं वपुश्शरीरं यस्य ततश्च प्रसादनः प्रसादयति जनमनांसीति तथा अतएव सुधांशुश्चन्द्रस्तद्वत् चन्द्रोऽपि शुभ्रकान्तिः सर्वान्प्रसादयतीति तत्तुल्य इत्यर्थः त्विषा स्वकान्त्या भास्वान् सूर्यइव भासुरः प्रकाशमानः भञ्जभासमिदोघुरच् ज्वलन् जाज्वल्यमानो यो मणिर्मुक्तादिः स यथा तद्वदित्यर्थः प्रलोभनीयः प्रलोभनार्होऽपि अभवत् मनुपक्षेऽपि समानोऽर्थः ॥

३७५. निशम्येति ॥ यज्जनिं यस्य राजपुत्रस्य जन्म 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव' इत्यमरः । निशम्य श्रुत्वा प्रमोदएव रत्नाकरः रत्नखनिरूपस्समुद्रः तेन साधितासम्पादिता उन्नतिः सम्पत्ति समृद्धिर्येन सः तथाभूतः सामान्यजनः साधारणलोकः स्वल्पधनोऽपीत्यर्थः । अपि शब्दात् धनसमृद्धजन इति किं वक्तव्यमिति भावः । सन्दिशतीति सन्दिशन् तस्मै सन्दिशते सन्देशं प्रापयित्रे राजपुत्रो जात इति जन्मवार्तां कथयते जनायेत्यर्थः । सुवर्णखण्डान्यपि का कथा? वस्त्रभूषणादीनामिति भावः लोष्ठवत्

३७६. विभिन्नसोदर्यनिवाससम्पदा विलोललक्ष्मीं स्थिरयत्तदाननम् ।
चिरं सुधास्यन्दि सुगन्धि तौ दृशा निपीय तृप्तिं पितरौ न जग्मतुः ॥

३७७. यथा जयन्तेन शचीपुरन्दरौ गुहेन गौरी गिरिशौ यथा पुनः ।
इनोऽथसंज्ञामनुनाचताविमौ तथामुनासत्तनुजेन रेजतुः ॥

३७८. नवोदयं प्राप्य दिने दिने तथा प्रवर्धमानश्च सवितृनन्दनः ।
उपाचिनोत्स्वां रुचमप्ययं क्रमाद्यथैव चन्द्रः स च रामलाञ्छनः ॥

मृत्तिका खण्डानीव विसृष्टवान् दत्तवान् हीति निश्चितम् पितुर्जनकस्य राज्ञो विक्रमस्य का कथा राजासौ सन्दिशते एतावत्परिमितं धनं दत्तवानिति किं वक्तव्यमिति भावः । तेन च बहुधनरत्नानि दत्तवानिति सूचितं मनुपक्षे पितुस्सूर्यस्य अन्यत्सर्वं समानम् ॥

३७६. विभिन्नेत्यादि ॥ पिता च माता च पितरौ पितामात्रेत्येकशेषः तौ राजा राज्ञी च द्वावपि सुधास्यन्दि अमृतस्रावि सुगन्धि सौरभ्यगुणयुक्तं च अतएव विभिन्ना द्विप्रकारा या सोदर्यनिवाससम्पत् सोदर्यस्समानोदर्यश्चन्द्रः । 'समानोदर्यसोदर्यसगर्भ्यसहजास्समा' इत्यमरः । लक्ष्मीचन्द्रमसोरेकक्षीरोदजातत्वात् समानोदर्यत्वं निवासः आलयभूतं पद्मं च लक्ष्म्याः पद्मालयात्वात् तयोर्या सम्पत् चन्द्रस्य सुधास्यन्दित्वेनाह्लादकत्वरूपा पद्मस्य च सौरभ्यादिरूपा तया हेतुना विलोला इतस्ततो भ्रममाणा तथा च कालिदासः । "चन्द्रं गता पद्मगुणान्नभुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्यामिति" तथाभूता या लक्ष्मीः कान्त्यभिमानिनी देवता तां स्थिरां करोति स्थिरयति स्थिरयतीति स्थिरयत् तत् चन्द्रपद्मोभयगुणाधानत्वेन स्वस्मिन् सदा सम्बिभ्रत् तत्करोति तदाचष्टे इत्यर्थे णिजन्ताच्छतृप्रत्ययः । तथाभूतं तदाननं तस्य पुत्रस्याननं मुखं तत् दृशा चक्षुषा जातावेकवचनं चिरं निपीय चिरकालं सतृष्णं दृष्ट्वेत्यर्थः । तृप्तिं सन्तोषपारमित्यर्थः । न जग्मतुः न प्रापतुः तादृशपुत्राननं वीक्ष्य पित्रोरुत्तरोत्तरं हर्षो ववृधे इत्यर्थः । मनुपक्षे तौ पितरौ संज्ञा सूर्यौ तदाननं तस्य मनोः पुत्रस्याननं अन्यत्समानम् ॥

३७७. यथेति ॥ इमौ पितरौ राजदम्पती शचीपुरन्दरौ इन्द्रपत्नी इन्द्रश्च तौ जयन्तेन तन्नाम्ना पुत्रेण 'जयन्तः पाकशासनि'रित्यमरः । यथा येन प्रकारेण रेजतुरित्यर्थः । पुनः पक्षान्तरे गौरीगिरिशौ पार्वतीपरमेश्वरौ गुहेन स्कन्देन 'पार्वती नन्दनस्कन्दस्सेनानीरग्निभूर्गुह' इत्यमरः । यथा येन रूपेण रेजतुरित्यर्थः । इनस्सूर्यः 'इनस्सूर्ये प्रभा'वित्यमरः अथ संज्ञा सूर्यपत्नी च अथशब्दोऽत्र समुच्चये । तौ मनुना वैवस्वतेन च यथा रेजतुरित्यर्थः । तथा तेन प्रकारेण अमुना जातेन सत्तनुजेन सत्पुत्रेण रेजतुः शुशुभाते इत्यर्थः । मनुपक्षे इनस्संज्ञा च तौ इमौ दम्पती सत्तनुजेन अमुना मनुना रेजतुरिति पूर्वस्माद्विशेषः ॥

३७८. नवोदयमिति ॥ राम इति लाञ्छनं संज्ञा यस्य स रामलाञ्छनो रामनामा 'लाञ्छनं लक्ष्म संज्ञयो'रिति हैमः स च चन्द्रश्चन्द्रपदवाच्यश्च रामचन्द्रनामेत्यर्थः । अयं राजकुमारः नवोदयं अभिनवोन्नतिं प्राप्य लब्ध्वा दिने दिने प्रतिदिनं नन्दयतीति नन्दन आनन्ददायकः अन्यत्र सवितुस्समुद्रस्य नन्दनो वर्धकः समुद्रस्य चन्द्रजनकत्वात् चन्द्रोदये हि समुद्रो वर्धते इति प्रसिद्धिः तथाभूतस्सन् चन्द्रो यथा

३७९. क्रमेण शय्या परिवर्तनोत्प्लवोपवेशनोत्थानपदप्रचारणैः ।
सितैश्च मुग्धास्फुटवर्णभाषणैः सलब्धमेधोऽधिजगेऽन्तिके गुरोः ॥

३८०. अवर्णलेखादिषु शिक्षितोऽश्रमादवर्णमात्रं न विवेद कर्हिचित् ।
सशस्त्रशास्त्राण्यपि दृष्टवान् क्रमाददृष्टवानित्यपि भण्यते स्म तत् ॥

३८१. नवोपवीतस्य च षट् सरान् हृदा व्यकाशयत्त्रिगुणीकृतान्बहिः ।
सनीतिवित्संवलितात्रिशक्तिक त्रिवर्गभेदानिव षड्गुणानथ ॥

तथैव चन्द्र इवेत्यर्थः । क्रमात् दैनन्दिनवृद्धिक्रमात् स्वां स्वकीयां रुचं कान्तिमपि उपाचिनोत् उपचितवान् पुपोषेति यावत् रामलाञ्छन इत्येतद्विशेषण मुपमानेऽपि देयं रामो मृगः लाञ्छनं यस्येति तत्रार्थः । चन्द्रस्य मृगाङ्कत्वात् मनुपक्षे सवितुस्सूर्यस्य नन्दनः पुत्रः रामाणि रमणीयानि लाञ्छनानि राजलक्षणानि यस्य सोयं मनुरित्यर्थः । अन्यत्सर्वं समानम् ॥

३७९. क्रमेणेति ॥ स रामचन्द्रनामा राजकुमारः क्रमेण कालक्रमेण शय्यायां परिवर्तनं अधोमुख शयनं उत्प्लवः उदरेणोत्प्लुत्य गमनं उपवेशनं आसीनता उत्थानं पादद्वयेनोत्थितिः पदयोः प्रचारणं भित्त्याद्यालम्बनादिना पद्भ्यां गमनं च तैः स्मितैरीषद्धासैः सह सहार्थे तृतीया मुग्धानि मनोहराणि अस्फुटा अव्यक्ता वर्णा अक्षराणि येषु तानि च भाषणानि नवभाषितानि तैश्च आनुपूर्व्योपलक्षित इत्यर्थः । उपलक्षणे तृतीया । अथ लब्धा मेधा धारणावती धीर्येन स तथाभूतस्सन् गुरोरध्यापकस्य अन्तिके समीपे अधिजगे अधीतवान् । मनुपक्षे गुरोर्बृहस्पतेः पितुस्सूर्यस्य वा अन्तिके इति विशेषः 'उपाध्यायोऽध्यापकस्स्यात्सनिषेकादिकृद्गुरु'रित्यमरः । 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे' इति कोशान्तरम् ॥

३८०. अवर्णलेखेत्यादि ॥ स रामचन्द्रः मनुश्च अकारप्रमुखा वर्णा अवर्णा स्वरव्यञ्जनादयः शाकपार्थिवादित्वादुत्तरपदलोपः तेषां लेखः भावे घञ् तदादिषु आदिपदेन पठनादेर्ग्रहणं अश्रमात् अनायासात् शिक्षितः शिक्षा सञ्जाता अस्य तारकादित्वादि तच् निपुण इत्यर्थः कर्हिचित् कदाचिदपि अवर्णमात्रं अपवादमात्रं न विवेद न जानाति स्म परापवादरहितोऽभूदित्यर्थः 'अवर्णाक्षेपनिर्वादपरीवादापवादव'दित्यमरः । तथा क्रमात् शिक्षापठनपरिपाट्या शस्त्राणि शास्त्राणि च तानि शस्त्रसम्बन्धीनि शास्त्राणि वा तान्यपि दृष्टवान् अवबोधितवान् अश्रमादेवेत्यर्थः तत् तस्मात् परिश्रमं विना अल्पसमयेनैव आंग्लादिविद्याप्रावीण्याद्धेतोः अदृष्टवान् प्राक्तनपुण्यवानित्यपि भण्यते स्म उच्यते स्म लोकैरिति शेषः अत्र अवर्णलेखादिषु शिक्षितोऽपि अवर्णमात्रं न विवेदेति दृष्टवानपि अदृष्टवानिति च विरोधः तत्परिहारस्तु उक्तरूपः ॥

३८१. नवेति ॥ अथ विद्यारम्भाद्यनन्तरं नीतिवित् नीतिशास्त्रज्ञानवान् स राजपुत्रः मनुश्च नवमगृहीतपूर्वं यदुपवीतं यज्ञोपवीतं तस्य यज्ञोपवीतद्वयसम्बन्धिन इत्यर्थः त्रयोगुणास्तन्तवो येषां ते त्रिगुणाः त्रिरावृत्तास्त्रिगुणाः अतथा तथा सम्पद्यकृतास्त्रित्रिगुणीकृताः तान् प्रत्येकं नवगुणानित्यर्थः "ऊर्ध्वन्तु त्रिवृतं कार्यं तन्तुत्रयमधोवृतं त्रिवृतं चोपवीतं स्यात्तत्रैकोग्रन्थिरिष्यते" इत्युक्तेः षट्

३८२. तृणानि वीरान् कलयन्निरीक्षणैः पदार्पणैरानमयन्निवावनीम् ।
श्रियाविभिन्दन् युवतीमनश्शनैस्तदङ्गमासेवत यौवनोद्गमः ॥

३८३. ततः प्रवृत्तो भगवत्प्रसादतस्सुकन्यया तत्करपीडनो विधिः ।
महोत्सवेनोच्छलितावनीतलो बभूव लोके यदुपज्ञमेव सः ॥

सङ्ख्यकान् सरान् गुणान् एकस्योपवीतस्य त्रिसरत्वेन द्वयोस्तयोर्विधृतयोः षट् सरानित्यर्थः 'यज्ञोपवीते द्वे धार्ये श्रौतस्मार्तेषु कर्मसु । तृतीयं चोत्तरीयार्थे वस्त्राभावे तदिष्यते' इत्युपवीतद्वयस्य धार्यत्व स्मृतेरिति भावः । हृदा हृत्प्रदेशेन बहिर्व्यकाशयत् स्कन्धाद्धृदयाद्यवलम्बित्वेन तद्द्वारा बहिर्भागे प्रकाशयामासेत्यर्थः उत्प्रेक्ष्यते संवलितेत्यादि संवलिताः सम्बद्धास्तिस्रः शक्तयः प्रभावोत्साहमन्त्रजरूपा येषु तथाभूता-स्त्रिवर्गभेदाः क्षयस्थानवृद्धिरूपा येषु तान् बहुव्रीहिगर्भको बहुव्रीहिः तथाभूतान् षड्गुणान् सन्ध्यादीनि-वोक्तरूपान् षट् सरान् व्यकाशयदित्यर्थः तस्य नीतिविज्ज्वेन बुद्धिस्थितान् तथाविधान् षड्गुणान् हृदा बहिर्व्यकाशयदिवेत्युत्प्रेक्षा । 'सन्धिर्नाविग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाश्शक्तयस्तिस्रः प्रभावोत्साह-मन्त्रजाः । क्षयस्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिना'मिति चामरः एतेन राजकुमारस्य व्रतोपनीतता उक्ता । उपनयनसमयस्तु पञ्चाधिकनवशतोत्तर (१९०५) सहस्रपरिमितः क्रिष्टाब्दः इति ॥

ततो युवावस्थां प्राप्त इत्याह ॥

३८२. तृणानीति ॥ यौवनोद्गमो यौवनप्रादुर्भावः निरीक्षणैः तत्कुमारसम्बन्धि दृष्टिभिः वीरान् इतरवीरपुरुषान् तृणानि तृणवत् क्षुद्रानित्यर्थः हीनसारानिति यावत् कलयन् कल्पयन् पदार्पणैः पादप्रक्षेपणैः तत्कुमारकर्तृकैरेवेत्यर्थः अवनीं पृथिवीं आनमयन् अवनम्रयन्निव तथाश्रिया कुमाराङ्ग-शोभया करणेन युवतीमनः युवतीनां मनांसीत्यर्थः जातावेकवचनं विभिन्दन् विश्लेषयन् आकर्षय-न्नित्यर्थः तदङ्गं तस्य रामचन्द्रनाम्नो राजपुत्रस्य मनोरपि गात्रं अङ्गं गात्रे प्रतीकोपाययोरित्यादि मेदिनी तत् शनैः मन्दं मन्दं आसर्वतोभावेन असेवत आश्रितवान् सक्रमेण यौवनं प्राप्तइत्यर्थः ॥

३८३. तत इति ॥ ततः यौवनप्राप्त्यनन्तरं भगवत्प्रसादतः भगवत्प्रसादनाम्नो राज्ञो बलराम-पुराधीश्वरस्य षष्ठ्यर्थे तसिल् सुकन्यया शोभनया कुमार्या सह सहार्थे तृतीया प्रवृत्तः तस्य नृपसुतस्य करपीडनं पाणिपीडनं यस्मिन्सविधिः तद्विवाहविधिरित्यर्थः । महोत्सवेन महता उद्धवेन हेतुना उच्छलितं हर्षोद्रिक्तमित्यर्थः अवनीतलं तत्रस्थजनजातं लक्ष्यते यस्मिन् स तथाभूतो बभूव स महोत्सवः तथाभूतः करपीडनविधिर्वा लोके जगति जनसामान्ये वा यस्य उपज्ञा यदुपज्ञमेव यस्य रामचन्द्रस्यैव राजपुत्रस्य प्राथम्यमारयातीत्यर्थः उपज्ञोपक्रमं तदाद्याचिख्यासायामिति नपुंसकत्वम् अस्य विवाहस्तु त्रयो-दशाधिकनवशतोत्तरसहस्रपरिमिते (१९१३) क्रिष्टाब्दे संवृत्तः मनुपक्षे भगवतो ब्रह्मणः सूर्यस्य वा प्रसादादनुग्रहात् अन्यत्समानम् ॥

**३८४. अथास्य मात्राप्रिययात्मनो भृशं पिता वियुक्तः परिखिद्य संज्ञया।**
**द्वितीयया तत्प्रतिमूर्तिभूतया रतौ प्रवृत्तोऽपि न चाप निर्वृतिम्॥**

**३८५. स भास्करे क्षेत्रवरे विकर्तनात्मनायमस्मिन् दिवि दिव्यति प्रभौ।**
**समस्तलोकावनसम्मतः सुतः स्वतेजसा तद्ग्रहराजवद्बभौ॥**

---

३८४. अथेति॥ अथ पुत्रस्य रामचन्द्रस्य विवाहानन्तरं पिता विक्रमदेवः अस्य रामचन्द्रस्य मात्रा जनयित्र्या आत्मनः स्वस्य प्रियया भार्यया पट्टमहिष्येत्यर्थः। वियुक्तो विरहितः मृतभार्य इत्यर्थः। अतएव संज्ञया चेतनया सह 'संज्ञास्याच्चेतनानाम हस्ताद्यैरर्थसूचने' इत्यमरः। भृशमत्यन्तं परिखिद्य-व्यामुह्येत्यर्थः। तत्प्रतिमूर्तिभूतया तस्याः पट्टमहिष्याः प्रतिमूर्तिभूता सुप्सुपेति समासः तया तत्सदृशयेत्यर्थः। द्वितीयया पत्न्या 'पत्नी पाणिगृहीता च द्वितीया सहधर्मिणी' त्यमरः। तया सहेत्यर्थः रतौ सुरतकर्मणि प्रवृत्तोपि निर्वृतिं सुखं न चाप नापि प्राप्तवान् सापि स्वल्पकालेनैव लोकान्तरं गतवतीत्यर्थः। अत्रेदमवधेयम्—पुत्रस्य रामचन्द्रस्य विवाहानन्तरं तस्मिन्नेव वत्सरे पट्टमहिषी लोकान्तरं गतवती तद्विरहपीडितो राजा पुनर्विवाहे नेच्छुकोऽपि प्रकृतिपौरजनानुरोधेन सप्तदशाधिकोनविंशति (१९१७) परिमिते क्रिष्टाब्दे प्रथमपत्न्याः पितृवंशादेव पुनर्द्वितीयां स्वीचकार सापि वर्षद्वयाभ्यन्तरे लोकान्तरं गता तद्विरहेण च राजा अतीव दुःखिनस्तस्थाविति॥

मनुपक्षे॥ अथ समयान्तरे पिता सूर्यः अस्य मनोर्मात्रा जनन्या आत्मनः प्रियया परिखिद्य दुस्सहसूर्यतेजसा खेदं प्राप्य स्थितयेत्यध्याहार्यं संज्ञया तन्नाम्न्या भार्यया वियुक्तस्सन् तत्प्रतिमूर्तिभूतया संज्ञयैव स्वसमानाकारेण कल्पितया द्वितीयया छायानाम्न्या भार्ययेत्यर्थः। रतौ प्रवृत्तोपि निर्वृतिं नाप अत्रेयं पौराणिकी वार्ता पुरा किल संज्ञा देवी निजभर्तुस्सूर्यस्य तेजोऽसहमाना स्वानुरूपां छायानाम्नीं कन्यामुत्पाद्य सूर्यसमीपे नियोज्य स्वपितुर्विश्वकर्मणस्समीपं जगाम तत् ज्ञात्वा दुःखितमनाः सूर्यः ब्रह्माज्ञया विश्वकर्मणा यन्त्रोल्लीढस्सन् स्वतेजः कर्तयामासेत्यादि भविष्यादौ॥

३८५. सेति॥ अस्मिन् प्रभौ विक्रमदेवे भास्करस्येदं भास्करं तस्मिन् क्षेत्रवरे क्षेत्रेषु मध्ये वरं श्रेष्ठं तस्मिन् प्रधानसिद्धस्थाने भास्करक्षेत्रे इत्यर्थः। भास्करक्षेत्रं प्रयागः 'गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरौ मृते। आधाने सोमपाने च वपनं सप्तसु स्मृत'मिति स्मृतिसमुच्चयलिखितवचने तथा तद्व्याख्यातारः तस्मिन् विकर्तनात्मना विशेषेण कर्तनं विच्छेदो यस्य तथाभूतेनात्मना स्वरूपेण उपलक्षित इत्यर्थः इहलोकविरहित इति भावः दिवि स्वर्गे दिव्यति क्रीडति सति समस्तलोकानां सकलजनानामवने रक्षणे विषये सम्मतोऽभिमतः सोऽयं सुतः उक्तरूपो वर्ण्यमानो राजपुत्रः स्वतेजसा निजराजतेजसा तद्ग्रहराजवत् सः पितुस्सादृश्यप्रतियोगी यो ग्रहराजस्सूर्यः तेन तुल्यं स च पिता विक्रमदेवः ग्रहराजश्च ताभ्यां तुल्यं वा तद्वत बभौ अपरस्सूर्य इव भातिस्मेत्यर्थः द्वितीयपत्नीवियोगानन्तरं राजा विक्रमदेवः विंशत्युत्तरोनविंशति शततमे (१९२०) क्रिष्टाब्दे माघे मासि प्रयागराजं गत्वा स्नानदानादिकं विधाय तत्रैव देहं विसृष्टवान् तत्रैव पुत्रो रामचन्द्रदेवः निजपितुरसकाशात् राजपट्टं गृहीत्वा स्वदेशं जयपुरमागत्य राजसिंहासनमलङ्कृतवान्॥

३८६. कृतग्रहाणां परिचारकर्मणि स्थितस्समेषामधिपासने पुरः ।
परिस्थितैस्साधुबुधैः स संस्तुतोऽभ्यषेचि राज्ये विधिना महोद्धवैः ॥

३८७. द्विजाग्र्य सश्रीकबलोद्धतात्मसम्भवोग्रतेजोज्वलदङ्गसङ्गिनी ।
प्रशस्तवाङ्मङ्गळकाव्यबोधनैस्सभा सुधर्मा शुशुभे तदाधिकम् ॥

---

मनुपक्षे ॥ अस्मिन्प्रभौ भास्करे सूर्ये क्षेत्रं कळत्रमेव वरं प्रधानं यस्य तस्मिन् 'क्षेत्रं शरीरे केदारे सिद्धस्थानकळत्रयो'रिति विश्वः अतएव भार्यानुमोदनार्थं विकर्तनात्मना विशेषेण कर्तनं विश्वकर्मणा तेजश्शातनं यस्य तदात्मना तत्स्वरूपेण 'विकर्तनार्कमार्ताण्डे' त्यादमरः दिवि आकाशे दिव्यति सति समस्तानां लोकानां भुवनानामवने सम्मतः सोऽयमुक्तरूपस्सुतो मनुः स्वतेजसा स्वकीयप्रभावेन तद्ग्रहराजवत् सचासौ ग्रहराजश्चेति तद्ग्रहराजः तेन स्वपितृभूतसूर्येण तुल्यं बभौ सकललोकाधिपत्ये नियोजितस्सन् दीप्यते स्मेत्यर्थः ग्रहाणां राजा ग्रहराज इति व्युत्पत्त्या ग्रहराजपदवाच्यस्सूर्यः यथा ग्रहाणां राजा भूत्वा दिव्यति तद्वदेवेति उभयत्रापि बोधनार्थं ग्रहराजपदमुपात्तं उत्तरत्र तथा प्रतिपादनादिति बोध्यम् ॥

इतःप्रभृति विंशत्याश्लोकैः रामचन्द्रदेवं मनुं च सूर्यसाधर्म्येण वर्णयति ॥

३८६. कृतग्रहाणामिति ॥ स रामचन्द्रदेवः परिचारकर्मणि सेवाकर्मणि कृतोग्रह आग्रहोयैस्तेषां समेषां सर्वेषां प्रकृतिप्रजावर्गाणामित्यर्थः समोत्र सर्वपर्यायः तेन आमिसर्वनाम्नस्सुट् पुरोऽग्रे अधिपासने नृपासने स्थित उपविष्टः परिस्थितैः परिवेष्ट्य स्थितैः बुधैः पण्डितैः साधु सम्यक् संस्तुतः कीर्तितगुणग्रामस्सन् महोद्धवैर्महोत्सवैस्सह 'मह उद्धव उत्सव' इत्यमरः विधिना शास्त्रोक्तराजाभिषेकविधानेन राज्ये राजकर्मणि स्वराष्ट्रे वा अभ्यषेचि अभिषिक्तः पुरोहितादिभिरिति शेषः तस्मिन्नेव वत्सरे वैशाखेमासि तदभिषेकोत्सवो जातः। सूर्यपक्षे ॥ स ग्रहराजः सूर्यः समेषां निखिलानां परिचारकर्मणि खगोले परिभ्रमणकर्मणि कृता निवेशिता ये ग्रहाः सोमादयः तेषां पुरोऽग्रे अधिपासने स्थितः परिस्थितैर्बुधैर्देवैः साधुसंस्तुतस्सन् राज्ये ग्रहाधिपत्ये महोद्धवैस्सह विधिना ब्रह्मणा अभ्यषेचि। 'ग्रहाधिपत्ये भगवानभ्यषिञ्चद्दिवाकरं । ऋक्षाणामोषधीनां च सोमं ब्रह्माप्रजापति'रिति लैङ्गे मनुपक्षेऽपि समानमेतत् तत्र परिचारकर्मणि कृतग्रहाणां सेवाकर्म कृताग्रहाणां समेषां देवासुरमनुष्यादीनां राज्ये त्रिलोकाधिपत्ये इति विशेषः ॥

३८७. द्विजेत्यादि ॥ तदा रामचन्द्रस्य राज्ञोऽभिषेकसमये द्विजाग्र्या द्विजातिश्रेष्ठाः ब्राह्मणक्षत्रिय वैश्यकुलप्रधाना इत्यर्थः। श्रिया सहिताः सश्रीका धनिकाः बलैस्सामर्थ्यैः सैन्यैर्वा उद्धता दर्पिताः बलोद्धताः पराक्रमशालिनः पुरुषाः सेनापतयो वा आत्मनोधृतेः सम्भवो येषु ते आत्मसम्भवा धैर्यशालिपुरुषाः। 'आत्मा जीवे धृतौ देहे' इति कोशात्। उग्राः क्षत्रियात् शूद्रायां समुत्पन्नाः (रायिराजु) इत्यादि नामप्रसिद्धाः 'शूद्राक्षत्रिययोरुग्र' इत्यमरः। यद्वा आत्मन इव सम्भवः सम्भावनमुत्पत्तिर्वा येषां ते च उग्राः स्वराजसम्बन्धिनो (रायिराजु प्रभृतयः) तेजसा प्रभावेण ज्वलत् जाज्वल्यमानं अङ्गं येषां ते प्रतापशालिनश्च पुरुषाः तैस्सङ्गिनी संसर्गिणी सुधर्मा शोभनधर्मा सभा गोष्ठी प्रशस्ता वाचो येषां

३८८. बुधप्रवृद्धस्तमथात्र विक्रमः प्रगल्भवाग्वीचि विनिर्गतं पुरः ।
सवेदशास्त्राम्बुधिमन्थनोद्धृतं नयामृतं पाययितुं प्रचक्रमे ॥

३८९. दिगीशरूपो भगवान् स्वयम्भवान् ततश्च तेनाविदितं हि किञ्चन ।
तथापि लोकश्रुतिसङ्गतिं मया विविच्य राजन्निह किञ्चिदुच्यते ॥

तैर्वाग्मिभिः कर्तृभिः मङ्गलप्रतिपादकानां काव्यानां कविकृतालौकिकचमत्कारवाक्यानां बोधनैः सभासद्भयः तदर्थप्रतिपादनैः अधिकमतिशयितं यथा तथा शुशुभे—अन्यत्र तदा मनोस्सूर्यस्य चाभिषेकसमये द्विजाग्र्यः चन्द्रः द्विजराजत्वात् श्रिया लक्ष्म्या सहितः सश्रीको विष्णुः बले बलनामासुरे उद्धतः अविनीत इन्द्रः बलारित्वात् आत्मनो विष्णोः सम्भवो यस्य स आत्मसम्भवो ब्रह्मा ब्रह्मात्मभूरित्यादि कोशात् उग्रः शिवः 'उग्रः कपर्दी श्रीकण्ठ' इत्यादि कोशात् तेजसा दीप्त्या ज्वलदङ्गोऽग्निश्च तैस्सङ्गिनीप्रशस्तवाग्बृहस्पतिः वाचस्पतित्वात् मङ्गलः प्रसिद्धो ग्रहः काव्यः शुक्रः 'शुक्रो दैत्यगुरुः काव्य' इति कोशात् बोधनो बुधग्रहश्च तैस्सहेत्यर्थः । सुधर्मा तन्नाम्नी सभा देवसभेत्यर्थः । 'स्यात्सुधर्मा देवसभे'त्यमरः अधिकं शुशुभे ॥

३८८. बुधेत्यादि ॥ अथ सभाप्रवृत्त्यनन्तरं अत्र सभायां बुधेषु पण्डितेषु मध्ये प्रवृद्धः वयसा ज्ञानेन च स पूर्वोक्तः विक्रमः विक्रमदेवनामा कृष्णचन्द्रदेवस्य पुत्र इत्यर्थः तं सिंहासनारूढं रामचन्द्रदेवं पुरोऽग्रे स्थित्वेत्यर्थः वेदप्रमुखानि शास्त्राण्येवाम्बुधिः समुद्रस्तस्य मन्थनादालोडनादुद्धृतं वेदादिशास्त्रसारभूतमित्यर्थः प्रगल्भाः प्रतिभान्विता वाच एव वीचयः ताभ्यो विनिर्गतं स्पष्टं वाग्भिः प्रतिपादितमित्यर्थः नयानीतय एवामृतं तत् राजधर्मरूपमित्यर्थः पाययितुं श्रवणमुखेन ग्राहयितुमित्यर्थः पिबतेर्णिजन्तात्तुमुन् 'शाच्छासाह्वाव्यावेपां युगिति युक् प्रचक्रमे आरब्धवान् 'प्रोपाभ्यां समर्थाभ्या'मित्यात्मनेपदं 'प्रक्रमस्स्यादुपक्रमः स्यादभ्यादानमुद्घात आरम्भ' इत्यमरः अन्यत्र अथात्र देवसभायां क्रमणं क्रमः क्रमु पादविक्षेपे इत्यस्माद्भावे घञ् नोदात्तोपदेशस्येत्यादिना न वृद्धिः विना पक्षिणा हंसेनेत्यर्थः क्रमोगमनं यस्य स विक्रमः हंसवाहनत्वात् बुधेषु देवेषु मध्ये प्रवृद्धः ब्रह्मेत्यर्थः सुरज्येष्ठत्वात्पितामहत्वाच्च 'ब्रह्मात्मभूः सुरज्येष्ठ' इत्यादि कोशात् तं मनुं सूर्यं च नयामृतं तत्तदुचितनीत्यात्मकममृतं अन्यत्सर्वं पूर्ववत् ॥

अथ राजनीतिविवक्षुर्विक्रमदेवः राज्ञो रामचन्द्रदेवस्य विज्ञत्वप्रकटनमुखेन स्वाहङ्कारं परिहरन्नाह–

३८९. दिगीशेत्यादि ॥ हे राजन् राजत इति रञ्जयतीति वा राजा 'राजा प्रकृति रञ्जनात्' इति रघुवंशे तस्य सम्बुद्धौ हे तथाविध भवान् स्वयमात्मना दिगीशानां रूपमेव रूपं यस्य सः दिक्पालांशसम्भूत इत्यर्थः 'अष्टाभिर्लोकपालानां मात्राभिः निर्मितो नृप' इति मनूक्तेः अतएव भगं विद्यते यस्यासौ भगवान् ऐश्वर्यज्ञानादिगुणयुक्त इत्यर्थः 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भगमितीरणा'वित्युक्तेः ततश्च तस्माद्धेतोः ते तव किञ्चन किमपि राजधर्मादिकमित्यर्थः अविदितं अज्ञातं नास्तिहीतिनिश्चितं तथापि तव राजधर्मादिविज्ञत्वेऽपि इह त्वत्प्रथमराज्याभिषेकप्रयुक्तसभायां मया विद्यमानेनेत्यर्थः लोकैश्श्रूयत इति लोकश्रुतिर्जनप्रवादः अभिनवराज्याभिषिक्तं नृपं राजधर्मादिकं श्रावयितव्य-

३९०. यथा हि सर्पस्य समन्त्रपांशवो हयस्य रश्मिर्द्विरदस्य चाङ्कुशः ।
तथैव लोकाधिपधर्मसञ्चयोऽखिलस्य च प्रग्रहणं समीरितम् ॥

३९१. प्रवर्तितव्यं सततं हितेप्सुना समन्त्रकब्राह्मणदेवसेविना ।
यतो हि तेजो निखिलं निलीयते प्रकाशते ब्रह्ममयेन तेन च ॥

---

मिति किं वदन्तीत्यर्थः तस्यास्सङ्गतिं सम्मेलनं न्यायमते अनन्तरवक्तव्यत्वरूपामवसरसङ्गतिमित्यर्थः 'सप्रसङ्ग उपोद्घातहेतुतावसरस्तथा निर्वाहकैककार्यत्वे षोढासङ्गतिरिष्यते' इत्युक्तेः विविच्य विवेकेन ज्ञात्वा अयमेव राजनीतिकथनस्यावसर इति निर्धार्येत्यर्थः किञ्चत् राजधर्मं उच्यते कथ्यते न तु विस्तरेणेति भावः ॥ अन्यत्र हे राजन् मनो सूर्योऽपि राजपदवाच्यः 'अधिकस्सर्वभूतेभ्यो राजते च दिवाकरः। अधिकं राजते यस्मात्तस्माद्राजा स उच्यत' इति भविष्योक्तेः हे सूर्य भवान् स्वयं दिगीशरूपः दिक्पालस्वरूपः सूर्यस्यापि इन्द्रानिलयमार्काणामित्यादिना दिक्पालत्वस्मृतेः भगवान् षड्गुणैश्वर्यसम्पन्नश्च अतस्ते किमपि अविदितं नास्ति त्वं सर्वज्ञोऽसीत्यर्थः तथापि तव सर्वज्ञत्वेऽपि लोकस्य लौकिकशास्त्रमात्रस्य लोकप्रसिद्ध-शास्त्रमात्रं लोकशब्देनोच्यते श्रुतेर्वेदस्य च सङ्गतिं मेलनं विविच्य तव लोकपालत्वात् देवरूपत्वाच्च तदुभयमेलनं विवेकेन ज्ञात्वेत्यर्थः इह देवसभायां मया किञ्चिदुच्यते तव स्मरणार्थमिति भावः ॥

इतः प्रभृति षोडशभिः श्लोकैः राजनीतिः प्रस्तूयते ॥

३९०. यथेत्यादि ॥ हे राजन् मन्त्रेण सहितास्समन्त्राः ते च पांशवः मन्त्रितधूळयः सर्पस्य सर्पसामान्यस्य प्रगृह्यतेऽनेनेति प्रग्रहणं नियन्त्रणं यथाहीति निश्चितं हयस्य घोटकजातेः रश्मिः कविकादिः 'किरणप्रग्रहौ रश्मी' इत्यमरः। यथा प्रग्रहणमित्यर्थः द्विरदस्य हस्तिजातेः अङ्कुशः सृणिश्च यथा प्रग्रहणं तथैव लोकाधिपस्य जनाधिपस्य राज्ञो धर्मसञ्चयः धर्मसमूहः पालनादिरूपः अखिलस्य च समस्तलोकस्यापि प्रग्रहणं समीरितं मुनिभिः कथितं यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो यथा। नरेन्द्रधर्मो लोकस्य तथा प्रग्रहणं स्मृत'मिति व्यासोक्तेः अन्यथा लोकाः स्वेच्छाचारिणः स्वाचारभ्रष्टाश्च स्युः ततश्च त्वया राजधर्मः पालनीय इति भावः ॥

अन्यत्र लोकाधिपो भुवनपालकः तद्धर्म इत्यादि अन्यत्समानम् ॥

३९१. प्रवर्तितव्यमिति ॥ हे राजन् हितेप्सुना आत्मनो हितं प्राप्तुमिच्छुना राज्ञेत्यर्थः सततं नित्यं समन्त्रका वैदिकतान्त्रिकमन्त्रसहिताः वैदिकतान्त्रिककर्मनिष्ठाः मान्त्रिका इत्यर्थः ब्राह्मणा विप्राः देवा शिवादयश्च तत्सेविना तदाराधकेन प्रवर्तितव्यं भवितव्यं भावे तव्यप्रत्ययः भावस्यैकत्वादेकवचनं क्लीबता च। अनुक्ते कर्तरि तृतीया तत्र हेतुमाह यतः यस्माद्धेतोः निखिलं समग्रं तेजः क्षात्रमित्यर्थः। ब्रह्ममयेन ब्राह्मेण तेजसा निलीयते निलीनं भवति प्रकाशते प्रकाशितं भवति च हीति शास्त्रसिद्धं ब्राह्मणद्वेषात् क्षात्रं तेजो विनश्यति तत्पूजनात्तत्प्रवर्धत इति भावः उक्तञ्च महाभारते 'अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनोलोह-मुत्थितं। तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति। अयो हन्ति यदाऽश्मानमग्निना वारि हन्यते। ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः। एवं कृत्वा महाराज नमस्या एव ते द्विजाः। भौमं ब्रह्मद्विजश्रेष्ठा धारयन्ति समर्चिता' इति देवसेवाद्वेषाभ्यामिष्टानिष्टप्राप्तिः सुप्रसिद्धैव शिवादिदेवानां सगुणब्रह्मत्वेन तत्तेजसा सर्वं प्रलीयते प्रकाशते चेति बोध्यम् ॥

३९२. सुसंयतोह्यात्मपरस्सदा भवेन्नचात्मनो यत्परमस्ति किञ्चन ।
प्रसाध्य तेनैव यदात्मनानतज्जगत्प्रतिष्ठाननुचात्मनस्स्थितौ ॥

३९३. स्थितां सदाऽव्यक्ततयापि सद्गुणां विभेद्य तद्वत्पुरुषाद्विवेकतः ।
समीक्ष्य वामा परमात्मसङ्गतौ नितान्तलोलप्रकृतिं वशं नयेत् ॥

---

सूर्यपक्षे ॥ हे राजन् सूर्यहितेप्सुना स्वस्य लोकस्य च पथ्यमिप्सुना लोकपालकेन त्वयेत्यध्याहार्य सततं सर्वदा मन्त्रेण मन्त्रात्मकसंहितारूपेण सहितं समन्त्रकं यत् ब्राह्मणं उपनिषद्रूपं वेदो द्विविधः मन्त्ररूपो ब्राह्मणरूपश्चेति तत्र मन्त्ररूपो वेदः कर्मप्रतिपादकः कर्मकाण्डशब्देनोच्यते ब्राह्मणरूपस्तु ज्ञेयार्थप्रतिपादक उपनिषत्पदवाच्यः ज्ञानकाण्डशब्देनोच्यते तस्मिन्नुभयत्रापि वेदभागे दिव्यति प्रतिपाद्यतया प्रकाशत इति देवः परमात्मा तत्सेविना तदुपासकेन प्रवर्तितव्यं यतो हेतोः निखिलं तेजः सौरचान्द्रादितेजोपलक्षणं प्रकाशितवस्तुमात्रं वा ब्रह्ममयेन परब्रह्मात्मकेन स्वरूपार्थे मयट् तेन तेजसा निलीयते सङ्कुचितं भवति प्रकाशते विकासितं च भवति हीति श्रुत्यादिनिश्चितं 'तस्य भासा सर्वमिदं विभाति' तत्रैव समवलीयन्ते इत्यादि श्रुत्या 'एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः । जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत्' इत्यादिस्मृत्या च स एव विद्याऽविद्याभ्यां बन्धमोक्षहेतुर्भवतीति भावः मनुपक्षे उभावप्यर्थौ साधू ॥

३९२. सुसंयत इति ॥ हे राजन् सदा सुसंयतः स्वात्मरक्षणे सुसम्बद्धस्सन् आत्मा स्वात्मैव परः प्रधानं यस्य सः तथाभूतो भवेत् यः कोपि पुरुष इत्यर्थः 'आत्मानं सततं रक्षेद्दारैरपि धनैरपी'त्याद्युक्तेः स्वात्मसंरक्षणे सुसन्नद्धो भवेदित्यर्थः हीति निश्चितं यत् यस्मात्कारणात् आत्मनः स्वस्मात् किञ्चन किमपि वस्तु परमधिकं नास्ति आत्मना स्वेनैव यत्कार्यं न प्रसाध्यते क्रियते तत्कार्यं न नैव कृतं भवतीत्यर्थः आत्मनः स्वस्य स्थितौ सत्यां जगतो लोकस्य प्रतिष्ठा स्थितिः ननु इत्यवधारणे आत्मनोभोक्तुरभावे लौकिकस्य भोग्यजातस्य वैफल्यमिति भावः ॥

सूर्यपक्षे ॥ सुसंयतः सुष्ठु निगृहीतेन्द्रियस्सन् विषयेष्वनासक्त इति यावत् भवान् यः कोपि मुमुक्षुरपीत्यर्थः आत्मा परमात्मैव परः प्रधानं यस्य स तथा भवेत् आत्मनः परमात्मनः परमन्यच्च वस्तु किञ्चन नास्ति परमात्मनः सर्वात्मत्वादिति भावः हीत्यवधारणे आत्मना परमात्मना यत् न प्रसाध्यते तत् नैव परमात्मना अकृतं किमपि नास्तीत्यर्थः आत्मनः परमात्मनश्च स्थितौ सत्यां जगत्प्रतिष्ठा जगतस्स्थितिः ननु निश्चिता परमात्मसत्तयैव जगत्सत्ता अधिष्ठानसत्ताऽतिरिक्तायाः आरोपितसत्ताया अनङ्गीकारादिति भावः ॥ 'आत्मैव देवतास्सर्वाः सर्वमात्मन्यवस्थितं । आत्मा हि जनयत्येषां कर्मयोगं शरीरिणा'मिति मनुः मनुपक्षे पूर्ववदुभावप्यर्थौ ॥

भार्या यत्नतो रक्षणीयेत्याह ॥

३९३. स्थितामिति ॥ हे राजन् सद्गुणां विनयार्जवादिसाधुगुणयुक्तां सदा सर्वदा अव्यक्ततया पुराभ्यन्तरे आच्छन्नतया स्थितामपि नितान्तमेकान्तं लोलप्रकृतिं चञ्चलस्वभावां 'नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः । सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते' इति मनूक्तेरिति भावः । वामां

३९४. सदात्मनैवाङ्गभुवं समीक्ष्यते समं हितेन प्रकृतिव्रजं च यः ।
प्रजाकुलं चाप्यमुना स ईश्वरो जितारिवारः सुखमश्नुते चिरम् ॥

---

स्त्रियं विवेकतः 'यादृशं भजते हि स्त्री सुतं सूते तथाविध'मिति विचारात् 'विवेकस्स्याज्जलद्रोण्यां पृथग्भाव-विचारयो'रिति मेदिनी। समीक्ष्य तद्व्यवहारे सम्यग्दृष्टिं निवेश्येत्यर्थः। 'पडिमानि विनश्यन्ति मुहूर्तमन-वेक्षणात्। सेवा गावः कृषिर्भार्या विद्या वृषलसङ्गति'रित्युक्तेरिति भावः। तद्वत् यथा अन्यपुरुषसम्बन्धः कदापि नस्यात्तथेत्यर्थः। पुरुषात् परपुरुषात् विभेद्य पृथक्कृत्य असूर्यं पश्या राजदारा इत्युक्तेस्तद्वत्सं-रक्ष्येत्यर्थः। परं केवलं आत्मसङ्गतौ स्वसङ्गमे विषये वशं नयेत् स्वायत्ततां प्रापयेत् 'स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च। स्वं च धर्मं प्रयत्नेन जायां रक्षन्हि रक्षती'त्यादि मनूक्तेः सर्वथा स्त्रियं रक्षेदिति भावः। सूर्यपक्षे प्रधानवादपक्षमाश्रित्याह—स्थितामिति। हे सूर्य सन्तो गुणाः सत्वरजस्तमांसि यस्यास्तां सद्गुणामपि सदा नित्यं अव्यक्ततया यथा लोके ज्ञायन्ते घटपटाद्यास्तथा नव्यज्यते इत्यव्यक्तं 'सौक्ष्म्यात्तदनुपलब्धिरि'त्याद्युक्तेः तत्तया स्थितां सदेत्यनेन नित्यत्वं स्थितामित्यनेन सत्वं च प्रतिपादितं तथा परं केवलं आत्मनः पुरुषात्मनः परमात्मनः परब्रह्मणो वा सङ्गतौ सम्प्राप्तौ तत्साक्षात्कारेविषये इत्यर्थः। वामां प्रतिकूलां रजस्तमोभ्यमात्मानमाच्छादयन्तीमित्यर्थः। यद्वा योगविन्मते परमः परमात्मा आत्मा जीवः तयोः सङ्गतौ सम्मेलने वामां चित्तविक्षेपादिकरणेन प्रतिकूलामित्यर्थः। निता-न्तमत्यन्तं लोला संरक्षणशीला या प्रकृतिः सत्वं रजस्तम इति गुणत्रयमुदाहृतं। साम्यावस्थेति या तेषामव्यक्तां प्रकृतिं विदुरित्युक्तरूपा मूलप्रकृतिः तां तद्वत् तेन रूपेण एवं तत्वाभासान्नास्मि न मे नाहमित्यपरिशेषं अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानमित्युक्तरूपेणेत्यर्थः। विवेकतः प्रकृतिपुरुषभेद-ज्ञानात् तदाश्रित्येत्यर्थः। ल्यबर्थे पञ्चम्यां तसिल्। पुरुषादात्मनः विभेद्य पृथक्कृत्य 'आत्मा वा अरे ज्ञातव्यः प्रकृतितोविवेक्तव्यो न स पुनरावर्तते' इति श्रुतेरिति भावः। समीक्ष्य पृथक्करणानन्तरं तामेव प्रकृतिं सम्यग्दृष्ट्वा वशं स्वायत्ततां नयेत् तेन च दुःखत्रयेण नाभिभूयते ऐकान्तिकमात्यन्तिकं च कैवल्यं लभते इति भावः। उक्तञ्च तत्वकौमुद्यां दृष्टा मयेत्युपेक्षक एकोदृष्टाहमित्युपरमत्यन्या सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य इति प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ। ऐकान्तिकमात्यन्तिक-मुभयं कैवल्यमाप्नोतीति च मनुपक्षे उभयरूपोप्यर्थस्साधुः॥

३९४. सदेति॥ हे राजन् यः राजा सदा अविरतं अङ्गात् स्वशरीरात् भवतीत्यङ्गभूः पुत्रः तं आत्मना स्वेनैव समं तुल्यं यथा तथा समीक्षते सम्यक् पश्यति पालयतीत्यर्थः। हीत्यवधारणे प्रकृतिव्रजं अमात्यादिसमूहं 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयो'रिति मेदिनी। तेनाङ्गभुवा च समं समीक्षते प्रजाकुलं जनसमूहं च अमुना प्रकृतिव्रजेनापि समं यः समीक्षते इत्यर्थः। स ईश्वरः स्वामी जितो अरीणां शत्रूणां वारः समूहो येन स तथाभूतस्सन् चिरं चिरकालपर्यन्तं सुखमश्नुते प्राप्नोति 'आत्मा वै पुत्रनामासी'ति श्रुतेः पुत्रभेदे आत्मभेदः प्रकृत्यादिभेदे अङ्गभेदश्च तेषां राज्याङ्गत्वात् तैरभिन्नो राजा चिरमकण्टकं राज्यं भुनक्ति अन्यथा शत्रुभिः परिभूयते राज्यं च विनश्यतीति भावः। अथ सूर्यपक्षे 'ऐक्यं जीवात्मनो राहुर्योगं योगविशारदा' इत्युक्तदिशा योगप्रकारं प्रदर्शयन्नाह सदेत्यादि। हे सूर्यजितो अरिवारो अरिषड्वर्गो येन सः उक्तञ्च शारदायां "जित्वा दावात्मनः शत्रून् कामादीन्योगमभ्यसेत्। कामक्रोधौ लोभमोहौ तत्परं मदमत्सरौ। वदन्ति दुःखदानेतानरिषड्वर्गमात्मनः" इति तथाभूतो यः योगी सदा अङ्ग

**३९५. सदैव भाव्यं कृतिनोद्यतेन यत्तद्दैवमुत्थानमृतेऽर्थसाधकम् ।
अपिद्वयं तद्रथचक्रवत्समं परं तयोर्दृष्टमदृष्टबोधकम् ॥**

---

शरीरमेव भूः स्थानं भोगायतनमिति यावत् यस्य तं शरीरिणं जीवात्मानमित्यर्थः 'अङ्कं गात्रे' इति मेदिनी आत्मना परमात्मनैव समं साकं तदैक्येनेत्यर्थः समीक्षते योगदृष्ट्या पश्यतीत्यर्थः प्रकृतिव्रजं महदहङ्कार-पञ्चतन्मात्रसंज्ञकाः सप्तप्रकृतयः साङ्ख्यमते अव्यक्तेन साकमष्टौ प्रकृतयः प्रकुर्वन्तीति प्रकृतयः प्रकृतित्वमत्र तत्वान्तरोपादानत्वं विवक्षितं तासां व्रजं समूहं तेन अङ्गभुवा जीवेन च समं यः समीक्षते प्रजाकुलं प्रजा-यन्त इति प्रजाः केवलकार्यरूपाः षोडशविकाराः 'अजामेकां लोहितकृष्णशुक्लां बह्वीः प्रजाः सृजमानां सरूपा'मिति श्रुतेः यद्यप्यत्र प्रजापदेन स्थूलसूक्ष्मोभयमपि कार्यजातमुच्यते तथापि प्रकृतिव्रजमित्यनेन महदादीनामुक्तत्वात् गोबलीवर्दन्यायेन तस्य तदितरपरत्वं कल्प्यते विशेषसन्निधौ श्रूयमाणस्य सामान्य शब्दस्य तदितरपरत्वं हि गोबलीवर्दन्यायः पञ्चमहाभूतानि एकादशेन्द्रियाणि च विकाराएव एतेषां तत्वान्तरोपादानत्वाभावेन प्रकृतित्वाभावादित्याद्यन्यत्र विस्तरः तेषां कुलं गणं चापि अमुना प्रकृतिव्रजेन समं समीक्षत इत्यर्थः॥ स ईश्वरः ऐश्वर्यशक्तिमान् सन् सुखं सान्द्रानन्दपरम्परारूपं चिरमश्नुते अनुभवती-त्यर्थः अत्र परमात्मनो जीवः जीवात्प्रकृतिरित्यादिक्रमेण महदादीनां यथायथं भूतेन्द्रियगणस्य च यथा समुत्पत्तिस्तथैव व्युत्क्रमेण बीजभावेन तत्सर्वं तत्वजातं परमात्मनि प्रविलाप्य सोऽहम्भावेन तज्ज्योति-रालोकये दित्यादिसमाधिविधिर्योगशास्त्रेभ्योऽगन्तव्यः मनुपक्षे पूर्ववत् ॥

३९५. सदेत्यादि ॥ हे राजन् कृतिना राजकर्मकुशलेन राज्ञा सदा प्रतिदिनं उद्यतेन उद्यमयुक्तेनैव भाव्यं भवितव्यं ओरावश्यके इत्यवश्यम्भावे ण्यत् यत् यस्माद्धेतोः देवादागतं दैवं दिष्टं तत आगत इत्यण् प्राक्तनकर्मेति यावत् उत्थानमृते पुरुषकारं विना अर्थसाधकं स्वार्थसम्पादकं न नैव भवतीत्यर्थः 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ती'ति नयादिति भावः। ननु यथाह्येकेन चक्रेण रथस्य न गतिर्भवेत् तथा पुरुषकारेण विना दैवं न सिध्यतीत्युभयोरपि तयोः परस्परसापेक्ष्यत्वमस्ती-त्यत आह अपीत्यादि तत् द्वयं दैवपौरुषरूपं रथचक्रवत् यथा रथस्य चक्रं चक्रान्तरसापेक्षं तद्वत् समं परस्परसापेक्ष्यत्वेन तुल्यमपि तयोर्दैवपौरुषमध्ये इत्यर्थः अदृष्टस्य दैवस्य बोधकं फलद्वारा निश्चायकं दृष्टं पौरुषं परं श्रेष्ठं दृष्टद्वारत्वात् दैवन्तुफलद्वारा निश्चितत्वादचिन्त्यमिति भावः तथा च मनुः सर्वं कर्मेदमा-यत्तं विधाने दैवमानुषे। तयोर्दैवमचिन्त्यन्तु मानुषे विद्यते क्रियेति। सूर्यपक्षे हे सूर्य कृतिना लोककार्य-निर्वाहकेन त्वयेत्यर्थः सदा उद्यतेन उदयोद्युक्तेनैव भाव्यं यत् यस्मात् दिव्यति प्रकाशत इति देवः तस्य भावो दैवं तस्येदमित्यण् तव प्रकाशकत्वमित्यर्थः उत्थानमुत्थितिः उन्नतिरिति यावत् उदयइत्यनर्थान्तरं तदृते अर्थसाधकं लोकानामितिशेषः न नैव भविष्यतीत्यर्थः अथ उदयेन प्रकाशस्य प्रकाशेन चोदयस्य साफल्यमिति तद्द्वयं रथचक्रवत् समं परस्परसापेक्षमपि तयोर्मध्ये अदृष्टस्य कदाचिदलक्षितस्य प्रकाशस्य बोधकं दृष्टमुदय-मेव परं श्रेष्ठं अधोगतस्य भूगोलाच्छन्नतया स्थितस्य तव तत्र प्रकाशकत्वेऽपि उदयाभावेनात्र तद्वैफल्यादिति भावः। उदयेनैव हि प्रकाशते लोकः तथा च त्वया नियमुदितेन भवितव्यमित्यर्थः। मनुपक्षे पूर्वपक्षमेव समर्थयेदिति ॥

३९६. कदा पदाच्छन्नतयाप्युपक्रमे वृथोदयेनैव विषादमावहेत् ।
सकृत्प्रयत्ने विफलेऽपि बुद्धिमान् यतेत सिद्ध्यै कृषको यथा पुनः ॥
३९७. न केवलं मार्दवमाश्रयेत्प्रभुर्भवेद्यतो नीचजडावमाननम् ।
सदा च तैक्ष्ण्यं निखिलं प्रतापयेत्ततः सुयत्नादुभयं समाश्रयेत् ॥

---

ननु समारम्भोऽपि कदाचिद्विपद्यते तत्र किं कर्तव्यं तत्राह ॥

३९६. कदेति ॥ हे राजन् बुद्धिमान् नीतिज्ञानकुशलः कश्चिद्राजेत्यर्थः कदा कस्मिंश्चित्समये आपदाच्छन्नतया आपद्ग्रस्ततया उपक्रमे प्रथमारम्भे 'ज्ञात्वारम्भ उपक्रम' इत्यमरः वृथा उदयो निष्पत्तिर्यस्य तस्मिन् अनिष्पन्ने सत्यपि विषादं ग्लानिं नैवावहेत् विषण्णो नैव भवेदित्यर्थः प्रयत्ने समारम्भे सकृदेकवारं विफलेऽनिष्पन्नेऽपि पुनः सिद्ध्यै फलप्राप्तये कृषक कृषिकर्मा यथातथेत्यर्थः यतेत यत्नं कुर्यात् यथा वृष्ट्यभावादिवशात् भूमिकर्षणबीजवपनादिव्यापारस्य सकृद्वैफल्येऽपि सस्यार्थी कृषकस्तत्र पुनर्व्यापृतो भवति तद्वदभ्युदयार्थी राजा सकृद्विफलारम्भोऽपि सदोद्योगवान् भवेदित्यर्थः उक्तञ्च राजधर्मे "विपन्ने च समारम्भे सन्तापं मा स्म वै कृथाः घटयैव सदात्मानं राज्ञामेष परो नय" इति ॥

सूर्यपक्षे ॥ हे सूर्य बुद्धिमान् लोकोपकारचतुरो भवानित्यर्थः कदा कस्मिंश्चित्समये अपां समूह आपं जलसमूहः समूहार्थेऽण् आपं ददातीत्यापदो मेघः तदाच्छन्नतया उपक्रमे उदयारम्भे वृथोदये सत्यपि विषादं विषण्णतां निवृत्तगतिकत्वमिति यावत् षद्लृ विशरणगत्यवसादनेष्विति धातुः नैवावहेत् प्रयत्ने उदयविषयके सकृद्विफलेऽपि तदानीं तव लुप्तकिरणतयेत्यर्थः पुनः सिद्ध्यै उदयसाफल्यार्थं कृषको यथातथा यतेत उद्गमनं तव विधेयमेवेत्यर्थः ॥

मनुपक्षे ॥ पूर्वोऽर्थः ॥

३९७. नेति ॥ प्रभुर्जनाधिपतिः केवलं मार्दवं मृदुत्वं नाश्रयेत् यतः नीचेभ्यो नीचजनेभ्यो जडेभ्यो मूर्खेभ्यश्च अवमाननं भवेत् स्वस्येत्यर्थः नीचा जडाश्च धर्षयेयुरिति भावः सदा तैक्ष्ण्यं तीक्ष्णगुणः निखिलं प्रतापयेत् तेन च सर्वं जनजातं परितप्तं भवेदित्यर्थः ततः तस्माद्धेतोः सुयत्नात् सुष्ठु यत्नमाश्रित्य स्थानसमयोचितव्यापारमनुसृत्येत्यर्थः उभयं मार्दवं तैक्ष्ण्यं च समाश्रयेत् साधुषु मार्दवं दुष्टेषु तीक्ष्णगुणं च यथासमयं विदध्यादिति भावः उक्तञ्च मनुना "तीक्ष्णश्चैव मृदुश्च स्यात्कार्यं वीक्ष्य महीपतिः । तीक्ष्णश्चैव मृदुश्चैवराजा भवति सम्मत" इति ॥

सूर्यपक्षे ॥ हे सूर्य प्रभुर्लोकाधिपतिर्भवान् केवलं मार्दवं किरणेषु मान्द्यं सदा नाश्रयेत् यतः नीचे अधोभागे भूतले ये जडाः शैत्यगुणयुक्ताश्चन्दनादयस्तेषामवमाननं भवेत् घर्माभावात् जनास्ताञ्चाद्रियन्ते इति भावः यद्वा जडैः जाड्याभिभूतैर्जनैरवमाननं ते भवेत् ते त्वामवमंस्यन्तीति भावः अथ सदा तैक्ष्ण्यं निखिलं भुवनं च प्रतापयेत् तेन च सर्वोऽपि लोकः परितप्तो भवेदित्यर्थः ततः सुयत्नात् उभयं समाश्रयेत् दक्षिणायने उत्तरायणे च सन्ध्ययोर्मध्याह्ने च यथासमयं मृदुस्तीक्ष्णश्च भवान् भवेदिति भावः मनुपक्षे पूर्वार्थ एव ॥

३९८. प्रियं परित्यज्य निजं च गर्भिणी समानधर्मा बिभृयात्प्रजा हितम् ।
करैर्गृहीतं ननु जीवनं यथोचितं च देयं समये समुत्सृजेत् ॥

३९९. विनैव लोकं न हि लोकपालकः क्वचित्तथालोकचयोऽप्यपालकः ।
परस्परस्य स्थितिहेतुतां गतं द्वयं हि तद्व्याघ्रवनोभयं यथा ॥

४००. प्रवर्तमानः पथि सेविते बुधैर्निरीक्ष्य कर्माणि नृणामिनस्तु यः ।
अथावलिप्तस्य कुकर्मकारिणः प्रदापयेद्दण्डममुष्य शाश्वतम् ॥

---

३९८. प्रियमिति ॥ हे राजन् प्रभुरित्यत्राप्यनुसञ्जनीयः जनाधिपतिः गर्भिण्याः समानो धर्मो यस्य स तथाभूतस्सन् धर्मादनिच्केवलादित्यनिच् निजं स्वकीयं प्रियं हितं परित्यज्य प्रजानां जनानां हितं पथ्यं बिभृयात् विदध्यात् करैः राजभागरूपैर्भागधेयैः 'भागधेयः करो बलि'रित्यमरः गृहीतं प्रजाभ्यः सम्पादितं द्रव्यमित्यर्थः देयं दातुं योग्यं जीवनं वृत्तिं च समये यथाकालं यथोचितं यस्मै यद्दातुमुचितं तदनतिक्रम्येत्यर्थः समुत्सृजेत् प्रजानुचरेभ्यो दद्यादित्यर्थः ननु इत्यवधारणे । "यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगं । गर्भस्य हितमाधत्ते तथा राज्ञाप्यसंशयं । वर्तितव्यं कुरुश्रेष्ठ सदा धर्मानुवर्तिना । स्वं प्रियन्तु परित्यज्य यद् यल्लोकहितं भवे"दित्यादि शान्तिपर्वणि राजधर्मे ॥

सूर्यपक्षे ॥ हे सूर्य भवान् गर्भिणीसमानधर्मासन् निजं प्रियं परित्यज्य प्रजायन्त इति प्रजाभूतग्रामाः तेषां हितं परिभ्राम्य करालोकदानादिना इष्टसाधनं बिभृयात् करैः किरणैः गृहीतं शोषितं जीवनं जलञ्च 'जीवनं भुवनं वन मित्यादि जलपर्याये'ष्वमरः समये वर्षाकालादौ यथोचितं देयं यदा यावत्परिमितं जलं वर्षणीयं तत्समुत्सृजेत् ननु वर्षयेदित्यर्थः आदित्याज्जायते वृष्टिरिति स्मृतेः सहस्र-गुणमुत्स्रष्टुमादत्ते हि रसं रविरिति च कालिदासः ॥

३९९. विनेति ॥ हे राजन् क्वचित् कुत्रचिदपीत्यर्थः लोकं जनजातं विना लोकानां पालको जनाधिपः नह्येव नास्त्येव पालितव्याभावे पालकत्वासम्भवादिति भावः लोकचयः जनसमूहोऽपि अपालको नास्ति पालको यस्य स तथाभूतः नैवेत्यर्थः रक्षकाभावे जनरक्षाया अप्यसम्भवादिति भावः हि तस्माद्धेतोः तद्द्वयं लोकलोकपालकरूपं व्याघ्रश्च वनञ्च तयोरुभयं यथातथेत्यर्थः परस्परस्य अन्योन्यस्य स्थितिहेतुतां स्थितौ कारणतां गतं प्राप्तं वनाभावे व्याघ्रस्य स्वशरीरसङ्गोपनाभावात् व्याघ्राभावे च वनस्य सुखच्छेद्यत्वात् यथा तदुभयं परस्परोपकारकं तथा लोकलोकपालकद्वयमपीति समुदितोऽर्थः तथा च राज्ञा सम्यक्पालनेन प्रजाः स्वायत्तीकर्तव्या इति भावः । सूर्यपक्षे लोका भुवनानि अन्यत्सर्वं मनुपक्षेऽपि समानम् ॥

४००. प्रवर्तमान इति ॥ हे राजन् यः पुरुषः नृणां मनुष्याणामिनः प्रभुः 'इनस्सूर्ये प्रभा' वित्यमरः । स राजा इत्यर्थः बुधैः न्याय्यान्याय्यविवेकविद्भिः पण्डितैः सेविते आश्रिते पथि न्यायसरणौ प्रवर्तमानस्सन् कर्माणि नृणामेव सदसद्रूपाणि निरीक्ष्य निश्चयेन ज्ञात्वा अथ कर्मणां सदसत्त्व-

४०१. दृढां विशालां परिखावृतिश्रितामभेद्यरूपामसुहृद्दुराशयैः ।
श्रिया ज्वलन्तीं च पुरीं समुन्नतामधिष्ठितो नोद्विजते कदापि सः ॥

४०२. मुखे निवासी खलु यस्य पण्डितः सखा च राजा चरमे बुधार्चितः ।
तथातिदूरेऽप्यथमन्दशात्रवः कदापि सिंहासनमस्य सुस्थिरम् ॥

निश्चयानन्तरं अवलिप्तस्य धनादिना गर्वितस्य अतएव कुकर्मकारिणः परपीडादिकुत्सितकर्माचरणशीलस्य अमुष्य जनस्य शाश्वतं शास्त्रसिद्धं मन्वादिभिः प्रदर्शितमित्यर्थः दण्डं दमं प्रदापयेत् प्राड्विवाकादिभिर्निरूपयेत् 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः। उत्पथं प्रतिपन्नस्य दण्डो भवति शाश्वत' इति स्मृतेरिति भावः ॥

सूर्यपक्षे ॥ हे सूर्य यस्तु इनः इनपदवाच्यः स भवानित्यर्थः बुधैर्देवैः सेविते पथि सुरवर्त्मनि प्रवर्तमानः भ्रममाणस्सन् नृणां मनुष्याणां कर्माणि सदसद्रूपाणीत्यर्थः निरीक्ष्य निरीक्षणेन ज्ञात्वा। 'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मोऽपि जानाति नरस्य वृत्ति' मिति स्मृतेरिति भावः अथ अवलिप्तस्य कुकर्मकारिणः अमुष्य परलोकं गतस्य जनस्येत्यर्थः शाश्वतं दण्डं प्रदापयेत् यमकिङ्करैरित्यर्थः॥

४०१. दृढामिति ॥ उत्तरत्र स इति तच्छब्दस्य निर्देशादादौ यच्छब्दस्य निर्बन्धः यत्तदोर्नित्यसम्बन्धात् हे राजन् यः राजा दृढां चिरस्थायिनीं विशालां विपुलां परिखा च आवृतिश्च ताभ्यां श्रितां, वासरूपविधिना कर्मणिक्तः खेयावरणयुक्तामित्यर्थः। अतएव असुहृदो अमित्राणि च ते दुराशयाश्च तैः दुष्टशत्रुभिरित्यर्थः । अभेद्यरूपां दुष्प्रवेश्यामित्यर्थः । श्रिया सम्पत्त्या ज्वलन्तीं जाज्वल्यमानां धनधान्यादिपूर्णमित्यर्थः । समुन्नतां अत्युन्नतशालिनीं च पुरीं नगरीमधिष्ठितः नगर्यां स्थित इत्यर्थः। अधिशीङ् स्थासामिति कर्मत्वं सः राजा कदापि कदाचिदपि न उद्विजते नोद्वेगं लभत इत्यर्थः॥

सूर्यपक्षे ॥ हे सूर्य दृढामविनाशिनीं विशालां अनेकसहस्रयोजनायतां परि सर्वतोभावेन खावृत्या-आकाशावरणेन श्रितां परिभ्रमणेन खावृतिं श्रितां वा शोभनं हृत् येषां ते सुहृदः तेन भवन्तीत्यसुहृदोऽनिर्मलहृदयाः यद्वा असून् प्राणान् हन्तीत्यसुहृतः प्राणापहारकाः हिंसादिकर्मयुक्ता इति यावत् दुराशया दुरभिप्रायाश्च तैरभेद्यरूपां विद्यया देवलोकइति विद्यावतामेव सूर्यमण्डलभेदनेनोर्ध्वगतिश्रुतेरिति भावः श्रिया तेजस्सम्पत्त्या ज्वलन्तीं समुन्नतां अत्युच्चस्थितां च पुरीं सूर्यलोकाख्यामधिष्ठितः स प्रसिद्धो भवान् कदापि नोद्विजते तथा च भवता वर्तितव्यमिति भावः॥

४०२. मुखे इति ॥ हे राजन् यस्य राज्ञः मुखे सम्मुखे पण्डितः शास्त्रज्ञः पुरुषः निवासी निवसतीति तथा खल्विति वाक्यालङ्कारे शास्त्रज्ञपुरुषसहकारेण कार्यं कृतवतः परैरभिभवासम्भवादिति भावः। यस्य च चरमे पृष्ठभागे पृष्ठसहायतयेत्यर्थः। सखा सुहृत् तथाभूतोऽपि बुधार्चितः। पण्डितैस्सेवितः पण्डितसंसर्गीत्यर्थः । खलसंसर्गित्वे कदाचिच्छिद्येतेति भावः । यद्वा स्वयमपि पण्डितः पण्डितो हि पण्डितैरर्च्यते, पण्डितोऽपि वरं शत्रुर्नमूर्खो हितकारक, इत्युक्तेर्मूर्खसहायकरणस्यानुचितत्वादिति भावः।

**४०३. तथाविधस्यापि रिपोर्निवेशनं समीक्ष्य शूरः कृततन्मृतिस्थितिः ।**
**स्वसूरिसन्मित्रममुष्य सन्निधौ निवास्य चाच्छन्नतया सुखी भवेत् ॥**

---

तथाभूतो राजा पृष्ठरक्षकतया स्थित इत्यर्थः ॥ अथ तथापि एवमपि मन्दश्चासौ शात्रवश्च मूढशत्रुः । 'द्विड्विपक्षाहितामित्रदस्यु शात्रव शत्रव' इत्यमरः । अतिदूरे यस्य स्थित इत्यर्थः । पण्डितोऽपि वरं शत्रुरित्युक्तेः शत्रोरपि पण्डितस्य समीपस्थितिर्वरं न तु कदाचिदपि मूर्खशत्रोरिति भावः । तथाभूतस्य अस्य राज्ञः कदापि कदाचिदपि सिंहासनं राजासनं सुस्थिरं नैव भ्रश्यतीत्यर्थः ॥

सूर्यपक्षे ॥ इतः प्रभृति त्रिभिः श्लोकैः ज्योतिश्चक्रे ग्रहाणां द्वादशराशिगृहकल्पनं सूर्यगृहापेक्षया दूरान्तिकत्वे सप्रयोजनं प्रदर्शयन्नाह, मुखे इत्यादिभिः । हेसूर्य यस्य ग्रहराजस्य मुखे अग्रभागे स्वगृह-सिंहराश्यपेक्षया अग्रभूतकन्याराशावित्यर्थः । पण्डितः बुधग्रहः निवासी निवासशाली कन्याया बुधक्षेत्रत्वात् सखा मित्रभूतो राजा चन्द्रः । मित्राणि सूर्याच्छशिभौमजीवा इति चन्द्रस्य सूर्यमित्रत्वात् बुधार्चितस्सन् चरमे पृष्ठभागे निवासी इत्यर्थः । तथा च सिंहस्य पृष्ठराशिः कर्कटः स तु चन्द्रस्य स्थानं तत्पृष्ठराशिर्मिथुनं बुधक्षेत्रमिति बुधार्चितत्वम् चन्द्रस्येति बोध्यं अथ पक्षान्तरे मन्दनामा शात्रवः शत्रुभूतश्शनिरित्यर्थः । सौरिश्शनैश्चरो मन्द इत्यादि तन्नामानि तथा अतिदूरे यदपेक्षया दूरभवनं नास्ति तत्र निवासीत्यर्थः । मकरकुम्भौ शनेर्गृहे सिंहापेक्षया दूरतरे ज्ञेये अस्य ग्रहराजस्य भवत इत्यर्थः । सिंहासनं सिंहराशिरूपासनं कदापि सुस्थिरं यत्र कुत्रापि स्थितावपि तव सिंहगृहं नान्यस्य भविष्यतीत्यर्थः ॥

अथ दूरस्थेऽपि शत्रौ कर्तव्यमाह ॥

४०३. तथेति ॥ हे राजन् शूरो विक्रान्तोऽपि राजा तथाविधस्य अतिदूरस्थस्यापि रिपोः शत्रोर्निवेशनं प्रवेशोपवेशनादिकं समीक्ष्य चारैस्तदीक्षणे सावधानीभूयेत्यर्थः । अन्यथा कदाचित्सबलः समागत्योपद्रवेदिति भावः । कृता तन्मृतौ तस्य रिपोर्मरणे विषये स्थितिरवस्थानं येन स तथाभूतस्सन् समये दुष्टो रिपुर्हन्तव्य एव श्रियमिच्छतेति भावः । अमुष्य रिपोः सन्निधौ समीपप्रदेशे स्वस्यात्मनः सूरिः समयोचितकार्ये पण्डितस्सन् मित्रे निष्कापट्यादिना साधुश्च तथाभूतं मित्रं सखायं आच्छन्नतया गुप्ततया रिपोरज्ञेयतयेत्यर्थः । निवास्य स्थापयित्वा च सुखी भवेत् शत्रुणा नाभिभूयेतेति भावः ॥

सूर्यपक्षे ॥ हे सूर्य शूरस्तत्पदवाच्यो भवानित्यर्थः । 'शूरश्चारभटे सूर्ये' इति विश्वः तथाविधस्य अतिदूरस्थस्यापि रिपोर्मन्दशत्रोः निवेशनं गृहं कुम्भराशिमित्यर्थः । समीक्ष्य सप्तमदृशा दृष्ट्वा, पश्यन्ति सप्तमं सर्वे इत्युक्तेः सिंहराशिं प्रति कुम्भस्य सप्तमत्वादिति भावः । कृता तस्य मन्दनिवेशनस्य मृतौ अष्टमस्थाने स्थितिर्निवासो येन सः मकरराशेरपि शनिभवनत्वात् तं प्रति सिंहस्याष्टमत्वादिति भावः । रन्ध्रायुर्मृतयोऽष्टमे इत्यादिना अष्टमस्थानस्य मृतिसंज्ञा ज्योतिश्शास्त्रप्रसिद्धा तथाभूतस्सन् स्वस्य सूरिः सूरिपदवाच्यः 'सूरिर्दानवपूजितश्च सचिवा'वित्यादौ सूरिपदेन बृहस्पतिरुक्तः सन् सौम्यग्रहश्च बृहस्पते-श्शुभग्रहत्वात् तथाभूतं मित्रं मित्रभूतं बृहस्पतिमित्यर्थः । बृहस्पतेरपि सूर्यमित्रत्वोक्तेः आच्छन्नतया तद्भवनाभ्यामेव सम्पुटिततया स्थितस्येत्यर्थः । अमुष्य शनेर्गृहस्य मकरकुम्भोभयरूपस्येत्यर्थः । सन्निधौ तदव्यवहितपार्श्वद्वयप्रदेशे धनुर्मीनराश्योरित्यर्थः । निवास्य निवासं कारयित्वा सुखी भवेत् अथ च शोभनं खमाकाशमस्यास्तीति तथाभूतो भवेत् राशिग्रहादिस्थित्याकाशस्य शोभनत्वादिति भावः ॥

४०४. परोपि साधुप्रकृतिः कविस्तु यो वरं हि तस्यान्तिकवासनं प्रभोः।
कुजन्मनः क्रूरदृशोऽपि मित्रतां गतस्य वक्रस्य न जातु शोभनम् ॥

४०५. वितत्य सत्यं विदधाति यः क्रियाः सदार्जवान्न्याय्यपथादविच्युतः।
अपि प्रतापीह चिरं क्षमापरस्ततोऽन्ततो विष्णुपदे स मोदते ॥

---

४०४. पर इति ॥ हे राजन् परश्शत्रुरपि यस्तु कविः पण्डितः साधुप्रकृतिः सत्स्वभावः तस्य जनस्य प्रभोर्जनाधिपस्य अन्तिकवासनं समीपे स्थापनं वरं मनाक्प्रियं मित्रतां गतस्य प्राप्तस्यापि कुजन्मनः। कुत्सितजन्मनः। अकुलीनस्येत्यर्थः। क्रूरा कठिना निर्दया घातुका वा दृक् दृष्टिर्यस्य तस्य क्रूरकर्मण इत्यर्थः। 'नृशंसो घातुकः क्रूरः क्रूरौ कठिननिर्दया'विति चामरः वक्रस्य कुटिलाशयस्य तथाकुलशीलादिरहितस्य पुरुषस्येत्यर्थः। जातु कदाचिदपि न शोभनं अन्तिकवासनं शुभकरं नैव भवेदित्यर्थः। 'पण्डितोऽपि वरं शत्रुर्नमूर्खो हितकारक' इत्युक्तेरिति भावः ॥

सूर्यपक्षे ॥ हे सूर्य प्रभोर्ग्रहाधिपस्य तवेत्यर्थः परः शत्रुरपि, शत्रूमन्दसितौ समश्च शशिजो मित्राणि शेषास्तेरिति शुक्रस्य सूर्यशत्रुत्वात् यस्तु ग्रहः साधुप्रकृतिः शोभनस्वभावः तस्यापि शुभग्रहत्वात् कविस्तत्पदवाच्यः 'शुक्रो दैत्यगुरुः काव्यउशना भार्गवः कवि'रित्यमरः तस्य शुक्रग्रहस्येत्यर्थः अन्तिकवासनं समीपवासिता कुजग्रहापेक्षयेत्यर्थः वरं मित्रतां गतस्य मित्रत्वं प्राप्तस्यापि कुजन्मनः कोः पृथिव्या जन्म यस्य तस्य भूमिपुत्रस्य क्रूरदृशः क्रूरा दृक् यस्य तस्य वक्रस्य वक्रपदवाच्यस्य तथाभूतस्य मङ्गलग्रहस्येत्यर्थः आरोवक्रः क्रूरदृक्चावनेय इत्यादि तत्पर्यायाः प्रसिद्धाः जातु अन्तिकवासनं न शोभनं रवेः क्षेत्रभूतसिंहराशिं प्रति शुक्रक्षेत्रयोर्वृषतुलयोरन्तिकत्वात् कुजक्षेत्रयोर्मेषवृश्चिकयोस्तदपेक्षया दूरत्वात् तथा क्षेत्रकल्पनं ग्रहराजस्य तव युक्तमिति भावः 'कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभूवां। जीवार्किभानुजेज्यानां क्षेत्राणिस्युरजादयः' इति ज्योतिश्शास्त्रम् ॥

४०५. वितत्येति ॥ हे राजन् आर्जवमवक्रता तस्मात् तदाश्रित्येत्यर्थः न्याय्यपथात् न्यायादनपेतमार्गात् न्यायादनपेतो न्याय्यः धर्मपथ्यर्थेत्यादिना यत् सचासौ पन्थाश्च ऋक्पूरब्धूपथामित्यः तस्मात् अविच्युतः नीत्यनुसारिन्यायमार्गोपेत इत्यर्थः अन्यथा त्रयीसंवरणेप्यार्जवं प्रसज्येत उक्तञ्च राजधर्मे आर्जवं सर्वकार्येषु श्रयेथाः कुरुनन्दन। पुनर्नयविचारेण त्रयोसंवरणेन चे'ति नयो नीतिः स्वरन्ध्रगोपनं पररन्ध्रान्वेषणस्य स्वेन क्रियमाणस्य परेभ्यो गोपनं मन्त्रगोपनं चेति तयोस्संवरणे नीतिरूपे आर्जवं हित्वेति तत्रार्थः तथाभूतो यः राजा सदा सत्यं वितत्य विस्तृत्य। 'न हि सत्यादृते किञ्चिद्राज्ञां वै सिद्धिकारकं। सत्ये हि राजा निरतः प्रेत्य चेह च नन्दती'त्युक्तेः सत्यनिरतोभूत्वेत्यर्थः क्रियाः राजकर्माणि विदधाति यद्वा नवविधा अपि क्रियाः आरम्भो निष्कृतिः शिक्षापूजनं सम्प्रधारणं। 'उपायः कर्मचेष्टा च चिकित्सा च नवक्रियाः' ॥ इत्यमरोक्तरूपाः ताः विदधाति करोति तथा इह पृथिव्यां प्रतापी दुष्टेषु प्रभाव्यपि क्षमापरः सज्जनेषु शान्तियुक्तः यद्वा क्षमा क्षितिः 'क्षिति क्षान्त्योः क्षमे'त्यमरः तत्परस्तत्पालनासक्तः भवतीति शेषः ततस्तस्माद्धेतोः स राजा अन्ततः मरणादनन्तरमित्यर्थः विष्णोः पदं स्थानं तस्मिन् वैकुण्ठरूपे चिरं चिरकालपर्यन्तं मोदते तत्र स्थित्वा

४०६. इतीरितां तां सवितुः सधर्मिणीं निधाय धीरो हृदिनीतिविस्तृतिम् ।
व्यधाच्च राज्यं परितः प्रचारयन् प्रधानतो मानवधर्मसंहिताम् ॥

४०७. यथायथं तत्कथया वशीकृता जनास्समस्ता अपि जातिभेदतः ।
स्वधर्मकर्माचरणैस्तमन्वयुः प्रलभ्यवृत्तिं च परां च निर्वृतिम् ॥

नन्दतीत्यर्थः । एवं सर्वानिमान्राजा व्यवहारान्समापयन् । व्यपोह्य किल्बिषं सर्वं प्राप्नोति परमां गतिमित्यादि स्मृतेरिति भवः ॥

सूर्यपक्षे ॥ हे सूर्य आर्जवात् प्राक्पश्चिमयोः ऋजुभावात् न तु दिगन्तरव्यत्ययभावादिति भावः न्याय्यपथात् दक्षिणोदगयनयोरुचितरूपात् अविच्युतः यः ग्रहराजः सत्यं वितत्य । सूर्यस्तपति सत्येन सोमस्सत्येन राजते । इत्यादि पौराणिकस्मृतेः सत्यमवलम्ब्येत्यर्थः क्रियाः गमनागमनरूपाः सदा विदधाति प्रतापी प्रकर्षेण तापयितुं शीलं यस्य स तथाभूतोऽपि इह लोके क्षमापरः क्षान्तिगुणयुक्तः अन्यथा प्रतापेन लोका विनश्येयुरिति भावः तथाभूतश्च भवतीत्यर्थः सग्रहराजः ततस्तस्माद्धेतोः विष्णुपदे आकाशे 'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी' त्यमरः । अन्ततः मध्ये सार्वविभक्तिकस्तसिल् आकाशमध्ये इत्यर्थः चिरं मोदते ॥

उपसंहरति ॥

४०६. इतीति ॥ धीरो धारणाशक्तिमान् स रामचन्द्रदेवो राजा इति उक्तरूपेण ईरितां कथितां सवितुः सूर्यस्य समानो धर्मोऽस्याअस्तीति सधर्मिणी तां सूर्योक्तनीतितुल्यामित्यर्थः तां प्रसिद्धां नीतिविस्तृतिं राजनीतिततिं हृदि मनसि निधाय नितरां धारयित्वा प्रधानतः प्राधान्यात् भावे ल्युट् मानवधर्मसंहितां मनुप्रोक्तस्मृतिं 'स्मृतिस्तु धर्मसंहिते' त्यमरः तत्प्रतिपादितधर्मानित्यर्थः परितः समन्तात् स्वदेशे इत्यर्थः प्रचारयन् प्रवर्तयन् राज्यं स्वराजकर्म व्यधात् कृतवान् ॥

मनुपक्षे ॥ सवितुः निजजनयितुः सूर्यस्य मानवधर्मसंहितां स्वोक्तां तन्नाम्नीं स्मृतिं अन्यत्समानम् ॥

४०७. यथायथमिति ॥ तत्कथया तस्य राज्ञो रामचन्द्रस्य कथनेन वशीकृताः स्वायत्तीकृताः समस्ताअपि जनाः जातिभेदतः ब्रह्मक्षत्रविट्शूद्रादिरूप स्वस्वजातिभेदमनुरुत्ये यर्थः । ल्यबर्थे पञ्चम्यां तसिल् स्वधर्मकर्माचरणैः श्रुतिस्मृत्युक्तस्वकीयधर्मकर्मानुष्ठानैः उपलक्षिता इत्यर्थः । यथायथं यथायोग्यं यथा स्वे यथायथमिति वीप्सायामव्ययीभावः वृत्तिं जीवनं प्रलभ्य तस्मादेव राज्ञो लब्ध्वा परां महतीं निर्वृतिं सुखं च प्रलभ्येत्यर्थः । तं रामचन्द्रदेवं राजानं अन्वयुः अनुगता अभवन् ॥

मनुपक्षे ॥ तत्कथया तदुक्तमनुसंहितारूपया वृत्तिं ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा इत्यादि मनूक्तरूपां अन्यत्समानम् ॥

४०८. प्रजेशवर्यो यदिमं प्रजापतिं क्षितौ महाराजपदे न्ययोजयत् ।
असार्थमन्यत्रगतं श्रुतौ तदाऽमुना विराजाजनिसार्थमेव तत् ॥

४०९. अनन्यलभ्यामितसद्गुणैर्वशीकृता हि यस्यैव भुजावलम्बिनी ।
श्रियाधिकाऽशोभत नामपूर्वतोऽभिमानयुक्ता च पुरत्रयी समम् ॥

---

४०८. प्रजेशेत्यादि ॥ प्रजानां जनानामीशास्स्वामिनो नृपाः तेषां तेषु वा वर्यो मुख्यः श्रीभारत-चक्रवर्ती (वैसराय) पदवाच्यो वा प्रजापतिं जनाधिपतिं इमं रामचन्द्रदेवं क्षितौ पृथिव्यां महाराज इति पदं वाचकशब्दः तस्मिन्न्ययोजयत् वाच्यतया नियोजयामास महाराजपदं ददावित्यर्थः ॥ इति यत् तस्मादेवेत्यर्थः । अन्यत्र विद्यमाने राजान्तरे अर्थेन सह वर्तत इति सार्थं न सार्थमसार्थं स्वावयवार्थत्व-विशिष्टपुरुषान्तराभावात् अतएव श्रुतौ वेदादिशास्त्रे श्रवणेन्द्रिये वा गतं स्थितं नलो महाराजः युधिष्ठिरो महाराजः इत्यादिप्रयोगेषु श्रुतत्वादिति भावः । तन्महाराजपदं तदा तस्मिन्समये विशेषेण राजत इति विराट् तेन अमुना नृपेणैव सार्थमन्वर्थमजनि जातं महाराजशब्दस्यान्यत्र नाममात्रेण स्थितावपि अस्मिन्नेव राज्ञि सार्थकत्वमिति भावः । द्वाविंशत्यधिकोनविंशति (१९२२) शताब्द्यां महाराजपदप्राप्तिरस्येति बोध्यम् ॥

मनुपक्षे ॥ प्रजेशा मनुमरीचिप्रमुखाः तेषामपि प्रजापतित्वात् तेषु वर्यः ब्रह्मा तस्यापि प्रजापति-त्वान्मुख्यत्वाच्च इमं प्रजापतिं मनुं महाराजपदे न्ययोजयत् यत् तस्मादेवेत्यर्थः । तदा सृष्ट्यादौ अन्यत्र अ-सार्थं राजान्तरस्याप्यभावात् श्रुतौ वेदे गतं प्राप्तं तत् महाराजपदं विराजा विराट्पदवाच्येन अमुना मनुना एव सार्थमजनि, "सर्वेषान्तु समानानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे इति । तपस्तप्त्वा सृजद्यन्तु सस्वयं पुरुषो विराट् । तं मां वित्तास्य सर्वस्य स्रष्टारं द्विजसत्तमाः । अहं प्रजासिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरं । पतीन् प्रजानामसृजं महर्षीनादितो दश " इति च मनुः ॥

४०९. अनन्येति ॥ अन्यैर्लभ्या अन्यलभ्या सा न भवतीत्यनन्यलभ्या स्वपित्रादिभिर्बहुप्रयत्नैरपि दुष्प्रापा यस्य राज्ञो रामचन्द्रस्य अमिता अपरिमिता ये सद्गुणादयो दाक्षिण्यादयस्तैर्वशीकृता स्वायत्ती-कृता यस्यैव राज्ञः भुजमवलम्बत इति भुजावलम्बिनी बाहुबलमाश्रिता अतएव श्रिया सम्पदा अधिका समृद्धा नाम्नां स्वाभिधानानां पूर्वं नामपूर्वं ततस्सार्वविभक्तिकस्तसिल् स्ववाचकशब्दानामादौ इत्यर्थः । भी; मा; न, इत्येतैर्वर्णैर्युक्ता भीष्म कटक, माड्गुलु, नवरङ्गपुर इत्येतैर्नामभिः प्रसिद्धेत्यर्थः । तथाभूता पुरत्रयी नगरत्रयं च समं तुल्यं यथातथा अशोभत शुशुभे चकारोऽत्र पित्राद्युपभुक्तजयपुरादीनां समुच्चायकः अयं रामचन्द्रदेवः स्वपितृराज्यसमयएव नवरङ्गपुरराज्ञी सकाशात् मदनन्तरं मदीयं राज्यं त्वमेव भोक्ष्यसीति लेखपूर्वं तल्लब्धवान् माडगुलमपि स्वपितुः पितृव्यपुत्र्यास्सकाशात् स्वराज्यसमये तथा भीष्मकटकं क्रयादिनेति तत्पुरत्रयं तत्स्वार्जितमिति बोध्यम् ॥

मनुपक्षे ॥ यस्य मनोः लब्धुं शक्या लभ्याः अन्यत्र लभ्या न भवन्तीत्यनन्यलभ्या ये सद्गुणास्तै-र्वशीकृता स्वस्यैव भुजावलम्बिनी पुरत्रयी त्रयोऽवयवा यस्यास्सन्ततेः सा त्रयी सङ्ख्याया अवयवे तयप् द्वित्रिभ्यां तयस्येत्ययच् टिड्ढाणेत्यादिना ङीप् पुराणां स्वर्गमर्त्यपातालानां त्रयी पुरत्रयी पूर्वतः ततः पूर्व-

४१०. कदा च कालेन्तरपां पतेः समुच्छ्रितां महापोतमिवोपकारिकाम् ।
स्वयं विनिर्माप्य च तत्र संवसन्सुखेन कांश्चित्समयाग्निनाय सः ॥

४११. तमोभिभूते समये पुरः क्रियाचयस्य निर्बाधतया विधित्सया ।
अविन्धनज्योतिरतिप्रदीपनैर्दिवं भुवं चापि समं व्यभासयत् ॥

---

समयापेक्षया श्रिया सम्पदा अधिका अतएव समं तुल्यं यथातथा अभिमानयुक्ता अकारोऽत्रप्रश्लिष्टः तुल्याभिमानिनी सती अशोभत नामेति सम्भावनायाम् ॥

४१०. कदाचेति ॥ स रामचन्द्रदेवः कदा च काले कस्मिंश्चित्समये अपाम्पतेः समुद्रस्य अन्तः प्रान्ते अन्तिके वा 'अन्तः प्रान्तेन्तिके मध्ये' इति कोशात् विशाखपत्तने समुद्रतटे इत्यर्थः ॥ महापोतं बृहद्वहित्रमिव तर्क्यमाणामित्यर्थः ॥ ससुद्रतटेस्थितत्वात्तथोत्प्रेक्षा ॥ समुच्छ्रितां अत्युन्नतां उपकारिका राजसदनविशेषः 'सौधोऽस्त्रीराजसदन मुपकार्योपकारिके'त्यमरः ॥ तां स्वयं विनिर्माप्य कारुभिः कारयित्वा तत्र च सुखेन संवसन् निवसन् कांश्चित्समयान् कालान् निनाय नयति स्म इयं हि महोपकारिका तत्र (हवामहल्) इति नाम्ना प्रख्यायते ॥

मनुपक्षे ॥ स मनुः कदा च काले कस्मिन्श्चित्प्रळयसमये अपाम्पतेः प्रळयकालीनसमुद्रस्य अन्तर्मध्ये समुच्छ्रितामुपकारिकामिव महापोतं वेदरूपं महद्वहित्रं विनिर्माप्य भगवता मत्स्यरूपिणा सम्पाद्य स्वयं च तत्र संवसन् सुखेन कांश्चित्समयान्निनाय अत्रार्थे प्रमाणं एकस्मिन्समये प्रलयजलेनाप्लाविते जगत्त्रये तत्र मत्स्यरूपिणा भगवता समर्पितां सर्वदेवनिकायविनिर्मितां वेदनावं मत्स्यशृङ्गे भुजङ्गरज्वा बध्वा तत्रोपविश्य भगवतोमुखात् मत्स्यपुराणचरितं श्रुतवान्मनुरित्यादिकं मत्स्यपुराणादाववगन्तव्यं समुद्रयानभूता नौरेव पोतवहित्रादिशब्देनोच्यते तथा च गीतगोविन्दे 'प्रलयपयोधिजले धृतवानसि वेदं विहितवहित्रचरित्रमखेद'मिति ॥

४११. तम इति ॥ अत्र पूर्वश्लोकात् स इत्याकृष्यते च कारेण स रामचन्द्रदेवः तमसान्धकारेणाभिभूते अभिव्याप्ते समये रात्रावित्यर्थः ॥ निर्बाधतया अप्रतिबद्धतया यातायातादिरूपक्रियाप्रतिबन्धकीभूततमो निरसनेनेत्यर्थः ॥ पुरो नगर्याः 'पूः स्त्री पुरी नगर्यौ'वेत्यमरः ॥ क्रियाचयस्य व्यापारकलापस्य विधित्सया विधातुमिच्छया विपूर्वाद्धाञः "धातोः कर्मणः समानकर्तृकादिच्छायां वे"ति सन् "सन् यङो"रिति द्वित्वं सनिमीमेत्य च इस् अत लोप इत्यभ्यासलोपः सः सीतितः अः प्रत्ययादित्यः ततष्टाप् अग्निरिन्ध्यते प्रकाश्यते इत्यविन्धनो विद्युदग्निनिष्पन्न इत्यर्थः ॥ 'यो ज्योतिरग्निः ज्योतिरग्नौ दिवाकरे' इति मेदिनी । तस्यातिप्रदीपनैरतिशयितप्रकाशनैः दिवमाकाशं भुवं भूतलमपि समं तुल्यं यथातथा व्यभासयत् सौधाद्युपरमार्गादीनामधोर्ध्वप्रदेशान् सर्वानपि प्रद्योतयति स्मेत्यर्थः ॥ एतेनायमेवात्र जयपुरे प्रथमं (एलक्ट्रिक् सिटी) इति नामकं आलोकयन्त्रं स्थापितवानिति फलितम् ॥

मनुपक्षे ॥ स मनुः तमोभिभूते जलेनाप्लाविते जगत्यालोकाभावादन्धकाराच्छन्ने समये प्रलयावसानकाले इत्यर्थः ॥ पुरोऽग्रतः 'स्यात्पुरः पुरतोऽग्रत' इत्यमरः । निर्बाधतया आलोकाभावप्रयुक्तबाधा-

४१२. सविश्वविद्यानिलयस्थितौ जगत्प्रसारितौदार्यगुणप्रमाणितः ।
व्यकल्पयन्नन्दनकल्पवाटिका सुधासमुद्भासि सुरालयानपि ॥

४१३. अयं विधाताखिललोककर्मणां प्रजासमृद्धिं विदधत्स्वतेजसा ।
हिरण्यगर्भात्मभुवं स्वमेव किं तदा वभासास्पदमाततान न ॥

---

रहिततया क्रियाचयस्य सृष्टिक्रियासमुदायस्य विधित्सया विधातुमिच्छया अविन्धनानां अद्भिः प्रकाशमानानां तेषामम्मयत्वात् ज्योतिषां नक्षत्राणां अतिप्रदीपनैरत्यन्तप्रकाशनैः दिवं स्वर्लोकं भुवं भूलोकं चापि समं व्यभासयत् प्रकाशयामास निर्ममावित्यर्थः अत्र मनुं प्रति मत्स्यवचनं 'ततस्सदेवनक्षत्रं जगद्यास्यति संक्षयं। एकस्स्थास्यसि देवेषु दग्धेष्वपि परन्तप। एतदेकार्णवं सर्वं करिष्यति जगत्त्रयं। ततो लयान्ते सर्वस्य स्थावरस्य चरस्य च। प्रजापतिस्त्वं भविता जगतः पृथिवीपते'॥ इत्यादि मत्स्यपुराणे प्रथम द्वितीयाध्याययोर्द्रष्टव्यम् ॥

४१२ स इति ॥ विश्वविद्यानिलयस्य आन्ध्रविश्वविद्यालयस्य स्थितिः प्रतिष्ठापनं तत्र विषये जगति लोके प्रसारितेन प्रख्यापितेन औदार्यगुणेन दातृतागुणेन लक्षसङ्ख्यकधनदानादिति भावः॥ प्रमाणितः मर्यादीकृतः॥ 'प्रमाणं हेतुमर्यादा शास्त्रेयत्ताप्रमातृषु' इत्यमरः ॥ यदवधिकएव दातृतागुण इति भावः॥ तथाभूतः सः रामचन्द्रदेवः ईषदूनं नन्दनं नन्दनकल्पानन्दनवनसदृशाः 'ईषदसमाप्तौ कल्पप्' बन्धुश्चौरः सुहृद्वादीकल्पः प्रख्यः प्रभः समः । देशीयदेश्यरिप्वाभाः सोदराद्या इवार्थका इति कविकल्पलता। वाट्यएव वाटिकाः॥ गृहोद्यानानि स्वार्थे ठक् वाटीकास्तौ गृहोद्यानेत्यादिहैमः नन्दनकल्पाश्च ताः वाटिकाश्च सुधा चूर्णलेपः 'सुधा लेपोऽमृतं स्नुही'त्यमरः ॥ सुधाभिस्समुद्भासन्त इति सुधासमुद्भासिनः ताच्छील्ये णिनिः ते च ते सुरालयाः प्रासादमण्डपादयश्च तानपि व्यकल्पयत् निर्मापयामास ॥

मनुपक्षे ॥ ज्योतिः प्रदीपनानन्तरं सृष्टिप्रकारः प्रदर्श्यते स इति ॥ विश्वेषां सर्वेषां विद्यानां वेदादीनां भुवनानां शिल्पविद्याया वा निलय आधारभूतः खर्परेशरिवा विसर्गलोपो वक्तव्य इति वैकल्पिको विसर्गलोपः 'विश्वं कृत्स्ने च भुवने' इति विश्वः॥ स्थितौ पालने विषये जगत्सु भुवनेषु प्रसारितेन औदार्यगुणेन महत्वगुणेन प्रमाणितो निश्चितः 'उदारो दातृमहतो' रित्यमरः॥ तथाभूतः स मनुः नन्दनं इन्द्रोद्यानं तदाश्रयाकल्पवृक्षप्रधाना वाटिका सुधा पीयूषं च उपलक्षणं चैतद्द्वयं तेनान्येऽपि स्वर्गसम्भारा गृह्यन्ते ताभ्यां समुद्भासिनो ये सुराणामिन्द्रादीनामालया भवनानि तानपि व्यकल्पयत् विशेषेण ससर्जेत्यर्थः॥

४१३. अयमिति ॥ अखिलानां समस्तानां लोककर्मणां स्वकीयलौकिकक्रियाणां विधाता विदधातीति तथा स्वयं निर्वाहक इत्यर्थः॥ अयं रामचन्द्रदेवः स्वतेजसा स्वकीयप्रभावेण प्रजासमृद्धिं जनानामधिकर्धिं 'अधिकर्धिः समृद्धिस्स्या' दित्यमरः॥ विदधत् सम्पादयन् सन् हिरण्यानि सुवर्णादिनानाविधद्रव्याणि गर्भे कुक्षौ यस्यास्सा समृद्धिशालिनीत्यर्थः॥ तथाभूता आत्मनो भूः स्वकीया भूमिर्यस्य बहुव्रीहिगर्भको बहुव्रीहिः तं तथा भूतं स्वमेव स्वात्मानमेव तथा तेन रूपेण यो अवभासः॥ अयं ब्रह्मेत्याकारक आभासः तस्यास्पदं स्थानं कृत्वा न आततान किं? आततान एवेत्यर्थः॥ ब्रह्मापि अखिललोक-

४१४. श्रुतश्रुतिर्लोकसमुन्नतिर्धराभरो नृसिंहो बलिपूजितो जयी ।
स रामनामाऽजनिकामपः कृपानिधिः सुधर्मा दशमूर्तिवद्धरेः ॥

---

कर्मणां सकलभुवनकर्मणां विधाता स्वतेजसा प्रजासमृद्धिं विदधाति । हिरण्यगर्भाख्यया आत्मभूपदवाच्य-श्चेति उभयोस्साम्यम् ॥

मनुपक्षे ॥ हिरण्यगर्भस्यात्मभूः पुत्रः तं तथाभूतं स्वं स्वात्मानं अन्यत्सर्वं पूर्ववत् यद्यपि स्वायम्भुवस्यैव हिरण्यगर्भोत्पन्नत्वं मनुस्मृतावभिहितं तथापि साक्षात् । परम्परया वा वैवस्वतस्यापि तदक्षतं 'स्वायम्भुवस्यास्य मनोः षड्विंश्यामनवोऽपरे । सृष्टवन्तः प्रजास्वास्स्वामहात्मानो महौजसः' इत्यत्र मनुभाष्ये सर्वे हि साक्षात् ब्रह्मणा सृष्टा इत्येककुलसम्भवाद्वंश्या उच्यन्ते इति साक्षाद्ब्रह्मणा सृष्टत्वं मेधातिथिनोक्तं । सौरसृष्टावपि 'सङ्कर्षणोऽपः सृष्ट्वादौ तासु बीजमवासृजत् । तदण्डमभवद्धैमं सर्वत्र तमसा वृत'मित्यादिना सूर्यस्यैव हिरण्यगर्भत्वं प्रतिपादितं सूर्यसिद्धान्तादाविति तदात्मभूत्वं निर्बाधमेव तस्येति मन्तव्यम् ॥

एवं ब्रह्मसादृश्यं प्रदर्श्य विष्णोर्दशावतारसादृश्यं प्रदर्श्यते ॥

४१४ श्रुतश्रुतिरिति ॥ सोयं नृपः श्रुता गुरुमुखात् श्रवणेन्द्रियविषयीकृताः श्रुतयो वेदादिशास्त्राणि येन स तथोक्तः अन्यत्र श्रुता लोके प्रख्याताः श्रुतयो वेदाः प्रलयजलोद्धृताः शङ्खासुरापहृता वा यस्माद्धेतोस्स तथोक्तः एतेन मत्स्यावतार उक्तः लोकेषु जनेषु मध्ये समुन्नतिः सम्पदाद्यौन्नत्यं प्रांशुत्वं वा यस्य स तथाभूतः न सम्पदादिहीनः नापि वा खर्व इत्यर्थः अन्यत्र लोकानां पृष्ठोद्धृतभुवनानां समुन्नतिरुत्तोलनं यस्मात्सः एतेन कूर्मावतारः कथितः भरति बिभर्तीति वा भरः पचाद्यच् धराया भरो धराभरः पृथ्वीपालकः अन्यत्र दंष्ट्रायां भुव उद्धारकः एतेन वराहावतारस्सूचितः नृषु मनुष्येषु मध्ये सिंह इव सिंहः श्रेष्ठ इत्यर्थः । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः' इत्यमरः अन्यत्र नाचासौ सिंहः अपरकाये नरइव पूर्वकाये सिंह इवेति उभयाकारत्वात् एतेन नृसिंहावतारः प्रतिपादितः बलिभिर्बलशालिभिः पुरुषैः पूजितः क्तेनच पूजायामिति षष्ठीसमासप्रतिषेधः अन्यत्र बलिनामासुरेण पूजितः एतेन वामनावतारो बोधितः जयोऽस्यास्तीति जयी जययुक्तः अन्यत्र क्षत्रकुलहन्तकतया विजयवान् एतेन परशुरामावतारः सूचितः राम इति नाम यस्य स रामनामा रामचन्द्रनामेत्यर्थः विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्य इत्यनुशासनादिति भावः अन्यत्र रामनामेत्यनेन दाशरथिरूपावतारोऽभिहितः कामान् याचकानां मनोरथान् पाति रक्षति पिपर्ति पृणाति पूरयतीति वा कामपः पा रक्षणे इत्यस्माद्धातोः आतोऽनुपसर्गे इति कः पॄपालनपूरणयोरित्यस्माद्वा अन्येभ्योऽपि दृश्यत इति डः अन्यत्र कामपालत्वात्कामपः 'रेवती रमणो रामः कामपालो हलायुध' इत्यमरः एतेन बलरामावतार आख्यातः निधीयतेऽस्मिन्निति निधिः कृपाया निधिः कृपानिधिः दयानिधानं दीनदयालुरित्यर्थः अन्यत्र यागादावपि पशुहिंसाया निषेधकत्वात् कृपानिधिः उक्तञ्च जयदेवेन 'निन्दसि यज्ञविधेरहह श्रुतिजातं सदयहृदयदर्शितपशुघात'मिति 'पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते' इति च एतेन बुद्धावतारः प्रतिपादितः शोभनो धर्मो यस्य स सुधर्मा धर्मादनिच् केवलादित्यनिच् अन्यत्र शोभनो धर्मो

४१५. तथा समर्थः सहने प्रतर्पणे प्रतापने जीवनवर्तनार्पणे ।
प्रकाशनाह्लादनदेवपूजनेप्यसौ महेशाष्टतनूपमोभवत् ॥

४१६. मुखेन्दुबिम्बे मधुरा सरस्वती विलोचनाब्जे कमला च कोमला ।
ततश्च तस्याखिलशक्तिरूपिणी तनौ भवानी विललास सर्वदा ॥

४१७. स्वराज्यमुत्सृज्य कदाचिदाग्रहात् सतीर्थसेवी परिपूतविग्रहः ।
समेत्य देवानपि सिद्धपूरुषानुवास सल्लक्षणपत्तने सुखी ॥

---

यस्मात् सः अधार्मिककुलोन्मूलनेन धर्मसंस्थापकत्वात् एतेन कल्क्यवतारो व्यञ्जितः अतएव हरेर्नारायणस्य दशानां मूर्तीनां मत्स्यादीनां समाहारो दशमूर्तिसङ्ख्यापूर्वो द्विगुः द्विगुरेकवचनं स नपुंसकं तेन अवतारदशकेन तुल्यं दशमूर्तिवत् तेन तुल्यं क्रियाचेद्वतिः दशावतारतुल्यमजनि जातः सम्पन्न इत्यर्थः ॥

मनुपक्षे ॥ ब्रह्ममुखात् मत्स्यरूपिणो भगवतो वा श्रुतः श्रुतिः रमते युगयुगान्तादिषु क्रीडत इति रामं रमणीयं वा नाम यस्य स रामनामा अन्यत्सर्वं पूर्वार्थसमम् ॥

इदानीं शिवसादृश्येन विशिष्यते ॥

४१५ तथेति ॥ असौ रामचन्द्रदेवः मनुश्च सहने सहिष्णुतायां विषये तथा पृथिवीतनूपमः समर्थः शक्तः प्रतर्पणे सतां प्राणिनां तृप्तिसम्पादने विषये तथा जलतनूपमः प्रतापने दुष्टानां तापदानेविषये तथा अग्नितनूपमः जीवन्त्यनेनेति जीवनं वृत्तिः वर्तन्ते अस्मिन्निति वर्तनं वासः अन्यत्र प्राणधारणावकाशश्च तयोरर्पणे दाने विषये तथा क्रमेण वाय्वाकाशतनूपमः प्रकाशनं च आह्लादनं च देवानां पूजनं च प्रकाशनाह्लादनदेवपूजनं सर्वोऽपि द्वन्द्वो नपुंसकैकवद्भावनियमादेकवद्भावः तस्मिन्विषयेऽपि तथा क्रमेणार्कादितनूपमः अर्थात् प्रकाशने अर्कोपमः आह्लादने चन्द्रोपमः देवपूजने यागादौ विषये यज्वतनूपमः समर्थ इत्यर्थः अतएव महेशस्य शिवस्य अष्टौ तन्वोमूर्तय एव उपमा यस्य स तथोक्तोऽभवत् "भूतार्कचन्द्रयज्वानो मूर्तयोष्टौ प्रकीर्तिताः" इति सुप्रसिद्धम् ॥

एवं ब्रह्मविष्णुशिवसम्बन्धिनि तस्मिन् तच्छक्तित्रयसम्बन्धश्च प्रदर्श्यते ॥

४१६ मुखेति ॥ ततः तस्माद्धेतोः ब्रह्मविष्णुशिवसम्बन्धादित्यर्थः तस्य रामचन्द्रदेवस्य मनोश्च मुखेन्दुबिम्बे मुखमेवेन्दुबिम्बं तस्मिन् सर्वदा कथनोपकथनादौ मधुरा माधुर्यगुणयुक्ता सरस्वती वाग्देवी विललास विलसितवती विलोचनाब्जे नेत्रपद्मे कोमला सुकुमारा कमला लक्ष्मीश्च विललासेत्यर्थः तनौ शरीरे अखिलशक्तिरूपिणी सर्वशक्तिस्वरूपा भवानी दुर्गा च विललास शक्तिरूपेणेति भावः एतेनास्य मधुरभाषित्वं दृष्टौ सदयत्वं लक्ष्मीप्रदत्वं च एवं निग्रहानुग्रहसामर्थ्यं च सूचितम् ॥

४१७ स्वेति ॥ स रामचन्द्रदेवः कदाचित् कस्मिंश्चित्समये त्रिंशदधिकोनविंशतिशततमे (१९३०) क्रीस्ताब्दे मार्गशीर्षमासीत्यर्थः स्वराज्यं स्वकीयजनपदं उत्सृज्य परित्यज्य आग्रहात् आदरातिशयात्

**४१८. अथाल्पकालेऽत्र निवर्त्य लौकिकं स्वकृत्यमस्मिन्समयातिपातिनि ।
अभूदनाथा जगती हतक्रिया विसन्ततौ सद्द्विजदेवसन्ततिः ॥**

---

तीर्थानि पुण्यस्थानानि सेवत इति तीर्थसेवी कृततीर्थपर्यटन इत्यर्थः अतएव परिसर्वतोभावेन पूतः पवित्रीकृतो विग्रहः शरीरं यस्य सः देवान् शिवविष्णुप्रतिमादीन् सिद्धपूरुषान् सन्यासिवैष्णवादीनपि तत्तत्पुण्यस्थानस्थितानित्यर्थः समेत्य दर्शनपूजनादिना सङ्गत्य सुखी लब्धानन्दस्सन् सत् शोभनं यत् लक्षणाख्यं पत्तनं (लक्नो) इति प्रसिद्धं तस्मिन् उवास न्यवसत् नानातीर्थानि परिभ्रम्यागत्य बलरामपुरे स्वश्वश्रूस्यालकादिभिर्बहुमानेनाभिनन्दितः (लक्नो) पुर्यां बलरामपुरीयराजभवन एव स्थितवानिति बोध्यम् ॥

मनुपक्षे ॥ परिपूतविग्रहः पवित्रात्मा स मनुः कदाचित् सत्ययुगावसाने इत्यर्थः स्वराज्यं स्वकीयराजकर्म उत्सृज्य स्वपुत्रादिषु इक्ष्वाकुप्रभृतिषु समर्प्य सत् सत्यमेव लक्षणं चिह्नं यस्य तस्मिन् पत्तने सत्यलोकाख्यब्रह्मपुरे इत्यर्थः 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' । इत्यमरः आग्रहात् तीर्थं स्वगुरुं ब्रह्माणं सेवितुं शीलं यस्य स तथाभूतः 'निपानागमयोस्तीर्थमृषिजुष्टजलेगुरा' वित्यमरः देवान् अच्युतप्रमुखान् चतुरो देवनिकायान् उक्तञ्च योगभाष्ये तृतीये ब्रह्मणस्सत्यलोके चत्वारो देवनिकायाः अच्युताः शुद्धनिवासाः सत्याभाः संज्ञा संज्ञिनश्चेत्यादि सिद्धपूरुषान् वशिष्ठ-नारदप्रभृतीनपीत्यर्थः समेत्य सङ्गत्य सुखीसन्नुवास सत्ये मनुरेव राजासीत् ततः इक्ष्वाकुप्रभृतयो मनोः पुत्रपौत्रादयः पृथ्वीपालकाः मनुस्तु ब्रह्मलोकमध्यास्ते इति भागवतादिमतम् ॥

४१८. अथेति ॥ अथ समयान्तरे कात्स्न्येन वा विसन्ततौ विगतसन्ततौ पुत्रादिरहित इत्यर्थः ॥ अस्मिन् रामचन्द्रदेवे राज्ञि अल्पकाले अल्पसमये युवावस्थायामेवेत्यर्थः ॥ लौकिकं लोके प्रसिद्धं हितं वा ठक् तत् लोकव्यवहारसिद्धं स्वकृत्यं स्वकीयं राजकार्यं निवर्त्य परिसमाप्य अत्र लक्षणपुरएव समयस्य कालस्यातिपातो अतिक्रमोऽस्यास्तीति समयातिपाती 'पर्ययोतिक्रमस्तस्मिन्नतिपात उपात्यय'इत्यमरः ॥ तस्मिन्समयातिपातिनि समयमतिक्रम्य लोकान्तरं गते सतीत्यर्थः ॥ द्विजा ब्राह्मणादयः देवा विष्णुप्रतिमाद-यश्च तेषां सन्तत्यासमुदायेन सह वर्तमाना जगती जयपुरक्षितिः 'जगती जगतिच्छन्दो विशेषेऽपि क्षिता-वपी'त्यमरः ॥ अनाथा पतिहीना सती हता विनष्टाः क्रियाः कर्माणि यस्यां सा तथाभूता अभूत् लोकान्तरं गते तस्मिन् राज्ञि तदानीं जपहोमदेवयात्रा पूजादिराजकीयं सर्वं कर्म निवृत्तमासीत् नियोजकाभावात् नियोज्य कर्मनिवृत्तिरिति भावः ॥ अयं हि राजा रामचन्द्रदेवः स परिवारस्तीर्थयात्रां कृत्वा नानातीर्थानि परिभ्रम्यागत्य लक्षण (लक्नो) पुर्यां गोमतीतीरे निवसन् तत्रैव एकत्रिंशदधिकोनविंशतिशततमे (१९३१) क्रीस्ताब्दे फाल्गुणशुक्लतृतीयायां स्वर्गसोपानमारुरोह इति ॥

मनुपक्षे ॥ अथास्मिन्वैवस्वते मनौ अल्पे ब्रह्मणो दिवसार्धभागपरिमिते काले, 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते' इत्युक्तेः तद्दिनमध्यएव चतुर्दशानां मन्वन्तराणां शास्त्रसिद्धत्वात् चतुर्दशधा विभक्तस्य ब्रह्मदिवसस्य सप्तमभागएव वैवस्वतमनोः कालः तन्मध्ये इत्यर्थः ॥ लौकिकं पुराणादिप्रसिद्धं स्वकृत्यं स्वसृष्ट्यादिकर्मनिवर्त्य विगताः सन्ततयः इक्ष्वाकुप्रभृतयः पुत्रपौत्रपरम्परा यस्य तस्मिन् तथाभूते अत्र

४१९. तदाधराधीश्वरमन्त्रिमुख्यका बुधावली प्राप्य विशाखपत्तने ।
अपालकं पालयितुं प्रजाकुलं व्यबोधयद्विक्रमदेवनामकम् ॥

४२०. तथा श्रुतेः स्वं समयं विनिर्णयन् विधेयसावर्णसुतप्रतीक्षया ।
ततस्समागत्य सहैव तैरलश्चकार सस्वर्णमहीभृदासनम् ॥

---

सत्यलोके समयातिपातिनि ब्रह्मदिनस्य सप्तमभागरूपसमयमतिक्रामति सति तत्समयमतिक्रम्यान्तर्भूते सतीत्यर्थः ॥ सद्विजदेवसन्ततिः तदानीं स्थिता ये देवर्षिप्रभृतयस्तत्सन्तत्या सहिता जगती जगज्जातं अनाथा अनीश्वरा सती हतक्रिया लुप्ताचारविचारा अभूत् एकैकमन्वन्तरे एकैकेन्द्रस्य नियमितत्वात् तदानीं मनोरभावे इन्द्रान्तरस्याप्यभावात् मनुसन्ततेः पार्थिवस्याप्यभावात् शासकाभावेन स्वर्गमर्त्यादिस्थितं सर्वं क्रियाशून्यप्रायमासीदिति समुदितोऽर्थः ॥

राज्ञो लोकान्तरगमनानन्तरं किमासीत्तदाह—

४१९. तदेति ॥ तदा तस्मिन्समये धराया भारतभूमेरधीश्वरः सम्राट् 'राजा तु प्रणताशेष सामन्तस्स्यादधीश्वर' इत्यमरः तस्य ये मन्त्रिणः (एजंटुगवर्नरु) प्रभृतयः तएव मुख्याः प्रधानाः यत्र स बुधानामाङ्ग्लपण्डितानामावली पङ्क्तिः विशाखपत्तने तदाख्ये नगरे विक्रमदेव इति नाम यस्य स विक्रमदेवनामकः वैकल्पिकस्समासान्तः कप्रत्ययः तं पूर्वोक्तं वक्ष्यमाणरूपं च कृष्णचन्द्रदेवस्य पुत्रं प्राप्य अपालकं पालकरहितं अराजकमिति यावत् प्रजाकुलं जयपुरीयजनजातं पालयितुं रक्षितुं व्यबोधयत् प्रबोधयामास राज्ञो रामचन्द्रदेवस्य पुत्ररहितस्य स्वर्गमनवार्तां प्राप्य मान्द्राजगवर्नरुप्रभृतयः धर्मशास्त्रदृष्ट्या सम्यग्विविच्य निरूप्य च विशाखपत्तनस्थैरेजंटुप्रमुखैः विक्रमदेवं जयपुरस्य राजानं प्राबोधयन्निति बोध्यं इतः प्रभृति वंशस्थग्रन्थसमाप्तिपर्यन्तं वर्ण्यमानस्य विक्रमस्य प्राशस्त्यद्योतनाय उपमानत्वेन ब्रह्मापि प्रस्तूयते तदेत्यादिना तदा वैवस्वतमनोरनन्तरसमये धरस्य कैलासस्याधीश्वरश्शिवः गिरीशत्वात् मन्त्री देवमन्त्री बृहस्पतिश्च तौ मुख्यौ यत्र सा बुधावली देवपङ्क्तिः 'ज्ञातृचान्द्रिबुधा' इति कोशात् खपत्तने शून्यपत्तने ब्रह्मपुर्यामित्यर्थः विशतीति विशा प्रविष्टा सती विशधातोरिगुपधलक्षणः कप्रत्ययः ततष्टाप् विना हंसरूपपक्षिणा वा तत्पक्षिणि वा क्रमस्सञ्चारो यस्य हंसवाहनत्वात् स च दीव्यतीति देवश्च नाम्ना कोनामकश्च को ब्रह्मणीति कोशात् विशेष्यविशेषणसमासौ तं हंसवाहनं देवं ब्रह्माणं प्राप्य सङ्गत्य अपालकं मनोरभावादरक्षकं प्रजाकुलं प्रजायन्त इति प्रजाः भूतग्रामचतुष्टयं तत्कुलं पालयितुं व्यबोधयत् तस्य प्रजापतित्वादिति भावः ॥

तथा प्रबोधनानन्तरं विक्रमः किं कृतवान् तदाह ॥

४२०. तथेति ॥ स विक्रमदेवः तथा तेन प्रकारेण श्रुतेः श्रवणात् स्वस्य जयपुराधिपत्ये सत्यादेशश्रवणानन्तरमित्यर्थः स्वं स्वकीयं समयं वार्धकावस्थारूपं विनिर्णयन् विवेकेन निश्चिन्वन् ममेदानीं वार्धकस्समयः मां विना अस्मद्वंशस्य जयपुरस्य वा रक्षकः कोऽपि नास्ति दत्तकपुत्रस्वीकारादिना तदुभयं रक्षणीयमिति विनिर्णयन्नित्यर्थः समानो वर्णः सवर्णः सवर्णाद्भवः सावर्णः सचासौ सुतश्च सावर्णसुतः स्वसमानजातीयपुत्र इत्यर्थः तस्य प्रतीक्षया उपयुक्तपुत्रग्रहणेच्छयेत्यर्थः ततः विशाखपत्तनात्

**४२१. सुखोषितं स्निग्धमहाशिलोरसं स्वपार्श्वसंयद्युगबाहुशोभितं ।**
**सुरक्तगौराङ्गरुचा समुज्ज्वलं मनश्शिलालिप्तसुमेरुश्रृङ्गवत् ॥**

तैः गवर्नमेंटु प्रतिनिधिप्रमुखैः सह सममेव समागत्य जयपुरं समागत्य सम्प्राप्य महीं बिभर्तीति महीभृत् नृपः 'भूभृद्भूमिधरे नृपे' इत्यमरः तस्यासनं महीभृदासनं स्वर्णघटितं महीभृदासनं शाकपार्थिवादिः तत्सिंहासनं अलञ्चकार सिंहासनमारुरोहेत्यर्थः 'नृपासनन्तु यद्भद्रासनं सिंहासनं तु तदितिहैम' मित्यमरः ॥

ब्रह्मपक्षे ॥ स ब्रह्मा तथा तेन रूपेण श्रुतेः श्रवणात् वेदं निरीक्ष्य वा ल्यबर्थे पञ्चमी स्वं समयं स्वदिवसस्य सप्तमभागरूपं विनिर्णयन् तदवसानं विनिश्चिन्वन् सवर्णायाः सूर्यपत्न्या भवः सावर्णः सचासौ सुतः सर्वे हि मनवः साक्षाद्ब्रह्मणा सृष्टा इति सावर्णेरपि ब्रह्मसुतत्वप्रतिपादितत्वात् सौरसृष्टावपि "सङ्कर्षणोऽप्यसृष्टादौ तासु बीजमवासृजत्" इत्यादिना सूर्यस्यापि सूर्यसिद्धान्ते हिरण्यगर्भत्वप्रतिपादनात् तस्य प्रतीक्षया सावर्णिमनुमपेक्ष्येत्यर्थः ॥ तैर्देवैस्सहैव ततः ब्रह्मपुरात् समागत्य स्वर्णमहीभृत् स्वर्णमहीध्रो मेरुः स एवासनं तत्र वा आसनं उपवेशनस्थानं तत् अलञ्चकार देवसभां प्रविवेशेत्यर्थः ॥ सप्तमाद्वैवस्वतमनोरनन्तरमष्टमस्सावर्णो मनुः उक्तञ्च विष्णुपुराणादौ 'छाया संज्ञासुत' इत्यादि चतुर्दशमनवोयथा । 'मनुस्स्वायम्भुवोनाममनुस्स्वारोचिषस्तथा । उत्तमिस्तामसिश्चैव रैवतश्चाक्षुषस्तथा ॥ एते तु मनवोऽतीताः सप्तमस्तु रवेस्सुतः । वैवस्वतोऽयं यस्यैतत्सप्तमं वर्तते युगं । सावर्णोदक्षसावर्णो ब्रह्मसावर्ण इत्यपि । धर्मसावर्णरुद्रस्तु सावर्णो रौच्यभौत्यवत्' इति ॥

इतःप्रभृति पञ्चभिः कुलकम्—

४२१. सुखोषितमित्यादिभिः ॥ अखिलः पुरमाश्रितस्तं तुष्टावेति परत्र सम्बन्धः तं विक्रमं किम्भूतं सुखेनोषित उपविष्टस्तं स्निग्धा चिक्कणा या महती शिलाइपत् तद्वत् उरो वक्षस्थलं यस्य तं स्वपार्श्वयोः संयतौ सन्नद्धौ सम्पूर्वात् यती प्रयत्ने इत्यस्माद्धातोः कर्तरि क्विप् यम उपरमे इत्यस्मात् कर्तरि क्विपि मलोपस्तुक् इणूगताविन्यस्माच्छतृप्रत्यये इणोयणिति यणि स्वपार्श्वे संयन्तौ सङ्गच्छन्तौ इति वा यौ युगाविव बाहू दीर्घभुजौ ताभ्यां शोभितस्तं युगो हलाङ्गविशेषः ॥ 'बाहो भुजे पुमान् मानभेदाश्ववृषवायु'ष्विति मेदिनी । सुष्ठु रक्तगौरस्य तद्वर्णस्याङ्गस्य रुचा कान्त्या समुज्ज्वलो जाज्वल्यमानस्तं अतएव मनश्शिलया धातुविशेषेण लिप्तं विच्छुरितं यत् सुमेरुश्रृङ्गं तेन तुल्यं तद्वत् स्थितमित्यर्थः ॥

ब्रह्मपक्षे ॥ स्वपार्श्वयोः संयद्भिः युगसङ्ख्याकैर्बाहैः चतुर्भिर्भुजैश्शोभितं युगशब्दोऽत्र चतुःसङ्ख्याबोधकः अन्यत्सर्वं समानं । ब्रह्माणं रक्तगौराङ्गं चतुर्वक्त्रं चतुर्भुजमित्यादि तद्ध्यानमन्त्रानुसन्धेयम् । मेरुश्रृङ्गेऽपि सर्वाणि विशेषणानि प्रयोज्यानि तत्र सुष्ठु खे आकाशे उषितं अभ्रङ्कषत्वात् स्निग्धमहाशिला उरसि यस्य तं स्वस्य पार्श्वयोः पार्श्वाभ्यां वा सम्यक् यन्तौ निर्गच्छन्तौ युगभूतौ युग्मभूतौ यौ बाहौ प्रवाहौ युगस्य सम्भवात् गङ्गायमुनयोर्युग्मस्य वा यौ प्रवाहौ ताभ्यां शोभितं उक्तं च कथासरित्सागरे "यत्रार्चिराज्यधूमादिमार्गाविव समागतौ । गङ्गायमुनयोर्बाहौ भातः सुगतये नृणा"मिति मनश्शिलालिप्तत्वात् सुरक्तगौराङ्गरुचा समुज्ज्वलं च ब्रह्मणि साम्यलाभाय स्वपार्श्वेषु संयद्भिः युगसङ्ख्यैश्चतु-

४२२. प्रसिद्धमाहुर्निगमागमेषु यं पुराणमूर्तिं बहुवक्त्रसंस्तुतं ।
तपस्विभिर्ज्ञानधनार्थिभिर्द्विजैर्गुणं गृणद्भिः परितोऽपि सेवितम् ॥

४२३. विधेर्निषेधस्य च लोककर्मणां बुभुत्सुभिस्तैर्विबुधैर्विमण्डितं ।
विचित्रनानाविधवाग्विलासयुक्प्रबन्धविस्तारकृतौ सुपण्डितम् ॥

---

स्वसङ्ख्यैर्वाहैः गङ्गाप्रवाहैः शोभितमिति समर्थनीयं । गङ्गायाश्चतुर्धात्वमुक्तं सिद्धान्तशिरोमणौ यथा "विष्णुपदी विष्णुपदात् पतिता मेरौ चतुर्धाऽसीत् । विष्कम्भाचलमस्तकशस्तसरः सङ्गता गता वियति शीताख्या भद्राश्वं साळकनन्दा च भारतं वर्षं । चक्षुश्च केतुमालं भद्राख्या चोत्तरान् कुरून् यातेति" ॥

४२२. प्रसिद्धमिति ॥ यं वि ष्णुं निगमागमेषु निगमा वेदाः आगमानि तद्भिन्नतन्त्रशास्त्राणि च 'आगतं शिववक्त्रेभ्यो गतं च गिरिजाश्रुतौ । मतं च वासुदेवस्य तस्मादागममुच्यते' इत्युक्तलक्षणानि तेषु प्रसिद्धं तद्विषयेषु वेत्तृत्वेन ख्यातमित्यर्थः 'प्रसिद्धौ ख्यातभूषिता' वित्यमरः । आहुः वदन्ति पण्डिता इति शेषः 'पुराणानां सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षण'मित्युक्तरूपाणां मूर्तिरिव मूर्तिर्यस्य तं पुराणतत्वाभिज्ञमित्यर्थः । बहुषु अनेकेषु वक्त्रेषु जनमुखेषु संस्तुतं प्रशंसितं ज्ञानं धनं चार्थयितुं शीलं येषां तैः कैश्चिद्ज्ञानार्थिभिः कैश्चिद्धनार्थिभिः इत्यर्थः । अतएव गुणं विद्वत्वदातृत्वादिरूपं गृणद्भिः कीर्तयद्भिः तपस्विभिः वैष्णवादिभिः द्विजैर्ब्राह्मणादिभिरपि परितः समन्तात् सेवितं ज्ञानोपदेशेन धनदानेन च तान् प्रीणयित्वा आश्रयतां प्रापितमित्यर्थः ॥

ब्रह्मपक्षे ॥ यं ब्रह्माणं निगमागमेषु प्रसिद्धं प्रतिपादितमाहुः पुराणमूर्तिं पुरातनविग्रहं जगदादिभूतत्वात् 'पुराणे प्रतनप्रत्न पुरातन चिरन्तनाः' इत्यमरः । बहुभिश्चतुस्सङ्ख्याकैर्वक्त्रैस्संस्तुतं प्रस्तुतं बहुवक्त्र इति संस्तुतं वा ज्ञानं तत्वज्ञानमेव धनं तदर्थिभिः गुणं सर्वज्ञत्वादिकं गृणद्भिस्तपस्विभिर्द्विजैः नारदादिभिः परितस्सेवितं परिवेष्टनेन आराधितमित्यर्थः ॥

४२३. विधेरिति ॥ लोकानां लोकसम्बन्धिनां लौकिकानामित्यर्थः ॥ कर्मणां कर्तव्याकर्तव्यरूपाणां विधेः कर्तव्यतायाः निषेधस्य अकर्तव्यतायाश्च शेषत्वविवक्षायां षष्ठी विधिं निषेधं चेत्यर्थः ॥ बुभुत्सुभिः बोद्धुमिच्छुभिः बुध अवगमने इत्यस्माद्धातोः सन्नन्तादुः एकाचोबशोभषिति भष्भावः तैः प्रसिद्धैः कर्मकुशलैरित्यर्थः । विबुधैः विशेषज्ञैः प्राड्विवाकादिभिरित्यर्थः 'विबुधोज्ञे सुरे' इति कोशात् । विमण्डितं विशेषेणावेष्टितमित्यर्थः पण्डिता अपि संशयितस्थलेषु यं पृच्छन्तीति भावः । विचित्राणां चमत्कृतिजनकानां नानाविधानां संस्कृतोत्कलत्रैलिङ्गाङ्ग्लरूपबहुप्रकाराणां भाषाणां वाचां विलासैर्विन्यासैः युज्यन्त इति युजः युजेः सत्सूद्विषेत्यादिना क्विप् तेषां प्रबन्धानां सन्दर्भाणां विस्तारकृतौ विस्तृतिकरणे विषये सुपण्डितं प्रवीणमित्यर्थः एतत्कर्तृकग्रन्था नामतोऽत्र निर्दिश्यन्ते श्रीराधामाधवनाटकं श्रीनिवासकल्याणं कृष्णार्जुनचरितटीका । मानवतीचरितं । नीतिगीतिततिः गोविन्दमञ्जरिकावलिः । सन्ध्याप्रयोगः । द्विजाचमनविधानं । कादम्बरीकथासारः । श्रीतुलसीविक्रमरामायणमादिकाण्डात्मकं । सरसगीतावली । भक्तिरत्नमालिका । बौद्धनाटकं । कुन्दमालानाटकानुवादश्च इत्यादयो ग्रन्थाः केचन उत्कलभाषया । केचन त्रैलिङ्गभाषया । केचिच्च संस्कृतभाषया निर्मितास्सन्तीति वेदितव्याः ॥

४२४. स्मृतं जनुष्मानिति कृष्णदेहतः स्वबाहुजातोन्नतिसाधितेप्सितं ।
स्वभूप्रजापाल पितामहात्मभूपदेरितं लोकहिते सदा रतम् ॥

४२५. अवाप्य तद्ब्रह्मसमागमात्परं सुखं समासाद्य तदा तमादरात् ।
प्रकाश्य तुष्टाव समन्ततोमुखं जयेति पूर्वं पुरमाश्रितोऽखिलः ॥

---

ब्रह्मपक्षे ॥ लोककर्मणां भुवनसम्बन्धिकर्मणां विधेः निषेधस्य च बुभुत्सुभिः तैः लोकपालकैरित्यर्थः। विबुधैर्देवैर्विमण्डितं परिवेष्टितमित्यर्थः विचित्राणां नानाविधानां वाचः सरस्वत्या देव्याः विलासयुजां शृङ्गारक्रियाविशेषयुक्तानां प्रबन्धानां प्रकृष्टरतिबन्धानां विस्तारकर्तारं सुपण्डितं तथाभूतं यं आहुरिति पूर्वेण सम्बन्धः यद्वा वेदगर्भत्वात् वाक्पतित्वात् विश्वसृक्त्वाच्च विचित्रनानारूपवचनविन्यासयुक्तसन्दर्भाणां तत्कालोचितानां विस्तारकर्तारं सुपण्डितं रचयितारमिति पूर्वार्धसमम् ॥

४२४ स्मृतमिति ॥ कृष्णदेहतः कृष्णचन्द्रवर्मणः शरीरात् जनुष्मान् जन्मवान् इति स्मृतं प्रख्यातं "यशोदयाप्यार्थितमूर्तिरन्यज" इत्यत्र श्लोकप्रतिपादितस्य कृष्णचन्द्रदेवस्य तनूज इति कथितमित्यर्थः॥ स्वबाहुजातया निजभुजबलोपार्जितया उन्नत्या महत्त्वेन साधितं सम्पादितं ईप्सितं मनोरथो येन तं स्वस्य सम्बन्धिनी या भूः जयपुराख्या स्वज्येष्ठसन्तानैः परिपालिता तस्यां प्रजापालः जनपालक आसीत् यआसन्नस्वर्गतो रामचन्द्रदेव इत्यर्थः॥ तस्य पितामहस्य कनिष्ठपितामहस्यात्मनो भवतीत्यात्मभूः पुत्र इति पदेन शब्देन ईरितः॥ लोकैः कथितस्तं राज्ञो रामचन्द्रस्य पितामहवैमात्रेय भ्रातुष्पुत्र इत्यभिहितमित्यर्थः॥ सदा सर्वदा लोकानां समस्तजनानां हिते इष्टसाधने विषये रतम् ॥

ब्रह्मपक्षे ॥ कृष्णस्य भगवतो बालमुकुन्दस्य देहतः नाभिपद्मादित्यर्थः ॥ जनुष्मान् उत्पन्न इति स्मृतं पुराणादिषु ख्यातं स्वबाहुजातस्य स्वकीयबाहुसमुत्पन्नस्य अष्टममनोरित्यर्थः ॥ क्षत्रियजातेर्बाहुजत्वात् उन्नतिसाधिते चतुर्दशभुवने आधिपत्यप्रदानेन उत्कर्षसाधने विषये ईप्सितं यस्य तं भावेक्तप्रत्यये स्वेनैव भवतीति स्वभूः 'स्वभूर्नाब्रह्मणि हरा'विति कोशात् प्रजाः पालयतीति प्रजापालः कर्मण्यण् प्रजापतिपदवाच्यत्वात् अग्निष्वात्तादीनामपि पितॄणां पितेति पितामहः आत्मनः परमात्मनो विष्णोस्सकाशात्भवतीत्यात्मभूः इत्येतद्रूपैः पदैः पर्यायशब्दैः ईरितोऽभिहितस्तं लोकानां भुवनानां हिते सदा रतं तत्परमित्यर्थः॥

४२५. अवाप्येति ॥ जयेति शब्दः पूर्वे वाचकशब्दे यस्य तत्पुरं जयपुरमित्यर्थः ॥ आश्रितः अखिलो जनसमूह इत्यर्थः॥ तं उक्तरूपं विक्रमदेवमित्यर्थः॥ समासाद्य समागम्य तदा ब्रह्मसमागमात् ब्रह्मणो विधातुः समागमात्साक्षात्सङ्गमादित्यर्थः॥ यत्परं सर्वोत्कृष्टं सुखं तत् तत्सजातीयसुखं परमानन्दरूपमित्यर्थः॥ अवाप्य प्राप्य आदरात् समादरात् समन्ततः परितः मुखं प्रकाश्य तुष्टाव सर्वोऽपि जनः सुखवितननपूर्वकं उच्चैर्गुणकीर्तनं चकारेत्यर्थः ॥

ब्रह्मपक्षे ॥ पुरं शरीरं 'पुरं शरीरमित्याहुर्गृहोपरिगृहे पुरं । पुरो गुग्गुलुराख्यातो नगरेऽपि पुरं पुरी'ति धरणिः। तदाश्रितोऽखिलः सर्वोऽपि प्राणीत्यर्थः॥ समन्ततः चतसृष्वपि दिशासु मुखानि

४२६. क्रमादवर्तन्त यथायथं पृथग्व्यवस्थितास्ते न चतुर्विधाः प्रजाः ।
पतिं तमासाद्य तदाज्ञया रता यथा नियोगं निजधर्मकर्मसु ॥

४२७. सहर्षिभिर्व्याससुभाषितैः कृपापरैश्च रामाह्वयदीप्तिवन्मुखैः ।
क्रियासु मुख्यैः सुतपोऽमितप्रभैः सुपूजितैर्देवगणैश्च दिद्युते ॥

---

यस्य स समन्ततोमुखः चतुर्मुख इत्यर्थः ॥ तं तथाभूतं ब्रह्माणं समासाद्य सङ्गत्य तदा तस्मिन् समये ब्रह्म 'सत्यं ज्ञानमनन्त'मित्यादि श्रुतिप्रतिपाद्यं परमात्मतत्वं तस्य समागमात् साक्षात्कारात् यत् परं नित्यनिरतिशयं सुखं ब्रह्मानन्दरूपं तत् अवाप्य जयेति पदं पूर्वं प्रथमं यस्मिन् कर्मणि तत् यथा तथा क्रियाविशेषणं चैतत् प्रकाश्य उच्चैरुद्घोष्य तुष्टाव जयजय ब्रह्मन् इत्यादि रूपेण स्तुतिं चकारेत्यर्थः ॥

४२६. क्रमादिति ॥ तेन विक्रमदेवेन यथायथं यथायोग्यं यथा स्वे यथायथमिति निपातनात्साधुः पृथक् व्यवस्थिताः नानाप्रकारजाति देशकुलधर्माचारादिव्यवस्थया स्थापिताः चतस्रो विधाः प्रकाराः यासां ताश्चतुर्विधाः ब्रह्मक्षत्रविट्शूद्ररूपेण चतुः प्रकारा इत्यर्थः ॥ प्रजा जनाः तं विक्रमदेवं पतिं पालकमासाद्य प्राप्य क्रमात् ब्राह्मणादिक्रमात् कालक्रमाद्वा नियोगं नियोजनमनतिक्रम्य यथानियोगं निजधर्मकर्मसु स्वकीयवेदादिविहितकृत्येषु यजनपालनवाणिज्यसेवादिरूपेष्वित्यर्थः ॥ रता आसक्ता अवर्तन्त आसन् ॥

ब्रह्मपक्षे ॥ तेन ब्रह्मणा यथायथं पृथक् व्यवस्थिताः चतुर्विधाः प्रजाः देवर्षिपितृमनुष्यरूपाः जरायुजाण्डजस्वेदजोद्भिज्जरूपा वा तं ब्रह्माणं पतिमासाद्य तदाज्ञया तस्य ब्रह्मणः शासनेन यथानियोगं क्रमात् निजधर्मकर्मसु रताः स्वस्वव्यापारेषु निरताः अवर्तन्त ॥

उक्तएवार्थो विशदीक्रियते ॥

४२७. सहर्षिभिरित्यादि ॥ व्यासस्य महर्षेः सुभाषितानि शोभनोक्तयः अष्टादशमहापुराणोपपुराणमहाभारतानीत्यर्थः ॥ तैः तत्पठनश्रवणादिभि रित्यर्थः ॥ सहर्षोऽस्त्येषामिति सहर्षिणस्तैः परस्परस्पर्धाशालिभिः हर्षयुक्तैर्वा 'सहर्षस्स्पर्धनेहर्षे' इति त्रिकाण्डशेषः ॥ कृपा दयैव परं प्रधानं येषां तैस्तथाभूतैश्च राम इत्याह्वयो रामाह्वयः रामनाम तेन दीप्तिमन्ति जाज्वल्यमानानि मुखानि येषान्तैः सर्वदा रामनामोच्चारणेन प्रसन्नवदनैरित्यर्थः ॥ क्रियासु स्वस्वकर्मसु यद्वा आरम्भो निष्कृतिः शिक्षा यजनं सम्प्रधारणं । 'उपायः कर्मचेष्टा च चिकित्सा च नवक्रिया' इत्युक्तरूपासु मुख्यैः प्रधानैः निपुणैरित्यर्थः ॥ सुतपोभिः शोभनकृच्छ्रादिकर्मभिः अमिता अपरिमिताकान्तिर्येषां तैः अमृतप्रभा इति पाठे अमृता देवाः तेषां प्रभेव प्रभा येषां तैः निष्पापत्वाज्ज्वलच्छरीरैः इत्यर्थः तथाभूतैर्जनैरित्यध्याहार्यं तथा सुपूजितैः सुष्ठु अर्चितैः देवगणैः प्रासादादिस्थितदेवमूर्तिसमूहैश्च दिद्युते द्योतितं कर्मणि तङ् । अस्य राज्ञः शासनात् सर्वेऽपि जनाः सद्धर्मकर्मपरायणा आसन् समस्तदेवकार्यमपि सम्यगनुष्ठितमासीदिति भावः ॥

ब्रह्मपक्षे ॥ तदानीं तेन व्यवस्थिता देवा ऋषयश्च प्रदर्श्यन्ते व्यासेन सह सुभाषितैः सुष्ठूक्तैः पुराणेष्वित्यर्थः कृपएवापरोऽन्यो येषु तैश्च राम इत्याह्वयो नाम यस्य स रामाह्वयः स च दीप्तिमांश्च तौ मुखं प्रारम्भो येषां तैस्तत्प्रभृतिभिरित्यर्थः ऋषिभिः गालवद्रौण्यृष्यशृङ्गैर्मिलित्वा सप्तभिऋषिभि-

४२८. प्रसिद्धगन्धर्वविहारसादरोऽनुयायिरक्षः कुलदीपनः प्रभुः ।
प्रचारयामास तदा प्रजापतिः क्षितौ सविद्याधरनामसार्थकम् ॥

४२९. युतो जयन्तामृतकल्पनन्दनश्रिया च शच्या समया च पद्मया ।
अभूत्पुरोदेशविशेषपालकः सुधीः सुरेन्द्रः कलितप्रभावलिः ॥

रित्यर्थः । सह तत्सहितैरित्यर्थः । मुख्यैस्तदाख्यैः सुतपाश्चामितप्रभाश्च तैस्तत्तन्नामभिश्च सुपूजितैः सर्वैरप्यर्चितैः देवगणैर्देवसमूहैश्च क्रियासु तन्मन्वन्तरविहितकर्मसु दिद्युते उक्तं च विष्णुपुराणे तृतीयेंशे द्वितीयेऽध्याये "सावर्णिस्तु मनुर्योसौ मैत्रेय भविता ततः । सुतपाश्चामिताभाश्च मुख्याश्चापि तदा सुराः ॥ तेषां गणस्तु देवानामेकैको विंशकः स्मृतः । सप्तर्षीनपि वक्ष्यामि भविष्यान्मुनिसत्तम । दीप्तिमान्गालवो रामः कृपो द्रौणिस्तथापरः । मत्पुत्रस्तु तथा व्यासऋष्यशृङ्गश्च सप्तमः । विष्णुप्रसादादनघः पातालान्तरगोचरः । विरोचनसुतस्तेषां बलिरिन्द्रो भविष्यती"त्यादि । अत्र अमिताभा इत्युक्तं भागवते तु अमृतप्रभा इति ॥

४२८. प्रसिद्धेति ॥ तदा राज्ञोऽस्य राज्यसमये प्रसिद्धो वेगादिगुणैः प्रख्यातः यो गन्धर्वो घोटकः 'घोटकेपीति तुरगतुरङ्गाश्वतुरङ्गमाः । वाजिवाहार्वगन्धर्वहयसैन्धवसप्तय' इत्यमरः । तेन विहारे परिक्रमे सादरः आदरसहितः अश्वारोहनिपुण इत्यर्थः । रक्षतीति रक्षः पचाद्यच् अनुयायिनां अनुगतानां जनानां रक्षो रक्षकः अनुयायिनां रक्षा यस्मात्स इति वा कुलस्य निजवंशस्य दीपनः प्रकाशकः कर्तरि ल्युः कुलश्रेष्ठ इत्यर्थः प्रभुरीशिता प्रजायत इति प्रजा दुहिता तस्याः पतिः राज्ञोऽस्य विक्रमस्य जामातेत्यर्थः । प्रजापतिर्ब्रह्मराज्ञोर्जामातरि दिवाकरे । बन्धौ त्वष्टरि दक्षादा"विति हैमः । सः तथा प्रसिद्धो विद्याधरसिंहः क्षितौ भूमण्डले विद्याधरनाम विद्याधर इति स्वनामधेयं अर्थेन स्वाभिधेयेन सहितं सार्थकं स्वार्थे कप्रत्ययः तत् अन्वर्थमित्यर्थः प्रचारयामास धरतीति धरः पचाद्यच् । विद्यानां संस्कृताङ्गादिरूपाणां धर इति व्युत्पत्त्या स्वस्य विद्याधरनाम्ना सह विद्वत्तामपि जगति प्रख्यापयति स्मेत्यर्थः ॥

ब्रह्मपक्षे ॥ पूर्वत्र श्लोके देवर्षिविशेषानुक्त्वा देवसामान्यमपि यथाधिकारं स्थापितवानिति सूचयन्नाह प्रसिद्धेति ॥ तदा सावर्णमन्वन्तरे प्रभुर्जगतामीश्वरः स प्रजापतिर्ब्रह्मा क्षितौ पृथिव्यां प्रकर्षेण सिद्धानां गन्धर्वाणां च देवयोनिविशेषाणां विहारेषु परिक्रमणेषु विषये सादरः कृतादर इत्यर्थः । अनुयातुमनुगन्तुं शीलं येषां तेषां रक्षसां कुलस्य दीपनस्सन् सार्थकं स्वार्थैर्विद्याधरैः सहितं विद्याधर इति नाम प्रचारयामास विद्याधरान् प्रचरय्य तन्नामापि जगति प्रख्यापयामासेत्यर्थः तथा च विशिष्टदेवर्षिगणान् संस्थाप्य इतरान् सर्वानपि देवादीन् यथास्थानं यथाधिकारं नियोजयाञ्चकारेति तात्पर्यार्थः ॥

४२९. युतइति ॥ किञ्चेति चार्थः जयन्तः पाकशासनिः इन्द्रपुत्र इत्यर्थः सचासौ अमृतो देवश्च 'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते । अयाचिते च यज्ञे च ना धन्वन्तरिदेवयोरिति मेदिनी' तत्कल्पस्तत्तुल्यः ईषदसमाप्तौ कल्पप् यो नन्दनः पुत्रः सएव श्रीः सम्पत् तया जयन्ताख्यदेवप्रतिमपुत्रस-

४३० ववर्ष काले जलदो वसुन्धराऽऽचकर्ष चित्तं बहुसस्यबन्धुरा ।
प्रकर्षमाप्त्वा जनताधिकैर्धनैर्जहर्ष नित्यं पितृदेवतार्चनैः ॥

४३१. स इत्थमास्थाप्य समं यथास्थितं स्वकार्यजातं ग्रथयन् प्रसूनवत् ।
सुरक्षकान् ग्रन्थिवदास्थितान्स्वयं समीक्ष्य सूत्रप्रतिमस्थितोऽभवत् ॥

म्पत्त्या उपलक्षितयेत्यर्थः । अन्यत्र जयन्तस्तन्नामा पुत्रः अमृतं सुधा कल्पः कल्पवृक्षः नन्दनं इन्द्रोद्यानञ्च तद्रूपश्रियोपलक्षितया अतएव शच्या पुलोमजया समया समानया पद्मया तदाख्यया पद्मावतीनाम्ना व्यवहृतया स्वभार्ययेत्यर्थः । युतस्सहितः । इयं पद्मवती मणिदेवी आसन्नमृतस्य राज्ञो रामचन्द्रदेवस्य समानोदर्या सुष्ठु ध्यायतीति सुधीः ध्यायतेः सम्प्रसारणं चेति क्विप् सम्प्रसारणं च शोभना धीर्बुद्धिर्यस्य स तथोक्तो वा विद्वानित्यर्थः कलिता प्रकल्पिता प्रभावलिः प्रभावपटली यस्य येन वा स तथाभूतश्च सुरेन्द्रः तन्नामा राजपुत्रः सुरेन्द्रप्रतापसिंह इति प्रसिद्धः पुरोऽग्रतः 'स्यात्पुरः पुरतोऽग्रत' इत्यमरः । आदावेवेत्यर्थः । देशविशेषाणां जयपुरराष्ट्रान्तर्गतानां कियतां देशानां पालकः पालयिता अभूत् ॥

ब्रह्मपक्षे ॥ तदानीं बलिरिन्द्रत्वेन योजित इत्याह युत इति सुधीः विष्णुभक्तत्वात् कलिता प्रकर्षेण भाः प्रभा येन स कलितप्रभाः 'भासृ दीप्तावि'त्यस्माद्धातोः क्विप् 'भाः प्रभावे मयूखे चे'ति कोशात् तथाभूतो बलिः बलिनामासुरः । जयन्तश्चामृतञ्च कल्पश्च नन्दनं च तान्येव श्रीः सम्पत् तैः सहिता वा या श्रीः इन्द्रसम्पत् तया युतः पद्मा लक्ष्मीः 'लक्ष्मीः पद्मालया पद्मे'त्यमरः । तया समया समानया शच्या शचीदेव्या च युतः पुरोऽग्रभूतो यो देशविशेषः देशभेदः पूर्वदिग्रूप इत्यर्थः तस्य पालकः पूर्वदिक्पतिश्च सन् सुराणां सुरेषु वा मध्ये इन्द्रः अभूत् सावर्णमन्वन्तरे बलेरिन्द्रत्वे प्रमाणं प्रागुक्तम् ॥

सुवृष्ट्यादीनां धर्ममूलकत्वात् धर्मस्य च राजानुगतत्वात् राज्ञोऽस्य धार्मिकत्वं ध्वनयन्नाह ।

४३०. ववर्षेति ॥ जलदो मेघः काले उचितसमये एव ववर्ष ततश्च वसुन्धरा पृथिवी बहुभिः सस्यैः शाल्यादिभिः बन्धुरा उन्नतोन्नता रम्येति यावत् 'बन्धुरन्तून्नतानत'मित्यमरः तथा सती चित्तं मनः द्रष्टुरिति शेषः आचकर्ष आकृष्टवती सर्वसस्यसम्पन्नतया मनोहारिणी आसीदित्यर्थः ततश्च जनता जनसमूहः ग्रामजनबन्धुभ्यस्तलिति समूहार्थे तल् अधिकैः धनैः धान्यादिरूपैः हेतुभिः प्रकर्षमुत्कर्षमाप्त्वा नित्यं प्रतिदिनं पितृदेवतार्चनैः पितॄणां देवतानाञ्च पूजनैः क्रियाभिः जहर्ष हृष्टासीदित्यर्थः कारणमालालङ्कारः ब्रह्मपक्षेऽपि समानोऽर्थः किन्तु ब्रह्मणो निदेशात् देवा ऋषयः पितरो मनुष्याश्च यथा नियोगं धर्मकर्मादिना परस्परोपकारका अभूवन्निति तात्पर्यम् ॥

४३१. स इति ॥ स विक्रमदेवः इत्थं अनेनप्रकारेण समं सर्वं स्वकार्यजातं स्वकीयकार्यौघं "जातं जात्यौघजन्मसु" इति हैमः यथा स्थितं पूर्वस्थितिमनतिक्रम्य आस्थाप्य सर्वतोभावेन स्थापयित्वा प्रसूनेन तुल्यं प्रसूनवत् ग्रथयन् संयोजयन् ग्रन्थिवत् ग्रन्थिभिस्तुल्यं यथा तथा आस्थितान् संयोजितान् सुरक्षकान् उत्तमरक्षिपुरुषान् स्वयं समीक्ष्य सम्यगवलोक्य सूत्रं प्रतिमोपमा यस्य स सूत्रसदृश इत्यर्थः स्थितः अभवत् यथा विभिन्नानि कुसुमानि यथास्थानस्थित्या सङ्ग्रथ्य प्रत्येकग्रथितकुसुमगुम्फानां श्लथत्वाना-

४३२. यएव विख्यापितभूतभव्यभावयितृताऽभाव्यविभुत्ववैभवः ।
स्मृतो विधातव्य विधायको विधिप्रवर्तकश्चापि सबोध्यबोधकः ॥

४३३. क्वचिन्मृदुः क्वापि कठोरमूर्तिमान् लघुर्गरीयानपि कुत्रचिद्विभुः ।
सुवृत्तदुर्वृत्तसमासमेषु यो व्यवस्थितः क्वापि च तत्तदात्मना ॥

---

पत्तये तत्र तत्र सुदृढं ग्रन्थयस्स्थाप्यन्ते सूत्रं चानुस्यूततया वर्तते । तथा इतः पूर्वं रक्षकाभावात् भिन्नभिन्नं निखिलमपि लौकिकं स्वकीयं कार्यजातं यथास्थानं संयोज्य रक्षिवर्गानपि तद्रक्षणार्थं प्रत्येकत्र नियोज्य स्वयञ्च तत्कार्यकलापं पर्यालोकयन् अवर्ततेत्यर्थः ब्रह्मपक्षेऽपि समानमेतत् ब्रह्मापि सूत्रात्मतया सर्वत्र वर्तत इति श्रुतिस्मृतिप्रसिद्धम् ॥

४३२. य इति ॥ य एव विक्रमदेवः विख्यापितं सर्वत्र प्रकटीकृतं भूतानां सर्वेषामपि प्राणिनां यानि भव्यानि मङ्गलानि मङ्गलं शुभं भावुकं भविकं भव्यमित्यमरः । तेषां भावयितुर्भावः भावयितृता तया तच्चित्तकतया गुणेनेत्यर्थः अभाव्यं भावयितुमनर्हं भावयतेरर्हार्थे यत् अचिन्त्यमित्यर्थः विभुत्वं वैभवं प्रभुतातिशयो येन स तथोक्तः अत्र विभवस्य भावो वैभवमिति भावे अणिकृते विभुत्वस्य वैभवमैश्वर्यातिशयोऽर्थः । विभव एव वैभवमिति स्वार्थेऽणिकृते विभुत्वरूपं यत् वैभवं सम्पदिति समर्थनीयं स एव विक्रमः विधातव्यानां कर्तव्यानामेव कर्मणामित्यर्थः विधायकः कारकः नत्वकर्तव्यानां निषिद्धानामिति भावः विधीनां शास्त्रोक्तविधानानां प्रवर्तकः प्रचारयिता च तथा बोध्यानां बोधयोग्यानां बोधकः यस्तु यद्बोधितुं योग्यः यत्तु यस्य बोधयितुं योग्यं तद्बोधयिता चापि स्मृतः कथित आसीदित्यर्थः ॥

ब्रह्मपक्षे ॥ पूर्वत्र श्लोके सूत्रात्मतया स्थित इत्युक्तं । तदेव विशदीक्रियते यएव ब्रह्मा विख्यापितं श्रुतिस्मृत्यादिषु प्रकटीकृतं यच्च भूतमतीतं नित्यसिद्धं वस्तु भव्यं भवनार्हं भाविसाध्यरूपमित्यर्थः । भव्यगेयेत्यादिना यत् । यश्च भावयतीति भावयिता भवनस्य निष्पादयिता तेषां भावस्तत्ता तया हेतुना अभाव्यमचिन्तनीयं विभुत्ववैभवं व्यापकत्वरूपमैश्वर्यं येन यस्य वा स तथोक्तः स च ब्रह्माविधातव्यं चासौ विधायकश्च कर्तव्ययागादिकर्मरूपः यजमानादिकारकरूपश्चेत्यर्थः । विधेः यज्ञादिक्रियायाः प्रवर्तकः कारयिता च विधिश्चासौ प्रवर्तकश्चेति तदुभयरूपो वा तथा बोध्यं ज्ञेयरूपश्चासौ बोधको ज्ञाता ज्ञापयिता च तदुभयरूपोऽपि स्मृतः 'पुरुषएवेदं सर्वं यद्भूतं यच्च भव्य'मित्यादयश्श्रुतयोऽत्रानुसन्धेयाः ॥

४३३. क्वचिदिति ॥ यः विभुः प्रभुर्विक्रमः सुवृत्ताः शोभनचरित्रास्सज्जनाः दुर्वृत्ता दुष्टचरित्रा दुर्जनाः समाः समदर्शिन उदासीनाः असमा अनन्यसाधारणाः विद्वत्तादिना आत्मश्लाघानिरताश्च तेषु मध्ये इत्यर्थः । निर्धारणे सप्तमी क्वचित् सुवृत्तेषु मृदुः अतीक्ष्णस्वभावः कोमलात्मा वा 'मृदूचातीक्ष्णकोमला' वित्यमरः । क्वापि दुर्वृत्तेष्वित्यर्थः कठोरा निष्ठुरा मूर्तिश्शरीरमस्यास्तीति कठोरमूर्तिमान् अतिकठिनात्मा मतुपा काठिन्यातिशयो व्यज्यते यद्वा मूर्तिमच्छब्दोऽपि कठोरपर्यायः 'कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढं । जरठं मूर्तिमन्मूर्त' मित्यमरः । कठोराणामपि मूर्तिमान् कठोरः कठोरतम इत्यर्थः

४३४. सुसंस्कृतप्राकृततत्वदार्शिनं स्थितं ह्युदासीनतया गुणास्तृतौ ।
असक्तमाहुर्विषयेषु केवलं विवेकिनं यं पुरुषं विपश्चितः ॥

क्वचिदपि समेषु लघुरल्पः तद्गौरवोद्घाटनपुरस्सरमात्मलाघवप्रकाशक इत्यर्थः कुत्रचिदसमेषु मध्ये इत्यर्थः अतिशयेन गुरुर्गरीयान् असमानामस्य चोभयोर्मध्येऽसौ श्रेष्ठतर इत्यर्थः 'गुरुस्तु गीष्पतौ श्रेष्ठे' इति कोशान्तरं "द्विवचनविभज्योपपदेतरवीयसुनौ" इत्यसुन् प्रियस्थिरेत्यादिना गरादेशश्च क्वापि च तत्तदात्मना तत्तत्स्वभावेन व्यवस्थितः सुवृत्तेषु सुवृत्तः दुर्वृत्तेषु दुर्वृत्तः इत्यादिरूपेण विभिद्यावस्थित इत्यर्थः सुवृत्तत्वादितारतम्येन अवस्थानतारतम्यमिति भावः 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनी'ति वैजयन्ती ॥

ब्रह्मपक्षे ॥ विभुर्व्यापकात्मा यः ब्रह्मा क्वचित् देशे काले वा मृदुः कोमलात्मा नवनीताद्यपेक्षयापीत्यर्थः क्वापि कठोरमूर्तिमान् अत्यन्तकठिनात्मा वज्रादप्यधिक इत्यर्थः क्वचित् लघुः इषीकातूलाणुवदुत्पतनयोग्यः कुत्रचिदपि गरीयान् मेरोरपेक्षया दुर्भरतरः आकाशापेक्षया महत्तरोवा 'गुरुस्त्रिलिङ्ग्यां महति दुर्जरा लघुनोरपी'ति मेदिनी । क्वचिच्च सुवृत्तदुर्वृत्तसमासमेषु सत्वादिगुणप्रधानदेवासुरमनुष्यपशुपक्ष्यादिरूपेषु प्राणिषु वर्तुलावर्तुलसमविषमरूपेषु नगनगरसमुद्रसरिदादिरूपेषु अप्राणिषु चेत्यर्थः तत्तदात्मना तत्तत्स्वरूपेण व्यवस्थितः विविधं व्याप्यावस्थित इत्यर्थः 'सर्वं खल्विदं ब्रह्म' 'अणोरणीयान् महतो महीया'नित्यादि श्रुतिरत्र प्रमाणम् ॥

४३४. सुसंस्कृतमिति ॥ विपश्चितो विद्वांसः 'विद्वान् विपश्चि'दित्यमरः यं विक्रमदेवं संस्कृतं संस्कृतभाषारूपं प्रकृतौ भवं प्रकृत्या आगतं वा प्राकृतं तत्र भवमिति ततआगतमिति वा अण् सर्वासामपि भाषाणां संस्कृतप्रकृतिकत्वात् संस्कृतभिन्नं भाषामात्रं प्राकृतशब्देनोच्यते । तत्र शास्त्रीयाणां भाषाणां अष्टादशभेदाः प्राकृतलङ्केश्वरव्याकरणे प्रसिद्धाः । तासां लक्षणोदाहरणानि तज्जिज्ञासुभिस्तत्रैव द्रष्टव्यानि कासांचिद्भाषाणां विभागोऽपि साहित्यदर्पणे षष्ठे परिच्छेदे द्रष्टव्यः सुष्ठु संस्कृतप्राकृतयोः भाषाभेदयोः तत्वं याथातथ्यं पश्यतीति सुसंस्कृतप्राकृततत्त्वदर्शी तं एतेन शास्त्रे बोद्धृत्वमुक्तं गुणानां स्वकीयदाक्षिण्यादीनां आस्तृतौ विस्तृतौ सत्यां तद्विषये वा निजस्तुतिकथायामित्यर्थः उदासीनतया स्थितं उपेक्षकवत् स्थितमित्यर्थः हीत्यवधारणे इत्थं भावेतृतीया एतेन परगुणे रागित्वं व्यज्यते विषयेषु भोग्येषु पदार्थेषु केवलं स्वयमेकत्वेन असक्तमासक्तिरहितं केवलग्रहणात् परिजनैस्सह भोगित्वं व्यज्यते निर्णीते केवलमिति 'त्रिलिङ्ग्यां त्वेककृत्स्नयो'रित्यमरः विवेकः सदसद्विचारोऽस्यास्तीति विवेकी तं तेन च पात्रे त्यागित्वं क्षत्रियत्वाद्रणे योद्धृत्वं च व्यज्यते अतएव पुरुषं पञ्चविधपुरुषलक्षणोपेतं आहुः ब्रुवन्ति ब्रुवः पञ्चानामादित आहो ब्रुव इति झेरुस् ब्रुवश्चाहादेशो वैकल्पिकः पुरुषलक्षणमुक्तं वृद्धैः 'पात्रे त्यागी गुणे रागी भोगी परिजनैस्सह । शास्त्रे वोद्धारणे योद्धा पुरुषः पञ्चलक्षणः' इति ॥

ब्रह्मपक्षे ॥ विपश्चितः साङ्ख्यादिशास्त्रतत्वज्ञाः यं ब्रह्माणं सुसंस्कृतं विशुद्धसत्वप्रधानं यत् प्राकृततत्वं प्रकृतिरेव प्राकृतं स्वार्थेऽण् प्रकृत्यात्मकं तत्वं तत्पश्यतीति तथा तं सत्वमुद्रेकात् समुत्पन्नविवेकज्ञानेन हि धर्माधर्मादिसप्तरूपविनिवृत्ता प्रकृतिः पुरुषेण साक्षात्क्रियते उक्तञ्च साङ्ख्यसप्तत्यां

४३५. यथाश्रुतं कर्म समस्तमात्मनः स्वबुद्धिपूर्वं विद्धानमेव यम् ।
परोपकारैकपरप्रवृत्तिसद्गुणं प्रधानं समुदीरयन्ति च ॥
४३६. दिगीशवृन्दस्य कलाभिरस्य यत्प्रपालनार्थं खलु मूर्तिकल्पनम् ।
ततश्च तस्याखिलदैवतात्मनस्समस्तकार्येषु विशिष्यते स्थितिः ॥

"तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्तां । प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितस्स्वच्छ" इति तेन विवेकज्ञानेनेत्यर्थः गुणास्तृतां गुणानां सत्वरजस्तमसां आस्तृतौ विस्तृतिरूपप्रपञ्चे उदासीनतया मध्यस्थतया स्थितं हि स्वसन्निधानात् प्रकृतिकर्तृके प्रपञ्चे केवलं कूटस्थसाक्षिस्वरूपमित्यर्थः । उक्तञ्च तत्रैव "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गं । गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीन" इति विषयेषु शब्दादिषु केवलं कार्त्स्न्येन असक्तमनासक्तं सीकरनिर्लिप्ततामरसपलाशवत् कर्तृत्वभोक्तृत्वनिर्लिप्तमित्यर्थः विवेकः प्रकृतेः पृथगात्मता सोऽस्यास्तीति विवेकी तं "विवेकः पृथगात्मते"त्यमरः । तथाभूतं पुरुषं पुरेशेत इति पुरुषः पृषोदरादित्वात्साधुः तं आहुः "पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः । शेते जीवेन रूपेण पुरेषु पुरुषोह्यसौ" ॥ इति भागवते ॥ स्क ७ अ १४ श्लो ३७ ॥

४३५. यथाश्रुतमिति ॥ किञ्चेति चार्थः यं विक्रमदेवं श्रुतं शास्त्रमनतिक्रम्य यथा श्रुतं मन्वादिधर्मशास्त्रमनुसृत्येत्यर्थः आत्मनः स्वस्य समस्तं लौकिकं वैदिकं च कर्म स्वबुद्धिपूर्वं निजबुद्धिपुरस्सरमेव विदधानं कुर्वाणं अन्यैः शास्त्रज्ञैः उपदिष्टमपि स्वमत्या शास्त्रतत्वं विविच्यैव निखिलं कर्म विदधानं न तु परोपदिष्टमात्रमिति भावः । परेषां जनानां उपकारएव एकमद्वितीयं प्रधानं यासु ताः तथाभूताः प्रवृत्तयः प्रवर्तनानि यस्य सचासौ सन्तस्साधवो गुणादयः दाक्षिण्यादयो यस्य स च तं अतएव प्रधानं पुरुषेषु श्रेष्ठमित्यर्थः । समुदीरयन्ति सम्यक्कथयन्ति विपश्चित इति पूर्वत्रानुसन्धेयं चकारेण ॥

ब्रह्मपक्षे ॥ पूर्वश्लोके ब्रह्मणः पुरुषात्मकत्वं प्रतिपाद्य इदानीं प्रकृत्यात्मकत्वमपीति पुरुषप्रकृत्योरभेदविवक्षया सः प्रस्तूयते यं ब्रह्माणं 'प्रधानं प्रकृतिं च समुदीरयन्ति विपश्चित' इत्यन्वयः 'प्रधानं प्रकृतिः स्त्रिया'मित्यमरः किम्भूतं प्रधानं ? तदेव विशिनष्टि—यथेत्यादि यथा येन प्रकारेण श्रुतं श्रुतौप्रतिपादितं तथेत्यर्थः आत्मनः स्वस्य स्वस्माद्वा समस्तं कर्मप्रपञ्चरूपं स्वा स्वकीया स्वोत्पन्नेत्यर्थः या बुद्धिर्महत्तत्वं सैव पूर्वं प्रथमं यस्य तत् तथाभूतं विदधानं महदादिक्रमेण सृष्टिं कुर्वाणमित्यर्थः । उक्तञ्च सप्तत्यां "प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः । तस्मादपि षोडशकात्पञ्चभ्यः पञ्चभूतानी"त्यादि । परस्य स्वेतरस्य पुरुषस्येत्यर्थः उपकारो भोगापवर्गरूपेष्टसम्पादनं स एवैकं परं प्रधानप्रयोजनं यस्यास्तथाभूता प्रवृत्तिर्यस्य तत् सन्तो विद्यमाना गुणाः सत्वरजस्तमांसि यस्य तच्च कर्मधारयः "सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च स" दित्यमरः । तत्तथाभूतं समुदीरयन्तीत्यर्थः उक्तञ्च सप्तत्यां "नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः । गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरती"ति 'त्वामामनन्तिप्रकृतिं पुरुषार्थप्रवर्तिनो'मिति कालिदासः ॥

४३६. दिगिति ॥ अस्य राज्ञो विक्रमस्य यत् यस्मात्कारणात् दिशामीशादिगीशाः तेषां वृन्दस्य समूहस्य कलाभिरंशैः मूर्तिकल्पनं शरीरघटनाप्रपालनार्थं प्रकर्षेण पालनमेवार्थः प्रयोजनं यस्य तत्तादृशं खल्विति वाक्यालङ्कारे माने वा मन्वादिभिः प्रमाणितमित्यर्थः । 'खलु स्याद्वाक्यभूषायां जिज्ञासायां च

४३७. अनन्तगोभूतिविसारकल्पितप्रभूततेजोबलविक्रमोदयः ।
चिरं विदध्यादिह लोकपालकः स्थितिं सवंशस्थसमुज्ज्वलश्रियः ॥

सान्त्वने । वीप्सामानिषेधेषु पूरणे पदवाक्ययो"रिति मेदिनी । ततश्च हेतोः अखिलदैवतात्मनः सकलदेवस्वरूपस्य सर्वदेवमयो हि स इति मनूक्तेश्चेति भावः । तस्य राज्ञः समस्तकार्येषु । "प्रजानां रक्षणं दानमिज्याध्ययनमेव च । विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासत" इत्याद्युक्तरूपेषु निखिलराजकृत्येषु मध्ये इत्यर्थः । स्थितिः संस्था केवलं निर्णीतत्वेन विशिष्यते अतिशय्यते स्थित्यर्थत्वात्पालनस्येति भावः उक्तञ्च मनुना । "रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः । इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च । चन्द्रवित्तेशयोश्चैव मात्रानिर्हृत्य शाश्वतीः ॥ यस्मादेषां सुरेन्द्राणां मात्राभिर्निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा" इति ॥

ब्रह्मपक्षे ॥ प्रजापालनार्थं दुष्टनिग्रहसाधुपालनादिना सृष्टस्य जगतो रक्षार्थं अस्य ब्रह्मणः कलाभिरंशैः दिगीशवृन्दस्य इन्द्रादेः मूर्तिकल्पनं यत् ततश्चाखिलदैवतात्मनः एष उह्येव सर्वे देवाः 'स ब्रह्म सशिवस्सहरिस्सेन्द्रः तदेवाग्निस्तदादित्यस्तद्वायुस्तदुचन्द्रमाः ।' इत्यादि श्रुतिभ्यः इन्द्रादीनामपि देवानां ब्रह्मांशत्वप्रतिपादनात्तेषां लोकपालत्वाच्चेति भावः ॥ तस्य ब्रह्मणः समस्तकार्येषु सृष्टिस्थितिप्रलयरूपेषु मध्ये स्थितिः केवलं विशिष्यते इति ॥

४३७. पूर्वत्र श्लोके अखिलदेवतात्मनस्तस्य समस्तकार्येषु स्थितिर्विशिष्यत इत्युक्तं इदानीं स्वाभिमतस्थितिविधानाशंसनमुखेन वंशस्थ ग्रन्थस्य समाप्तिं द्योतयित्वा राज्ञा सह ब्रह्मादयो देवाः प्रस्तूयन्ते अनन्तेत्यादिना ॥

तत्रादौ राजपक्षे ॥ लोकानां जनानां पालकः पालयिता स प्रसिद्धः ॥ अनन्ता विपुला या गौर्भूमिः तस्यां भूतिस्सम्पत्तिः तद्रूपा वा भूतिः तस्याः विशेषेण सरणं सारः भावे घञ् तेन तत्प्राप्त्येत्यर्थः ॥ विशिष्टस्थिरांशेन वा 'सारो बले स्थिरांशे च 'त्यमरः ॥ कल्पितं सम्पादितं प्रभूतं प्रचुरं तेजोबलं प्रभावशक्तिर्यस्य तस्य विक्रमस्य तन्नाम्नो राज्ञः उदयोऽभ्युन्नतिः धर्मधर्मिणोरभेदोपचारात् धर्मप्राधान्यविवक्षया निर्देशः उदयविशिष्टविक्रम इत्यर्थः ॥ उदयशब्दः पूर्वपर्वते रूढोऽपि प्रादुर्भाव प्रकाशोन्नत्योरुत्पत्तिदर्शनादिरूपार्थेषु प्रयुज्यते कविभिः । इह पृथिव्यां चिरं चिरकालपर्यन्तं वंशस्था निजसूर्यवंशप्रतिष्ठिता समुज्ज्वला विशदा च या श्रीः राजलक्ष्मीस्तस्याः स्थितिं अविच्छिन्नसन्तत्यावस्थानं विदध्यात् विदधातु अथ च वंशस्थैर्वंशस्थवृत्तैः समुज्ज्वलस्य अमुष्य ग्रन्थस्येत्यर्थः ॥ श्रियः शोभायाः स्थितिं विदध्यात् मुद्रापनादिभिश्चिरं प्रतिष्ठापयत्वित्यर्थः ॥ "गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्यार्द्दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदग्बाणलोमसु" इति केशवः ॥

अयमेव लोकपालको राजा प्रकारान्तरेण व्याख्यायते स किम्भूतः? अनन्तः केशवः श्रीकृष्णः 'अनन्तः केशवे शेषे पुमाननवधौ त्रि'ष्विति मेदिनी । गौश्चन्द्रः गम्यते पुण्यवद्भिरस्मिन्निति अधिकरणे डोः प्रत्ययेन व्युत्पादितोऽपि गोशब्दश्चन्द्रवाचक इति विश्वः एताभ्यां शब्दाभ्यां लक्षितलक्षणया कृष्णचन्द्रनामा लभ्यते यत्र शक्यपरम्परारूपा लक्षणा सा लक्षितलक्षणेत्युच्यते यथा द्विरेफपदस्य शक्यरेफद्वयघटितभ्रमरपदद्वारा तदर्थे मधुकरे वृत्तिस्तद्वदिहापि बोध्यं तस्माद्भूतिरुत्पत्तिर्यस्य सः कृष्णचन्द्र-

देवाज्जात इत्यर्थः । इत्येकं विशेषणं विशिष्टस्सारो विसारः तेन सर्वातिरिक्तबलेन कल्पितो युक्त इत्यपरं विशेषणं प्रभूतानां सर्वेषामपि प्राणिनां तेजसा अवलुनातीत्यवलविरभिभावी यथेः इति तृतीयं विशेषणं अवपूर्वात् लूञ् छेदने इत्यस्माद्धातोः अच इरित्यौणादिक इः अवोपसर्गस्य असाकल्यार्थतया अवल-विरिवावलविरित्यर्थकल्पनया वा अभिभावित्वरूपार्थो बोध्यः 'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसे'ति वचनात् राज्ञः सर्वभूताभिभावित्वं बोध्यं क्रमेण कालक्रमेण उदयऔन्नत्यं यस्य स इति चतुर्थं विशेषणं अनेन विशेषणत्रयेण "सर्वातिरिक्तसारेण सर्वते-जोभिभाविना । स्थितस्सर्वोन्नतेनेति कालिदासोक्तेः समानार्थता बोध्या अत्र चतुर्णामपि विशेषणानां पूर्वंपूर्वं प्रति उत्तरोत्तरस्य विशेष्यत्वविवक्षया विशेष्यविशेषणसमासः विशेषणं विशेष्येण बहुलमिति बहुलग्रहणात् कुब्ज, खञ्ज, पाचक, पाठक इत्यादाविव बोध्यं एवमुत्तरत्रापि उक्तरूपः सोयं लोकपालकः इह वंशस्थसमुज्ज्वलश्रियः स्थितिं चिरं विदध्यादिति पूर्ववत् ॥ २ ॥

अथास्य जन्मकालीनवैक्रमशकं पुनर्व्याख्यानान्तरेण प्रदर्श्यते अत्र शकाङ्का नयने वररुचिसङ्केतो ग्राह्यः स च वृद्धैरुक्तो यथा 'कटपयवर्गभवैरिहपिण्डान्त्यैरङ्का ज्ञेयाः । नञि च शून्यं ज्ञेयं तथास्वरे केवलं कथितं' इति अत्र कादयो नव टादयो नव पादयः पञ्चयादयोऽष्टौ इति पिण्डान्त्यवर्णसङ्ख्यया अङ्कसञ्ज्ञाह्यः तथा च स लोकपालको राजा किम्भूतः? नास्ति अन्तस्स्वरूपं निश्चयो वा येषां सङ्ख्यानां ते तथोक्ताः अङ्कानां वा मतो गतिरिति नियमरहिताः क्रमविन्यस्ता इत्यर्थः । 'अन्तस्स्वरूपे निकटे प्रान्ते निश्चय-नाशयोः । अवयवेऽपी'ति हैमः । तथा गोर्नवसङ्ख्याएव भूः स्थानं येषां ते तथोक्ताश्च एकादिनवाङ्कानां मध्ये एकैका अवशिष्टा अङ्का ग्राह्या अन्ये नवभिस्तष्टाः कार्या इत्यर्थः गोशब्दस्य नवसङ्ख्या बोधकत्वे च गोऽभ्रयश्शनिमन्दस्येत्यादि प्रयोगाः सूर्यसिद्धान्तादौ प्रसिद्धाः यद्वा अनो नकाररहितः न्तः तकारः तेन उक्तसङ्केतात् तकारेण षट्सङ्ख्या गोपदेन त्रिसङ्ख्या उभयोर्योगे क्रमेण व्युत्क्रमेण वा समुदाये नवभिस्तष्टे च नवसङ्ख्या लभ्यन्ते तन्मध्यएव भूः स्थानं येषां ते तथाभूता इति उक्तवदर्थः एतत्पक्षे उच्यमानसङ्ख्याङ्कानां व्युत्क्रमविन्यासे विक्रमशकस्यासम्भवात् क्रमविन्यासो बोध्यः अनन्तगोभुवो येति वयश्च साराश्च कल्पिताश्च प्रभूततेजोबलाश्च तेषां समाहारेण सङ्ख्या समुदायेनोपलक्षितो यो विक्रमः कालज्ञापकविक्रमशकः विक्रमशब्दोऽत्र विक्रमादित्यस्य राज्ञो गताब्दकालबोधकः तथा व्यवहा-रदर्शनात् एवं शकशब्दोऽपि यद्यपि शकशब्दः शालिवाहनशके रूढः तथापि विक्रमशकः हूणशकः आङ्ग्लशक इत्यादिरूपेणापि सामान्येन गताब्दकालज्ञापकतयैव प्रयुज्यते सांवत्सरैरित्यवगन्तव्यं तस्मिन् षट् द्विनवैकमिते विक्रमाब्दे उदयउत्पत्तिर्यस्य स तथोक्तः अन्यत्पूर्ववत् अत्र (ति. वि.) पदात् तकारेण षट्सङ्ख्या अन्तस्थवकारेण चतुस्सङ्ख्या पुञ्जिते तदुभये नवविभिस्तष्टे (१) एकश्शिष्यते एवं सारपदात् (९) नव कल्पितपदात् (२) द्विः प्रभूततेजोबलपदात् (६) षट् एतेषां क्रमेण पङ्क्तौ षड्विंशत्यधिकनवशतोत्तरसहस्रपरिमितः । (१९२६) विक्रमस्थितिकालप्रभृति गताब्दा एतस्य जन्मसमये आसन्निति बोध्यम् ॥ ३ ॥

अथाङ्कमानेनास्य राज्याभिषेकसमयो व्याख्यायते । पुनस्सलोकपालकः किम्भूतः? नान्तः प्रान्तो-ऽनन्तः अङ्कानां मध्ये आदिरित्यर्थः तेन (१) एकोऽङ्कः गोपदेन पूर्वोक्ताक्षरसङ्केतात् (३) त्रिः भुवः पृथिव्याः ऊतयो भागाः भूखण्डाः तेन (९) नव 'नवखण्डा च मेदिनी'त्युक्तेः नवाङ्कद्वारभूखण्डकतुरा-

वरणमस्तका इत्यादि कविकल्पलता च ऊतिरिति अव रक्षण गतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवण-स्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु इति भागार्थकादवतेः क्तिन् ज्वरत्वरे-त्यादिना झला दावुपधावकारयोरूठ् विपरीतौ साकाररकारौ यस्मिन् वाचकशब्दे स विसारो रसा पृथिवीत्यर्थः तेन (१) एकः पृथिवीपर्यायाणामेकसङ्ख्याबोधकत्वं गणितशास्त्रप्रसिद्धं एतैरङ्कानां वामतो गतिरिति एकत्रिंशदधिकनवशतोत्तरसहस्रपरिमिताः सङ्ख्या लभ्यन्ते तैः कल्पितः कल्पनया निरूपितो हूणशकइत्यर्थः। कल्पितस्य बौद्धत्वात् हूणादिपदोल्लेखाभावेऽपि अध्याहारेण तद्बोधः प्रकर्षेण भुवा पृथिव्या सह ऊतमालिङ्गितं अवतेः क्तः उक्तवत्प्रक्रिया यत् तेजः कोशदण्डोत्थं बलं चतुरङ्ग-सैन्यञ्च ताभ्यां सह विक्रीडत इति विक्रा विहारिणी क्रीड् विहारे इति धातोरन्यत्रापि दृश्यत इति डः तथाभूता या मा लक्ष्मीः 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया। इन्दिरा लोकमाता' मेत्यादि कोशात्। जयपुरीयराजलक्ष्मीरित्यर्थः तया तस्या वा उदयोऽभ्युन्नतिर्यस्य सः तथाभूतः एकत्रिंशदुत्तरैकोनविंशतिशततमे क्रिष्टाब्देऽस्य राज्याभिषेको जातइति फलितोऽर्थः अन्यत्सर्वं पूर्ववत् ॥ ४॥

अथ स लोकपालको राजा पुनः किम्भूतः अनन्तासु निखिलास्वपि गोषु दिक्षु भूतेरैश्वर्यस्य विशेषेण सरणं सारः प्रख्यातिः कीर्तिरिति यावत्। तेन कल्पितं सहितं यत् प्रभूतं तेजः प्रतापः तेन कीर्तिप्रतापाभ्यामित्यर्थः अबलौ दुर्बलौ पराजितावित्यर्थः वीनां पक्षिणां क्रमो गतिर्यस्मिन् तदाकाशं पक्षिणां खगादिपदवाच्यत्वात् तस्मिन्नुदयोऽभ्युदयो ययोस्तौ चन्द्रसूर्यौ यस्य स तथोक्तः अन्य-त्पूर्ववत् ॥ ५॥

2. इतः पूर्वं राज्ञा सह श्लेषेण ब्रह्मणो वर्णितत्वात् पूर्वत्र श्लोकेऽखिलदेवतात्मकत्वकथनाच्च अत्र सर्वप्राधान्यादादौ ब्रह्मविष्णीशाः प्रस्तूयन्ते॥ तत्रादौ ब्रह्मपक्षे स प्रसिद्धो लोकपालको ब्रह्मा प्रजापतित्वात् लोकपालश्चासौ कश्चेति वा को ब्रह्मणीति कोशात् इह वंशे एतत्प्रबन्धवर्णिते वंशे तिष्ठतीति वंशस्थः तस्य राज्ञोऽस्य विक्रमस्येत्यर्थः॥ समुज्ज्वला सम्यक् विकासिनी या श्रीः राजलक्ष्मीः वंशस्थवृत्तप्रकाशित-काव्यलक्ष्मीश्च तस्याः स्थितिं प्रतिष्ठां चिरं चिराय विदध्यात् सम्पादयतु एवमुत्तरत्रापि सर्वत्र समर्थनीयं सब्रह्मा कीदृशः? अनन्ता अपरिमिता गोभूतिः वर्णपदवाक्यादिरूपा वाक्सम्पत्तिर्यस्मिन् स अनन्तगोभूति-र्वेदः वेदस्य शब्दमयत्वात् तस्य विसारात् प्रसारात् वेदविस्तारादवगत्येत्यर्थः॥ ल्यबर्थे पञ्चमी। यद्वा तस्माद्वेदात् विसारैर्विभिन्नस्थिरांशैः सत्कार्यवादिमते कारणात्मना सूक्ष्मरूपेण स्थितैरित्यर्थः॥ सूक्ष्मात् स्थूलोत्पत्ति श्रुतेश्चेति भावः। कल्पितानां समुत्पादितानां प्रभूतानां महाभूतानां आकाशादीनां प्राणिनां वा तेजोवीर्यं बलं शारीरं रूपं वा बलं गन्धरसे रूपे इत्यादिकोशात् विक्रम उत्साहश्च तेषां तदुपलक्षितानां नाम कर्मणां च उदयउत्पत्तिर्येन यस्माद्वा स तथोक्तः तथा च महदादिसृष्टिमुपक्रम्य मनुः 'सर्वेषान्तु स नामानि कर्माणि च पृथक्पृथक्। वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे' इति॥ ६॥

ब्रह्मैव प्रकारान्तरेण समर्थ्यते अनन्तानां गवां वेदवचनानां भूतिरुत्पत्तिर्यस्मात् भूतिस्थितिर्वा यस्मिन् सः अथवा अनन्ता गोः वाग्देव्याः सरस्वत्याः भूतिरैश्वर्यं यस्मात्सः विस मृणालमृच्छति इयर्तीति वा विसारं पद्मं विसप्रसूनत्वात् ऋगतौ प्रापणे चेत्यस्मात् भौवादिकात् श्लु विकरणाद्वा कर्मण्यण् पचाद्यचि

वाशेषषष्ट्या समासः तत्र कल्पितस्थितश्च तस्माद्वा कल्पितो जातः कमलासनत्वात् पद्मयोनित्वाच्च विषु पक्षिषु मध्ये सारः श्रेष्ठः तस्मिन् पक्षिश्रेष्ठे हंसे इत्यर्थः ॥ कल्पित इति वा हंसवाहनत्वात् प्रकृष्टो भूतः प्राणी प्रभूतः ब्रह्माण्डरूपो विराडित्यर्थः ॥ तेजो रेतः 'शुक्रं तेजो रेतसीचे'त्यमरः ॥ अप् शब्दो जलवाचकः अलमत्यर्थविक्रमोऽलविक्रमः पृषोदरादित्वात्साधुः यद्वा अलति पर्याप्नोतीत्यलः पचाद्यच् सचासौ विक्रमश्चेति सएवार्थः ॥ विक्रमः सङ्क्रमः सम्मेळनमित्यनर्थान्तरं 'विक्रमस्तु पुमान्क्रान्तिमात्रेस्याच्छक्तिसम्पदी'ति मेदिनी । उदयउत्पत्तिः तथा च प्रभूतस्य विराट्पुरुषस्य तेजोबलविक्रमेण ब्रह्मरेतसोऽद्भिरप्सु वा अत्यन्तसम्मेळनेन हेतुना उदयउत्पत्तिर्यस्मात्स तथोक्तश्च बहुपदो बहुव्रीहिर्लाघवात् तेजो बलविक्रमेण उदय इति तृतीया तत्पुरुषानन्तरं प्रभूतस्य तथाविध उदयो यस्मादिति समासद्वयाश्रयणेप्यविशेषात् उभयत्रापि व्यधिकरणबहुव्रीहिं विना गत्यन्तरासम्भवात् । यद्ब्रह्मणो बीजस्य जलेषु अत्यन्तसङ्क्रमात् ब्रह्माण्डरूपो विराट्पुरुषः समुत्पन्न इति तदर्थः ॥ 'अपएव ससर्जादौ तासु बीजमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभ'मिति मनुः । अनन्तगोभूतिश्चासौ विसारकल्पितश्चासौ प्रभूततेजोबलविक्रमोदयश्चेति त्रयाणामपि विशेषणानां विशेष्यविशेषणसमासः प्रमाणंतूक्तम् ॥ ७ ॥

3. विष्णुपक्षे ॥ 'एकांशेन स्थितो विष्णुः करोति परिपालनं । मन्वादिरूपी चान्येन कालरूपी परेण च । सर्वभूतेषु चान्येन संस्थितिं कुरुते स्थितः । सत्वं गुणमुपाश्रित्य जगतः पुरुषोत्तम' इति विष्णुपुराणादौ विष्णोः पालकत्वं सुप्रसिद्धमेव उक्तरूपएवात्र विष्णुः प्रस्तूयते ॥ सलोकपालको विष्णुः कीदृशः ? अनन्तगः अनन्तमाकाशं गच्छति स्वशरीरत्वेन प्राप्नोतीति तथा 'आकाशशरीरं ब्रह्मे'ति श्रुतेः आकाशवन्निरवच्छिन्नसर्वव्यापिस्वरूप इत्यर्थः ॥ स तथाभूतोऽपि भुवः पृथिव्याः ऊतिरवनं रक्षणमित्यर्थः ॥ अवरक्षणादावित्यस्मात् क्तिन् तस्यै भुवो रक्षणाय विसरणं विसारः विभिन्नगतिरूपा क्रिया विसारैः सूर्यस्पन्दादिरूपक्रियाभिः कल्पितो विसारकल्पितः कालः परिस्पन्दादिरूपोपाधिना हि क्षणलवमुहूर्तयामाहोरात्रादिभेदेन कालोऽवधार्यते अतीतानागतवर्तमानघटादीनां सूर्यस्पन्दसम्बन्धो नसंयोगसमवायादिरिति कालएव सम्बन्धघटकः कल्प्यते अतएव कालिकसम्बन्धेन जगदाधारो महाकाल इत्याद्यन्यत्र विस्तरः एतेन कालरूपत्वमभिहितं प्रभूतः सर्वभूतात्मरूपश्च एतेन सर्वभूतेषु स्थितत्वमुक्तं । तेजः प्रभावः क्षात्रं तेज इति यावत् 'तेजः प्रभावे दीप्तौ चेति । सप्रतापः प्रभावश्च यत्तेजः कोशदण्डज'मिति चामरः ॥ तदेव बलं सामर्थ्यं यस्य स तेजोबलो मन्वादिरूपो राजा एतेन मन्वादिरूपत्वं सूचितं क्रमणं क्रमस्सञ्चारः क्रामत्यनेनेति वा क्रमो यानं विः पक्षी गरुडः विनावीविरेव वा क्रमो यस्य स विक्रमः गरुडसञ्चारी विष्णुरित्यर्थः ॥ एतेनांशावतारः प्रतिपादितः भूत्यै विसारकल्पितश्च प्रभूतश्च तेजोबलश्च विक्रमश्च तैश्चतुर्भिर्मूर्तिभेदैरुदयः प्रकाशो यस्य स चतुर्धामूर्तिरित्यर्थः ॥ ८ ॥

अथोक्तमेव भेदचतुष्टयं पृथक् व्याख्यायते तत्र लोकपालको विष्ण्वंशः कीदृशः ? अनन्तगः शेषगः शेषशायी हि भगवानित्युक्तेः भुवः भूदेव्याः ऊतिः रक्षणं प्रीणनं वा यस्मात् स भूतिः वराहाद्यवतार इत्यर्थः ॥ श्रीधराश्लिष्टपार्श्वमित्याद्युक्तेश्च विसारः पक्षिश्रेष्ठो गरुडः खगेश्वरत्वात् तस्मिन् कल्पितः गरुडवाहन इत्यर्थः ॥ प्रभूतं प्रचुरं तेजः पराक्रमो यस्य तेन बलेन बलभद्रेण सह विक्रामतीति प्रभूततेजोबलविक्रः कृष्णावतारे गोपादौ इदानीमपि नीलाद्रौ क्रमु धातोः अन्यत्रापि दृश्यत इति डः नक्रेत्यादावित्र माया लक्ष्म्या उदयश्चोन्नत्यं यस्मात्स च पूर्ववत् विशेष्यविशेषणसमासः ॥ ९ ॥

4. लोकपालको मन्वंशः कीदृशः अनन्तासु अपरिमितासु गोषु जलेषु प्रलयकालीनास्वित्यर्थः भूतिराविर्भावो यस्य तेन विसारेण मत्स्येन पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः। विसारश्शकली चेत्यमरः यद्वा अनन्तानां गवां जलानां भूतिः सम्पत्तिर्यस्मिन् तस्मिन् प्रलयकाले प्रलयाम्बुधौ वा विसारेण मत्स्यावतारिणा विष्णुनेत्यर्थः कल्पितः सम्पादितः प्रभूतं प्रचुरं तेजः प्रभावः बलं शारीरसामर्थ्यं विक्रमः सृष्ट्यादावुत्साहशक्तिश्च तेषामुदयः प्राप्तिः तत्करणकाभ्युदयो वा यस्य स तथोक्तः यथा च मत्स्यरूपी भगवान् प्रलयकालीने जले मनुं संरक्ष्य राजानं प्राबोधयत् तत्सर्वं मत्स्यपुराणादाववगन्तव्यम् ॥ १० ॥

5. लोकपालकः कालरूपी स कीदृशः? अनन्तोऽपरिच्छिन्नस्वरूपः कालस्यापरिच्छिन्नत्वात् 'अनादिरेप भगवान् कालोऽनन्तोऽक्षरः पर' इति कौर्मोक्तेः। गोः सूर्याद्भूतिरुत्पत्तिरेषां तैर्विसारैर्विभिन्नसरणैः गतिविशेषैरिति यावत् कल्पितः परिच्छिन्नस्वरूपश्च दिनमासर्तुभेदेषु सूर्यगतीनां तारतम्यस्य ज्योतिश्शास्त्रप्रसिद्धत्वात् सूर्यगतिवशादेव औपाधिकक्षणादि तत्तत्कालभेदस्य परिच्छित्तेरिति भावः प्रभूतानामाकाशादीनां धर्मिरूपाणां तेजोबलविक्रमाणां प्रभावादीनां धर्मरूपाणां च उदय उत्पत्तिराविर्भावो वा यस्मिन् स तथोक्तश्च पूर्ववत्समासः 'जन्यानां जनकः कालो जगतामाश्रयो हि स' इत्युक्तेरिति भावः ॥ ११ ॥

6. सर्वभूतात्मस्वरूपः सः किम्भूतः? अनन्तमाकाशं गोर्जलस्य भूतिरुत्पत्तिर्यस्मात् तदग्न्यात्मकं भूतं अग्नेराप इति श्रुतेः गोर्भूमेर्भूतिर्यस्मात् इति गोभूति जलं च गोर्जलात् भूतिर्यस्येति व्युत्पत्त्या पृथिव्यात्मकं भूतं च 'अद्भ्यः पृथिवी चोत्पद्यत' इति श्रुतेः त्रयाणामपि गोभूतीनां पृथिव्यप्तेजोरूपाणां सरूपाणामित्येकशेषः विशेषेण सरतीति विसारो वायुश्च सारो वायुरिति जटाधरः तेषु पञ्चसु भूतेषु कल्पितस्स्थितः प्रभूतेषु उत्पत्तिमत्सु भौतिकेषु तेजोबलविक्रमेषु वीर्यबलपराक्रमेषु च तत्तद्रूपैर्वा उदयः प्रकाशो यस्य स च सकलभूतभौतिकादिरूपेण प्रकाशमान इत्यर्थः ॥ १२ ॥

7. 'सर्वभूतेषु चान्येन संस्थितिं कुरुते स्थित' इत्यत्र आकाशादीनां जडत्वेन तत्र जीवचैतन्यमेव विष्ण्वंशरूपमिति मत्वा जीवरूपोऽत्र व्याख्यायते लोकपालकः स किम्भूतः? अनन्तः शरीरभेदेनापरिमितः गोः सूर्यस्य भूतिः स्थितिर्यस्मिन् सूर्यस्यैव भूतिः सम्पद्यस्येति वा तत्तथाभूतं यत् विसारं पद्मं प्राणिनां हृदयपुण्डरीकमित्यर्थः सूर्यस्य द्वादशात्मत्वात् हृत्पद्मस्यापि द्वादशदलत्वात् साम्यात् हृत्पद्मं सूर्यात्मकं सूर्यपद्मं चेत्यादिमन्त्रशास्त्रप्रसिद्धं तत्र कल्पितः स्थितः हृदम्बुजे ब्रह्मकन्दसम्भूते ज्ञाननाळके 'आराग्रमात्रो जीवस्तु चिन्तनीयो मनीषिभि'रित्युक्तेः। यद्यपि जीवाधारपद्ममष्टदळमित्यागमप्रसिद्धं तथापि द्वादशारपद्मस्य हृदयसन्निहितत्वात्तदुपलक्षकमिति बोध्यं प्रभूतानां समस्तानामपि जन्तूनां तेजोबलविक्रमाणां प्रभावादीनां उदय उत्पत्तिर्यस्मात्स च जीवहीनस्याकिञ्चित्करत्वादिति भावः। उक्तवत्समासः ॥ १३ ॥

8. अथ ईशपक्षे व्याख्यायते ॥ लोकेश्वरत्वादीशानदिक्पतित्वाच्च लोकपालकः यद्वा 'डलयोरलयोश्चैव शसयोर्वबयोस्तथा। वदन्त्येषां च सावर्ण्यमलङ्कारविदो जनाः' ॥ इति रलयोरैक्यात् लोकानां पारयतीति पारकः कर्मसमापकः संहारक इत्यर्थः। पारतीरकर्मसमाप्ताविति धातोः कर्तरि ण्वुल् स

महेश्वरः कीदृशः? अनन्तमाकाशं द्यौर्लोकः गौर्भूलोकः तत्रावीचेः प्रभृतिमेरुपृष्ठं यावदित्येष भूर्लोक इति योगसूत्रभाष्ये तदूर्ध्वं एवं ब्रह्माण्डं द्यौर्लोकः द्यावा भूमी जनयन् देवएक इत्यादिश्रुतेः भूति-र्भस्म भूतिर्भस्मनि सम्प"दीति कोशात् विशिष्टः सारः स्थिरांशो विसारः प्रभूतं तेजो रौद्रतेजः अत्रलवो व्युच्छेदः अवोपस्पृष्टात् लूञ् छेदने इति धातो ऋदो रप् सोऽस्यास्तीत्यवलवीक्रमोदयः क्रमो-त्पत्तिः तथा च अनन्तगावौ द्यावापृथिव्यौ स्थूलप्रपञ्चरूपावित्यर्थः भूतिरेव विसारो विशिष्टस्थिरांशो' ययोस्ते तथाभूते कल्पिते भस्ममात्रावशेषीकृते येन आहिताग्न्यादित्वात्समासः तेन प्रभूतेन प्रचुरेण तेजसा स्वकीयकालाग्निरूपेण सह अवलवीऽव्युच्छिन्नः व्युत्क्रमेण लीन इत्यर्थः क्रमोदयो महदादिक्रम-सृष्टिः सूक्ष्मप्रपञ्च इति यावत् । यस्मिन् स इति तथोक्तः अनन्तगवोः द्यावापृथिव्योः भूतिरूप-विसारस्य कल्पितं कल्पनं यस्मादिति वा समर्थनीयं अन्यदुक्तवत् यः कल्पान्ते कालाग्निरूपेण ब्रह्माण्डशरीरं भस्मसात्कृत्य तेन सह क्रमोत्पन्नसूक्ष्मजातमपि व्युत्क्रमेण स्वस्मिन् संहरतीत्यर्थः तथा च कौर्मे प्राकृतप्रलयकथनप्रस्तावे गते 'परार्द्धे द्वितयेकाले लोकप्रकालकः । कालाग्निर्भस्मसात्कर्तुं करोति निखिलं मतिं । आत्मन्यात्मानमावेश्य भूत्वा देवो महेश्वरः । दहेदशेषं ब्रह्माण्डं सदेवासुरमानुषम्' ॥ इत्यादिना पृथिव्यादिमहत्तत्वान्तलयमुक्त्वा 'एवं संहृत्य भूतानि तत्वानि च महेश्वरः । नियोजयत्यथा-न्योन्यं प्रधानं पुरुषं पर'मिति ॥ १४ ॥

अथेश्वरएव प्रकारान्तरेण व्याख्यायते अनन्तो वासुकिरिति शब्दमाला गौर्वृषभः भूतिर्भस्म च एतत्त्रयं विशेषेण सारं न्याय्यं धनं वा यस्य स तथोक्तः 'सारो बले मज्जनि च स्थिरांशे न्याय्ये च नीरे च धने च सार'मिति कोशात् कल्पितं दत्तं प्रकर्षेण भूतानां देवयोनिविशेषाणां तेजोबलं प्रभावशक्तिर्येन स तथोक्तश्च भूतेशत्वात् 'पिशाचो गुह्यकस्सिद्धो भूतोऽमी देवयोनय' इत्यमरः । विः पक्षी मयूरः तेन क्रमो यस्य स मयूरवाहनः कार्तिकेय इत्यर्थः तस्य उदय उत्पत्तिर्यस्मात्सतथोक्तश्च पूर्ववत्समासः ॥ १५ ॥

अथवा स ईशः कीदृशः अनन्तमाकाशं गोर्जलस्य भूतिरुत्पत्तिर्यस्मात् सोऽग्निः गोर्भूमेर्भूतिर्यस्मात् स जलात्मागोर्जलात् भूतिर्यस्य पृथिव्यात्मा चन्द्रश्च अब्जत्वात् गवां रश्मीनां भूतिरुत्पत्तिर्यस्मात् स्थितिर्वा यस्मिन् गाव एव भूतिस्सम्पत् यस्येति वा स सूर्यः सहस्रांशुत्वात् पञ्चानामप्येकशेषे गोभूत-योऽग्निजलपृथिवीचन्द्रसूर्याः विसारो वायुः कल्पितो विधिना आहितः प्रभूतं तेजो दीप्तिर्यस्य सोऽग्निर्येन स आहिताग्निर्यज्वेत्यर्थः स च तेषां भूतार्कचन्द्रयज्वनाबलैः रूपैः विक्रमैः विभिन्नक्रमैश्च उदय आवि-र्भावो यस्य सोऽष्टमूर्तिर्महेश इत्यर्थः भूतार्कचन्द्रयज्वानो मूर्तयोऽष्टौप्रकीर्तिता इत्युक्तेरितिभावः ॥ १६ ॥

9. अथेशपुत्रो गणेशः प्रस्तूयते ॥ विघ्ननाशकत्वेन लोकपालकः स कीदृशः नास्त्यन्तस्स्वरूपं यस्यसोऽनन्तः युद्धे पराभूतस्सन् स्वरूपरहितो मूषिकरूपधारीत्यर्थः तथाभूतो यः गोस्सूर्याद्भूति-रुत्पत्तिर्यस्य स यम इत्यर्थः तस्मिन् वाहनभूते विसरणं विसारः सञ्चारइति यावत् तेन हेतुना कल्पितः लोके प्रख्यापितः प्रभूततेजोबलविक्रमाणां प्रचुरप्रभावशक्तिपराक्रमाणां उदय औन्नत्यं येन यस्य वा स तथोक्तः यथा च युद्धे पराभूयमूषिकरूपधारिणं यमं स्ववाहनत्वेन गृहीतवान् गणेशः तत्सर्वं शिवपुराणादाववगन्तव्यम् ॥ १७ ॥

पक्षान्तरे स गणेशः कीदृशः अनन्ता अपरिमिता या गोभूतिर्वाक्सम्पत्तिः पाण्डित्यं वक्तृताशक्तिर्वा तया विसारः कलितः निस्सारः कृतः सुप्सुपेति समासः। तुच्छीकृत इति यावत् प्रभूततेजोबलस्य प्रचुरप्रभावशक्तेः विक्रमस्य वा पक्षिणि क्रमो यस्य तस्य शिखिवाहनस्य उदयऔन्नत्यं उद्योगो वा येन स तथोक्तः गणाधिपत्ये अहमहमिकया विवदमानयोः स्कन्दविनायकयोः निखिलभूमण्डलं परिक्रम्याग्रे यस्समागमिष्यति स गणाधिपतिर्भविष्यतीति शिवेनादिष्टयोः विनायकः शिवं परिक्रम्याग्रे स्थित्वा वाचो युक्त्या स्कन्दं निर्जित्य गाणपत्येऽभिषेचित इत्यादिर्वाराणिकी कथात्रानुसन्धेया ॥ १८ ॥

अथवा स गणेशः कीदृशः अनन्ता गोभूतिर्वाक्सम्पत्तिर्यस्य सः सकलविद्याधीशत्वात् विसारे पद्मे कलितः स्थितः 'विमलकमलमध्यासीनमीडे गणेश'मिति तद्ध्यानोक्तेः प्रकर्षेण भूतानां देवयोनिविशेषाणां तेजः पराक्रमो यस्मात् स प्रभूततेजाः शिवः तस्य बलानि सैन्यानि प्रमथगणाः तेषु विक्रमोदयौ पराक्रमाभ्युदयौ यस्य स च गणाधिपत्वात् ॥ १९ ॥

10 अथ सकलदेवसेनाध्यक्षत्वात् लोकपालानामपि पालक इति लोकपालकः कार्तिकेयः कीदृशः गौः स्वर्गएव भूस्स्थानं येषां ते गोभुवः स्वर्गिणो देवाः अनन्तानां तेषां ऊत्यै अवनाय विसारकलितो विशिष्टबलयुक्तः प्रकर्षेण भूतानां देवयोनिविशेषाणां तेजोबलविक्रमाः पराक्रमादयो यस्मात् तस्मात् भूपतेरीश्वरात्। उदयउत्पत्तिर्यस्य स तथोक्तश्च ॥ २० ॥

यद्वा अनन्तानां गवि स्वर्गे भूतिः स्थितिर्येषां तेषां देवानां विशिष्टैस्सारैः स्थिरांशैः कलितानि समुत्पादितानि अतएव प्रभूततेजांसि प्राज्यपराक्रमाणि यानि बलानि देवसैन्यानि तेषु मध्ये विक्रमेण शक्त्यतिशयेन उदयऔन्नत्यं यस्य स तथोक्तः देवसेनाध्यक्षत्वादिति भावः। यथा च स्कन्दसैन्यानि स्वांशैर्देवैस्समुत्पादितानि स्कन्दश्च देवसैन्याधिपत्येऽभिषिक्तस्तत्सर्वं वामनपुराणादौ द्रष्टव्यम् ॥ २१ ॥

11. पूर्वत्र श्लोके दिगीशवृन्दस्य कलाभिरस्य मूर्तिकल्पनमित्युक्तमित्यत्र इन्द्रादयो दिक्पालाः क्रमेण प्रस्तूयन्ते इन्द्रादीनां लोकपालकत्वं सुप्रसिद्धं। तत्र लोकपालकः इन्द्रः कीदृशः! अनन्ता निरवधिका गवि स्वर्गे या भूतिरैश्वर्यं तस्या विसारेण प्रसारेण कलितस्सम्पादितः तेजोबलविक्रमाणां प्रभावादीनां उदयोऽभ्युन्नतिर्यस्य सः प्रभावादिकरणकाभ्युदयो वा यस्य स तथोक्तः ॥ २२ ॥

अथवा स इन्द्रः कीदृशः अनन्ता अपरिमिता गोर्वज्रस्य भूत्या सम्पत्त्या वज्ररूपसम्पत्त्या वा यो विशिष्टस्सारो बलंतेन कलिताः सम्पन्नाश्च प्रभूततेजसि महाप्रतापे बले बलनामा सुरे ये विक्रमाः पराक्रमाः तैरुदयऔन्नत्यं यस्य स तथोक्तः अनन्तानां गवां लोचनानां भूतिर्यस्मिन् सहस्राक्षत्वात् स इति वा पृथग्विशेषणं एतत्पक्षे विसारो विगतबलः कलितः प्रभूततेजा, बलस्तन्नामा सुरो यैस्तैर्विक्रमैः उदयऔन्नत्यं यस्येति समर्थनीयम् ॥ २३ ॥

12. लोकपालकोऽग्निः किम्भूतः बले बलनामासुरे विक्रमः पराक्रमो यस्य तस्मादिन्द्रादुदयो यस्य स बलविक्रमोदयोऽर्जुनः अनन्तगोभूतेः अपरिमितबाणसम्पत्तेः विसारेण प्रसारेण तत्प्राप्त्येत्यर्थः अनन्तबाणसम्पत्त्या विशिष्टबलेन वा कलितं प्रभूतं तेजः पराक्रमो यस्य स तथाभूतो बलविक्रमोदयः

इन्द्रसमुत्पन्नः पाण्डवमध्यमो यस्मात् स तथोक्तः अग्नेस्सकाशात् प्राप्तानेकशस्त्रास्त्रोऽर्जुनः खाण्डववन-दहने विक्रमितवान् इति पौराणिकी कथा महाभारतादौ ज्ञेया ॥ २४ ॥

अथवा सोऽग्निः किम्भूतः अनन्तानां गवां जलानां भूतिरुत्पत्तिर्यस्मात् सः विशेषेण सरतीति विसारो वायुः तस्मात्कल्पितो जात इत्यर्थः प्रभूतं तेजो दीप्तिर्यस्य स च यद्वा विशेषेण सारं धनं कल्पितं प्रभूतं तेजो यस्य सः विभावसुत्वात् बडबा तद्रूपोऽग्निः तदाधारभूता घोटी वा बडवानलस्य घोटीमुखरूपत्वात् सा अस्यास्तीति बडबो समुद्रः व्रीह्यादित्वादिन् तस्मात्क्रमेण उदयउत्पत्तिर्यस्य स च समाम्नस्तूक्तरूपः वह्निर्हि ब्रह्मरेतसा समुद्राज्जात इति ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे 'ब्रह्माक्रोधानलं शम्भोर्धक्ष्यन्तं सकलान् जनान् । बडबारूपिणं चक्रे देवानां पुरतश्चदे'त्यादि बडबोत्पत्तिविवरणं समुद्रे तन्निधानञ्च कालिकापुराणादौ द्रष्टव्यं ॥ २५ ॥

13. लोकपालको यमः कीदृशः नास्त्यन्तो मृत्युर्यस्य यस्माद्वा सः तस्यैव मृत्युपदवाच्य-त्वादन्तकत्वाच्चेति भावः अन्तो नाशो 'द्वयोर्मृत्युर्मरणं निधनोऽस्त्रिया' मित्यमरः गोस्सूर्याद्भूति-रुत्पत्तिर्यस्य स च विशेषेण सारेण वायुना कल्पितानि वायवीयशरीराणीत्यर्थः पिशाचादीनां वायवी-यशरीरत्वं सुप्रसिद्धं यद्वा 'असारे खलु संसारे सारमेतच्चतुष्टयं । काश्यां वासः सतां सङ्गो गङ्गाम्भः साधुसेवन'मित्याद्युक्तरूपं सारं विगतं सारं काशीवासादिरूपं येषां तानि विसराणि असाराणि कल्पितानि यानि प्रभूतानि जन्तवः पिशाचादयो वा 'भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबे 'त्रिषूचिते प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ने'ति मेदिनी तेषु तेजोबलविक्रमाणां प्रभावादीनां तेजआदि-भिर्वा उदयो यस्य स तथोक्तश्च प्रेतपतित्वात् दण्डधरत्वाच्चेति भावः ॥ २६ ॥

अथवा स यमः कीदृशः अनन्ता अनेका याः गवि भूमौ भूतयो जन्मानि ता विसारा असारा इति कल्पितेन विचारेण भावेक्तः प्रभवन्तीति प्रभुवः प्राणिनः क्विप् तेषु ऊतं अनुस्यूतं सूत्रात्मत्वात् यत् तेजः ब्रह्मात्मकं यद्वा अनेकजन्मसंसिद्धस्ततो याति पराङ्गतिमित्युक्तेः अनन्तासु गविभूतिषु बहुषु भुवि-जन्मसु गच्छत्सु सत्सु इत्यर्थः ॥ विशेषेण सारं श्रेष्ठमिति कल्पितं कल्पनया निश्चितं यत् प्रभूतं तेजः ॥ सर्वप्राणिषु अनुस्यूतं ब्रह्मतेजः तद्बलेन विक्रामन्ति सञ्चरन्तीति तादृशतेजोबलविक्राः डः संसारविरक्ता आत्मज्ञानिन इत्यर्थः ॥ तेषु मोदं यातीति मोदयः आतोऽनुपसर्गे कः यमराट्त्वात् धर्मराजत्वाच्चेति भावः ॥ २७ ॥

14 नैर्ऋतः कीदृशः अनन्तो नागाधिपः गोस्सूर्याद्भूतिर्यस्य स यमः तयोरभ्यन्तर इत्यर्थः ॥ ताभ्यां महवा विशेषेण सारो न्याय्यः कल्पितः प्रभूतानां प्राणिनां तेजोऽवलुनातीत्यवलविरुच्छेदकः अवपूर्वात् लूञ् छेदने इति धातोरौणादिक इः क्रमादनुक्रमादुदयः प्रकाशो यस्य स नैर्ऋत इत्यर्थः ॥ नैर्ऋतवरुणयो-र्मध्ये पूजनीयस्यानन्तस्य घोरसर्पात्मकत्वात् यमस्याप्यन्तकत्वात् तयोर्मध्ये राक्षसात्मकस्य यस्य नैर्ऋतस्य क्रमोदयः प्राणिनां भयावहत्वेन तेजोऽपहरणे उचितएवेति भावः ॥ २८ ॥

यद्वा अनन्ता गोभूतिर्दिक्सम्पत्तिर्यस्य सः नैर्ऋतदिक्पतित्वात् विगतस्सारः प्राणवायुर्यस्य स विसारो विगतासुः तत्र कल्पितः स्थितश्च शवसन्निविष्ट इत्यर्थः ॥ उक्तं च चन्द्रिकायां 'रक्षोऽधिपं कपिल-

वर्तुललोचनान्तं नीलोत्पलाभवपुषं सकृपाणपाणिं । दंष्ट्राकरालवदनं शवसन्निविष्टमुत्कृष्टभूषमनुचिन्त्य-करोतुपूजामिति प्रकर्षेण भूतानां पिशाचादीनां रक्षोगणानां मित्यर्थः ॥ तेषु वा तेजोबलविक्रमैः प्रभावा-दिभिरुदयोऽभ्युन्नतिर्यस्मात् यस्य वा स तथोक्तश्च रक्षोऽधिपत्वादिति भावः ॥ २९ ॥

15. लोकपालको वरुणः कीदृशः अनन्तासु अपरिमितासु गोषु लोमसु भूतिस्स्थितिर्येषां ते तथोक्ताः विशेषेण सारैर्जलैः कल्पइवाचरिताः कल्पवृक्षसदृशा मेघा इत्यर्थः ॥ जलदत्वात् आचारक्विबन्तात् कल्पशब्दात् कर्तरिक्तः अनन्तगोभूतयोऽपरिमितलोमस्थितयो विसारकल्पिता मेघा यस्य स तथोक्तः यद्वा अपरिमितजलसम्पत्त्या विसरन्तीति ते समुद्रनदीप्रस्रवणादयः तैः कल्पितो निरूपितः ते कल्पिता यस्मिन् स तथोक्तो वा यस्य लोम्निस्थिता मेघा सन्धौ सागरनिम्नगाः। कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नम इत्युक्तेः प्रभूतं तेजो दीप्तिर्यस्य स प्रभूततेजास्सूर्यः प्रभाकरत्वात् तस्य अबलो दुर्बलः विक्रमः शक्तिसम्पत्ति-र्यत्र दिशि तत्र सूर्यस्य नास्ति बलविक्रमो यत्र वा तत्र पश्चिमदिशीत्यर्थः ॥ त्रिपदो बहुव्रीहिः उदयऔन्नत्यं यस्य स तथोक्तश्च पश्चिमदिक्पतित्वादिति भावः ॥ ३० ॥

यद्वा अनन्ता गोभूतिर्जलसम्पत्तिर्यस्य सः अप्पतित्वात् विसारा मत्स्याः तेषु तदुपलक्षितेषु याद-स्सु कल्पितं प्रभूतं तेजः पराक्रमो यस्य येन वा यादसां पतित्वात् बलविनि समुद्रेक्रामतीति बलविक्रः समुद्रसञ्चारित्वात् माया लक्ष्म्या उदयउत्पत्तिर्यस्मात्स च लक्ष्म्या वरुणपुत्रीत्वं सुप्रसिद्धम् ॥ ३१ ॥

16. लोकपालकोऽनिलः कीदृशः अनन्तगोभूतिना निरवधिकस्वर्गसम्पत्तिना देवेन्द्रेण विसार-कल्पितो विबलः कृतः सप्तसप्तकृत्वः खण्डितइति भावः सचासौ तथा भूतोऽपि प्रभूततेजोबलविक्रमाणां प्रचुरप्रभावशक्तिपराक्रमाणां प्रभूततेजआदिभिर्वा उदयऔन्नत्यं यस्य स च ॥ ३२ ॥

यद्वा सोऽनिलः कीदृशः । अनन्तगइत्येकम्पदं निरवधिकगतिमानिति तदर्थः सदागतित्वात् भूतौ उत्पत्तिकाले गर्भएवेति भावः विसारः कल्पितः इन्द्रेणेत्यर्थः ॥ यद्वा भूतं भवनं भावे क्तः भूतमेषामस्तीति भूतिनः तेषामुत्पत्तिमतां विसारे विभिन्नसरणे व्यूहनादौ विषये कल्पितः सर्वेषां प्राणरूपत्वात् क्रियात्म-कत्वाच्चेति भावः प्रकृष्टं भूतं प्रभूतं महाभूतपदवाच्यश्च तेजसो भूतविशेषस्याग्नेः बलं प्राणनं सामर्थ्यं वा यस्मात्स च यद्वा प्रभूतं प्रचुरं तेजो दीप्तिर्यस्य स प्रभूततेजा अग्निः बृहद्भानुत्वात् तस्य बलं यस्मात्स च अग्नेर्वायुप्रभवत्वात् वायुसखत्वाच्चवीनां पक्षिणां क्रमो गतिर्यस्मिन् तस्मादाकाशादुदय उत्पत्तिर्यस्य स च 'आकाशाद्वायुर्वायोरग्नि'रित्याद्युत्पत्तिश्रुतेरिति भावः वीनाङ्गगत्वेन विक्रमपदेनाकाशमिति पूर्वमुक्तम् ॥ ३३ ॥

17. लोकपालको वित्तेशः किम्भूतः गवि स्वर्गे भूतिः स्थितिर्येषान्ते गोभूतयो देवाः अनन्तानां तेषां तेषु वा मध्ये इत्यर्थः विशिष्टैस्सारैर्धनैः कल्पितस्सम्पादितः प्रभूततेजोबलविक्रमाणां प्रचुरप्रभावादीनामुदयो येन स तथोक्तः धनाधिपत्वादिति भावः ॥ ३४ ॥

यद्वा । अनन्तागोस्स्वर्गस्य भूतिस्सम्पत्तिर्यस्मिन् सः देवकोशाध्यक्षत्वात् विशिष्टैस्सारैर्धनैः कल्पितः कल्पइवाचरितः कल्पवृक्षसदृश इत्यर्थः धनदत्वात् आचारक्विबन्तात् क्तः प्रकृष्टं भूतानां

देवयोनिविशेषाणां तेजो यस्मात् स प्रभूततेजाश्शिवः भूतपतित्वात् तद्बलात् विक्रमोदयौ पराक्रमाभ्युदयौ यस्य स च शिववरेण हि कुबेरस्य सर्वसमृद्धिप्राप्तिरिति काशीखण्डादौ ॥ ३५ ॥

18. ईश ब्रह्माणौ व्याख्यातौ अनन्तोऽत्र प्रस्तूयते लोकपालकस्स कीदृशः अनन्तस्तत्पदवाच्यः 'शेषोऽनन्त' इत्यमरः गोः पृथिव्याभूतिस्स्थितिर्यस्मिन् स च शेषो भुवं बिभर्तीत्यागमोक्तेः। 'व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेष' इति कालिदासः विशेषेण विभिन्नं वा जिह्मगत्वात् सरन्तीति विसाराः सर्पाः तेषु कल्पितैः यद्वा विसारं पूर्वोक्तरूपेण चक्रं तेन कल्पितः चिह्नितास्सर्पाः चक्रिपदवाच्यत्वात् तेषु तेषां वा प्रभूतैः तेजोबलविक्रमैः प्रभावादिभिरुदयऔन्नत्यं यस्य यस्माद्वा स तथोक्तश्च सर्पराजत्वादिति भावः ॥ ३६ ॥

यद्वा अनन्तस्तद्रूपः गोभूतिः शब्दसम्पत्तिः महाभाष्यरूपा विगताः सारा रोगा येभ्य इति विसाराश्चरकादिप्रतिपाद्यारोगापनयनोपायाः कल्पितं कल्पना च एकाग्रतया भावना चेत्यर्थः कल्पनाया अपि मनोव्यापाररूपत्वादिति भावः तैः प्रभूतानां भूयिष्ठानां यद्वा कल्पितः योगशास्त्रे निरूपितो यः प्रभुः क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः तस्य ऊतं अवाप्तिर्यस्मात् स योगइत्यर्थः ऊतमिति अवतेर्भावे क्तः तैः गोभूत्यादिभिः तेजः प्रागल्भ्यं ज्ञानैश्वर्यशक्तिबलवीर्यैस्तेजोभिरैश्वर्यधर्मैरित्यादि शाङ्करभाष्ये तेजःप्रागल्भ्यमिति तद्व्याख्यातारः बलं शरीरसामर्थ्यं विक्रमः अणिमादिशक्तिश्च तेषामुदयः सम्प्राप्तिर्यस्य यस्माद्वा स तथोक्तश्च मनोवाक्कायसिध्यर्थं योगसूत्रमहाभाष्यचरकरूपशास्त्रत्रयप्रणेतृत्वादिति भावः। उक्तञ्च कैयटेन 'योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन। योपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मी'ति ॥ ३७ ॥

यद्वा अनन्तोऽपि गोभूतेः वाक्सम्पत्तेः महाभाष्यरूपायाः विसाराय विस्तृतीकरणाय लोके प्रचाराय वा कल्पितः प्रभूतप्रागल्भ्यशारीरबलोत्साहशक्तिभिराविर्भावो यस्येति लाघवार्थं समर्थनीयम् ॥ ३८ ॥

19. अथ ग्रहरूपी जनार्दन इत्युक्तेः सूर्यादयो नवग्रहाः क्रमेण प्रस्तूयन्ते तत्र सूर्यः कीदृश अनन्तगोभूत्या निरवधिकरश्मिसम्पत्त्या विसारा निस्साराः कल्पिताः निस्तेजस्कीकृता इति यावत् प्रभूततेजसश्चन्द्रतारकादयो यस्मात् सूर्यकिरणैस्तेषामभिभवसम्भवात् बलवा बडबा डलयोरैक्यात् सा घोटीरूपा भार्या अस्यस्येति बडबी च व्रीह्यादिः 'वाम्यश्वाबडबे'त्यमरः अतएव क्रमेण यातायातरूपगतिक्रमेण मन्दशीघ्रादिरूपगतिक्रमेण वा उदयो यस्य स च अन्यथा जगद्विध्वस्तं स्यादिति भावः सूर्यतेजोऽसहमाना सूर्यपत्नी संज्ञा बडबारूपधारिणी आसीदिति पुराणम् ॥ ३९ ॥

पक्षान्तरे च स सूर्यः अनन्तानां गवां रश्मीनां भूतिरुत्पत्तिर्यस्मात् अनन्ता गोभूतीरश्मिसम्पत्तिर्यस्य वा सः सहस्रांशुत्वात् सहस्रशब्दोऽनन्तबोधकः 'सहस्रशीर्षा पुरुष' इत्यादौ तथात्वात् विशेषेण सारैर्जलैः कल्पिताः चन्द्रतारकादयः तेषामम्मयत्वात् तेषां प्रभूतं तेजोदीप्तिर्यस्मात् स च सूर्यकरैः पूरिताश्चन्द्रतारकादयो दीप्यन्त इति ज्योतिषिकाः अबलस्य अनूरुत्वात् दुर्बलस्य वेः पक्षिणः अरुणस्येत्यर्थः क्रमेण उदयो यस्मात्स च यमाश्रित्यारुणः क्रमेणोदेतीत्यर्थः समासः पूर्ववत् ॥ ४० ॥

20. लोकपालकश्चन्द्रः कीदृशः अनन्ता या गोभूतिः किरणसम्पत् तस्या विसारैः प्रसारणक्रियाभिः कल्पितः विधापितः प्रभूतानां उत्पत्तिमतां चतुर्विधभूतग्रामाणामित्यर्थः तेजोबलविक्रमाणां उदयोऽभ्युदयो येन सः चन्द्रस्यामृतमयकिरणसम्पर्काद्धि व्रीहियवादयो वर्धन्ते तैश्च सर्वे प्राणिनः जीवन्तीत्यादि सुप्रसिद्धम् ॥ ४१ ॥

यद्वा अनन्तानां गवां जलानां भूतिस्सत्तास्थितिरिति यावत् यस्मिन् अनन्ता गोभूतिर्जलसम्पतिर्यस्य वा सः अनन्तगोभूतिस्समुद्रः अभेदोपचारात् क्षीरसमुद्र इत्यर्थः तस्य विशिष्टस्सारो नवनीतं सारो नवनीतमिति राजनिर्घण्टः मन्थनजातत्वान्नवनीतपदेन चन्द्रोऽमृतं चाभिधीयते मेदिन्यादौ अमृतं वा तदर्थः तेन कल्पितं प्रभूतं तेजो दीप्तिर्यस्य सः सुधांशुत्वात् बललिनः समुद्रस्य क्रम-उत्क्रान्तिर्यस्मात् स तथाभूत उदयो यस्य स च चन्द्रोदये हि समुद्रउत्क्रामतीति प्रसिद्धिः बललिनः समुद्रात् क्रमेण उदयो यस्य स तथोक्तो वा ॥ ४२ ॥

21. भौमः कीदृशः । अनन्तो विष्णुः गौर्भूमिश्च ताभ्यां अनन्ताद्गवि वा भूतिरुत्पत्तिर्यस्य सः यथा च विष्णुरेतसा पृथिव्या भौमोत्पत्तिः ब्रह्मवैवर्ते नवमाध्याये द्रष्टव्यं विसारकल्पितः कमलासनो ब्रह्मा तेन हेतुना तदाराधनेनेत्यर्थः प्रभूतं संजातं तेजोबलं ग्रहोचितं यस्य स च उक्तञ्च पाद्मे "जातस्नेहेन मेदिन्या वर्धितः पृथिवीपते । तपसाराध्य ब्रह्माणं ग्रहत्वमुपसेदिवा"निति वीनां पक्षिणां क्रमो गतिर्यस्मिन् तस्मिन्नाकाशे उदयः प्रकाशो यस्य स च ग्रहाणां खेचरत्वादिति भावः ॥ ४३ ॥

22. लोकपालको बुधः कीदृशः । अनन्तगोभूतेः समुद्रस्य विशिष्टस्सारो नवनीतं कल्पितश्चन्द्रः समुद्रनवनीतपदेन चन्द्र इत्युक्तं तस्मात्प्रभूतो जातः तेजएव बलं यस्य तेन सूर्येण सह विक्रमस्सञ्चारः उदयः प्रकाशश्च तौ यस्य स च इतरग्रहापेक्षया बुधस्यैव सर्वदा सूर्यसन्निहितत्वादिति भावः ॥ ४४ ॥

23. गुरुः कीदृशः? अनन्ता निरवधिका गोभूतिर्वाक्सम्पत्तिर्यस्य सः वाचस्पतित्वात् विसारकल्पितो ब्रह्मा तस्येव प्रभूतं तेजो यस्य स च ब्रह्मसमानमहातेजा इत्यर्थः बले बलनामासुरे विक्रमो यस्य तस्येन्द्रस्य उदयऔन्नत्यं यस्मात्स च मन्त्रित्वात्पुरोहितत्वाच्चेति भावः ॥ ४५ ॥

24. शुक्रः कीदृशः । अनन्ते आकाशे गवि वृषराशौ भूतिरैश्वर्यं आधिपत्यमिति यावत् यस्य सः वृषराशिः तुलाराशिश्च क्षेत्रद्वयं शुक्रस्येति ज्योतिश्शास्त्रप्रसिद्धं विसारकल्पितः पद्मसंस्थश्च उक्तञ्च ग्रहयज्ञतत्वे तद्ध्याने शुक्रं भोजकटं विप्रं भार्गवं च नवाङ्गुलं । पद्मस्थमाह्वयेत्सूर्यमुखं श्वेतं चतुर्भुजमिति । प्रभूतं निखिलतारापेक्षया अधिकं तेजोदीप्तिर्यस्य स च बलस्य बलनामासुरस्य विक्रमोदयौ पराक्रमाभ्युदयौ यस्माद्धेतोः स च बलविक्रमस्येन्द्रस्य विरोधिनो अवलविक्रमा असुराः इन्द्रारित्वात् तेषामुदयऔन्नत्यं यस्मात्सचेति वा दैत्यगुरुत्वात् ॥ ४६ ॥

25. शनैश्चरः कीदृशः । 'नान्तोऽनन्तोऽनिकटः अनन्तः स्वरूपे निकटे' इति कोशात् अतिदूरस्थइत्यर्थः सर्वेषामपि ग्रहाणामुपरि स्थितत्वात् गोः सूर्याद्भूतिरुत्पत्तिर्यस्य स च यद्वा अनन्ताद-

परिच्छिन्नव्यापकात्मनो गोः सूर्याद्भूतिर्यस्य सः न तु हीनप्रसूत इत्यर्थः विसारे पक्षिश्रेष्ठे गृध्रे कल्पितः स्थितः बृहत्कायत्वादिनात्र गृध्रस्य श्रैष्ठ्यं प्रभूतैर्भूयिष्ठैः तेजोबलविक्रमैः सह उदयो यस्य स च ॥४७॥

26. राहुः कीदृशः नास्ति अन्तः स्वरूपं अवयवो वा यस्य सः भूच्छायारूपत्वात् भुवः भूगोलस्य ऊतिरालिङ्गनं भूतिः गोः सूर्यस्य भूत्या भूगोलालिङ्गनेन तदाच्छन्नतयेत्यर्थः यो विसारो सञ्चारः तेन कल्पितः तथा च भूगोलान्तरितसूर्यालोकाभावरूपस्य छायाग्रहस्य राहोः रूपावयवादेरवास्तवात् प्रत्यक्षाभाव इति भावः। तच्छायाभिमानिदेवतात्वेन राहोर्ग्रहत्वमवसेयं प्रकर्षेण भूतं प्राप्तं वृत्तं वा तेजः सूर्यकररूपं यस्मिन् तस्य प्रभूततेजसश्चन्द्रमसोऽवलविरुच्छेदकः तदाच्छादक इत्यर्थः यः क्रमः क्रान्तिः गतिरिति यावत् तस्य उदयएव उदयो दर्शनं यस्य स च तथा च चन्द्रमण्डलाश्रितभूच्छायाक्रान्तिदर्शनमेव तदावेदकमिति भावः ॥ ४८ ॥

यद्वा अनन्तगोभूतिविसारः समुद्रनवनीतं चन्द्रोऽमृतञ्चेति पूर्वमुक्तम् तस्मिन् चन्द्रे तेनामृतेन वा प्रभूतं तेजोबलं प्रभावशक्तिर्यस्य सः विधुन्तुदत्वात् अमृतपानेनामरत्वाच्चेति भावः विक्रमेण विपरीतक्रमेण उदयो गतिर्यस्य स च ग्रहचक्रे राहुकेत्वोर्विपरीतगतित्वं ज्योतिश्शास्त्रप्रसिद्धम् ॥ ४९ ॥

27. केतुः कीदृशः? अनन्तो रूपादिरहितः गोश्चन्द्रस्य भूत्या भुवआलिङ्गनेन तदावरकतयेत्यर्थः यो विसारः सञ्चारस्तेन कल्पितः प्रभूततेजसः सूर्यस्य अवलविरुत्सेदको यः क्रमः चन्द्रगोलक्रान्तिः सूर्यमण्डलाच्छादकचन्द्रगोलक्रान्तिरित्यर्थः तस्य उदयो दर्शनमेवोदयो यस्य स च अन्यत्सर्वं राहोः प्रथमार्थेन तुल्यम् ॥ ५० ॥

यद्वा अनन्ता गोभूतिः किरणसम्पत्तिर्यस्य तस्मिन् सूर्ये विशेषेण सारं न्याय्यं कल्पितं प्रभूतं तेजोबलं प्रभावशक्तिर्यस्य सूर्यमण्डलग्रासित्वादिति भावः विक्रमेण विपरीतक्रमेण उदयो यस्य स च ॥

अथवा स केतुः किम्भूतः अनन्तस्यान्तरिक्षस्य गोः स्वर्गस्य दिव इत्यर्थः भुवः पृथिव्याश्च ऊत्या आलिङ्गनेन यो विसारः। विभिन्नसञ्चारः तेन कल्पितो निरूपितः प्रभूतानि बहूनि नानाविधानीत्यर्थः यानि तेजोबलानि अनलादिरूपाणि बलं रूपमित्युक्तं तेषां विक्रमैः भिन्नक्रमैरुदयो दर्शनं यस्य स च उक्तञ्च केतुचाराध्याये संहितायां। 'दर्शनमस्तमयो वा नगणितविधिनास्य शक्यते ज्ञातुं। दिव्यान्तरिक्षभौमास्त्रिविधाः स्युः केतवो यस्मात् ॥ अहुताशेऽनलरूपं यस्मिंस्तत्केतुरूपमेवोक्तं। खद्योतपिशाचालयमणि रत्नादीन्परित्यज्य ॥ ध्वजशस्त्रभवनतरुतुरगकुञ्जराद्येष्वान्तरीक्षास्ते । दिव्या नक्षत्रस्था भौमास्स्युरतोऽन्यथा शिखिनः॥ शतमेकाधिकमेके सहस्रमपरे वदन्ति केतूनां । बहुरूपमेकमेव प्राह मुनिर्नारदः केतु 'मित्यादि ॥ ५२ ॥

28. अथ इन्द्राग्नीचाश्विनौ चैव स्तूयन्ते प्रायशो द्विजैः । स्तूयन्ते वेदवाक्येषु नतथान्या हि देवता इति चरकाद्युक्तेः अश्विनीकुमारयोः प्राधान्यात्तावत्र प्रस्तूयेते ॥

यथा अनन्तात् स्वरूपहीनात् घोटकरूपिण इत्यर्थः गोः सूर्यात् भूतिरुत्पत्तिर्ययोस्तौ तथोक्तौ विशेषेण सारेभ्यो रोगेभ्यः तानपनेतुमित्यर्थः कल्पितौ निरूपितौ च क्रियार्थोपपदस्येत्यादिना चतुर्थ्य

समासः सारो रोग इति धरणिः यद्वा विसारेण विशिष्टस्थिरांशेन देवांशेनैव न तु घोटकरूपपशुवंशेनेति भावः कल्पितौ समुत्पादितौ अतएव प्रभूततेजसौ प्रचुरप्रभावौ च यौ बलविनौ बलवा घोटीरूपा जननी अस्त्यनयोरिति तथा तयोरश्विनीकुमारयोरित्यर्थः क्रमोदयः क्रमेणाविर्भावः अन्यत्सर्वं पूर्ववत् ॥ ५३ ॥

29. अथ नारायणांशो भगवान् स्वयं धन्वन्तरिर्महानित्युक्तेः भगवदवतारविशेषः सः प्रस्तूयते यथा अनन्तो विष्णुरूपः गोर्जलाद्भूतिरुत्पत्तिर्यस्य स शङ्खः गवि जले भूतिः स्थितिर्यस्य स जलौकाख्यो जलजीवविशेषः अरेण चक्राङ्गविशेषेण सहितं सारं विशिष्टं सारं चक्रं अमृतं च धर्मादयः किमगुणेन च कांक्षितेन सारं जुषां चरणयोरुपगायतां नः इति (7) (6) (25) भागवतपद्यव्याख्याने सारममृतमिति श्रीधरस्वामी गोभूतिपदयोः विसारपदयोश्च पृथगेकशेषे द्वंद्वसमासे च कृते गोभूतिविसाराणि शङ्खजलौकश्चक्रामृतानि तैः कल्पितरसहितः प्रभूतं तेजोदीप्तिर्यस्य स च बलविनः समुद्रात् क्रमेणोदयो यस्य स तथोक्तश्च शङ्खं चक्रं जलौकां दधदमृतघटमित्यादि तत्स्वरूपमत्रावगन्तव्यम् ॥ ५४ ॥

अथ लाघवात् अनन्तगोभूतिविसारः समुद्रनवनीतपदबोध्यममृतं तेन कल्पितो गृहीतामृतघट इति वा समर्थनीयं अन्यदुक्तरूपं ततोऽमृतघटं पूर्णं गृहीत्वा पयसां निधेः। धन्वन्तरिस्समुत्तस्थावित्यादि नृसिंहपुराणम् ॥ ५५ ॥

30. अथ सर्वेषामपि कामाधिष्ठातृत्वात् कामदेवोऽत्र प्रस्तूयते स कीदृशः नास्त्यन्तः प्रान्तो नाशो वा येषान्तेऽनन्ताः अनवधिकगतयो अप्रतिहतगतयो वा तदर्थः तथाभूता ये गावो बाणाः तद्भूत्या तत्सम्पत्त्या अनन्त इति कामस्य वा विशेषणं नास्त्यन्तो अवयवो यस्य स तथोक्तः अनङ्गत्वात् स तथाभूतोऽपि गोभूत्या बाणसम्पत्त्या विसाराः कल्पिताः विवलाः कृताः स्वायत्ततां नीता इत्यर्थः प्रभूताः प्राणिनो येन सः तेजोबलेषु शुक्रलेषु जनेषु 'शुक्रं तेजो रेतसी' चेत्यमर- विक्रमस्यातिशक्तिताया उदयो यस्य स च शुक्रोद्रेकाद्धि कामोद्रेकादिति भावः ॥ ५६ ॥

यद्वा अनन्तगोभूत्या असीमबाणसम्पत्त्या धनुषि बाणसन्धानमात्रेणैवेति भावः विसारः कल्पितः विवलः कृतः परिवृत्तधैर्यः कृत इत्यर्थः। 'हरस्तु किञ्चित्परिलुप्तधैर्य' इत्यादि कुमारसम्भवे तथाभूतो यः प्रभूततेजाश्शिवः तेन तन्नेत्रानलेनेत्यर्थः अवलत्वी विनाश्यपि क्रमेण कालक्रमेण उदयउत्पत्तिर्यस्य स च शिवनेत्रानलदग्धः कामः पार्वतीपरिणयानन्तरं शिवेन पुनरुज्जीवित इति परिणेष्यति पार्वती यदेत्यत्र तत्रैवोक्तं द्वापरयुगे वा प्रद्युम्नरूपेण पुनरुत्पत्तिर्वेदितव्या ॥ ५७ ॥

31. अथ विश्वगर्भस्यापि विष्णोर्वाहनोर्गरुडः प्रस्तूयते ॥ स किम्भूतः ? अनन्तगोभूतिविसारः समुद्रनवनीतं अमृतमित्यर्थः यद्वा गोभुवः स्वर्गिणो देवाः अनन्तैस्तैरूतिरवनं यस्य स विसारोऽमृतं तस्मै निखिलदेवैरक्षितमपि तदा हर्तुमित्यर्थः कल्पितैः प्रदर्शितैः प्रभूततेज आदिभिः उदयओन्नत्यं यस्य स गरुड इत्यर्थः मातुर्विनताया दासीत्वमोचनार्थं स्वर्गादमृतमाहृतवान्गरुड इति पुराणम् ॥ ५८ ॥

32. अथ गरुडस्यैवावतारविशेषो हनूमान्प्रस्तूयते स कीदृशः? अनन्तेऽनिकटे अतिदूरे लङ्कायामित्यर्थः गोः पृथिव्या भवतीति गोभूर्भूनन्दिनी सीता तस्या ऊत्यै अवाप्तये विशेषेण सारं जलं यस्मिन् स विसारो जलधिः तस्मिन् समुद्रे तदुल्लङ्घनसेतुबन्धनादौ समुद्रमध्ये लङ्कायां वा कल्पितैः प्रकटितैः तेजोबलविक्रमैः पराक्रमादिभिरुदयऔन्नत्यं यस्य स तथोक्तो हनूमानित्यर्थः॥ ५९॥

अथ विष्णोः दशावताराः प्रस्तूयन्ते॥

33. तत्र मत्स्यपक्षे॥ अनन्तगोभूतौ अनवधिकजलसम्पत्तौ प्रलयसमुद्रे इत्यर्थः यद्वा अनन्तानां गवां शब्दानां भूः स्थानं वेदः तस्य ऊत्यै अवनाय विसारे मत्स्यशरीरे कल्पितैः प्रकाशितैः प्रभूततेजोबलविक्रमैः प्रचुरप्रभावादिभिरुदयआविर्भावो यस्य स तथोक्तः॥ ६०॥

यद्वा अनन्तोऽनिश्चितः स्वरूपहीनो वा वेदानपहृत्य असुरस्वरूपं त्यक्त्वा शङ्खरूपेण समुद्रे लुक्कायित इत्यर्थः तथाभूतो यः गोर्जलाद्भूतिरुत्पत्तिर्यस्य स गोभूतिः शङ्खः शङ्खासुरः इत्यर्थः तेन विसारे विशेषजले समुद्रे कल्पितं प्रकटीकृतं यत्प्रभूतं तेजः पराक्रमः तस्यावलविरुच्छेदकः लुनातेरिः क्रमेणोदयआविर्भावो यस्य स मत्स्यरूपी भगवानित्यर्थः उक्तञ्च शारदातिलके दशावतारस्तोत्रे आदाय वेदाः सकलास्समुद्रान्निहत्य शङ्खासुरमत्युदग्रं। दत्ता पुरा येन पितामहाय विष्णुं तमाद्यं भजमत्स्यरूपमिति॥ ६१॥

34. कूर्मपक्षे॥ विशेषेण सारे जले विशिष्टजलप्रदेशे वा कल्पितः स्वात्मरक्षणे निरूपितः स्थितो वा विसारकल्पितः कूर्मः कच्छपकमठादिपदेषु तथा व्युत्पत्तिदर्शनात् पल्वलावासेत्यादि पर्यायैरपि शब्दरत्नावल्यादावभिहितत्वाच्च अनन्तगोभूतौ समुद्रे तन्मन्थनसमये इत्यर्थः॥ विसारकल्पिते कूर्मे मूर्तौ प्रभूतः संवृत्तः तेजोबलविक्रमैः मन्धरधरणोचितैरित्यर्थः॥ उदयो यस्य स तथोक्तः उक्तञ्च भागवते 'विलोक्य विघ्नं च विधिं तदेश्वरो दुरन्तवीर्योऽवितथाभिसन्धिः। कृत्वा वपुः काच्छपमद्भुतं महत्प्रविश्यतोयं गिरिमुज्जहारे'ति॥ ६२॥

यद्वा। अनन्तेन सहस्रफणेनाहिना सहिता गौः पृथिवी तस्या भूतिः स्थितिर्यस्मिन् तस्मिन् विसारकल्पिते कूर्मे मूर्तौ प्रभूततेजोबलविक्रमोदयः पूर्ववत्। फणासहस्रैरनन्तो भुवं बिभर्ति तं कूर्मइत्याद्यागमं उक्तञ्च शारदायां। 'आधारशक्तिं प्रयजेत्पङ्कजद्वयधारिणीं। मूर्ध्नि तस्य समारूढं कूर्मं नीलाभमर्चयेत्। ऊर्ध्वं ब्रह्मशिलासीनमनन्तं कुन्दसन्निभं। यजेच्चक्रधरं मूर्ध्नि धारयन्तं वसुन्धरा'मिति॥ ६३॥

35. वराहपक्षे॥ अनन्तेभ्यो गोभ्यः प्रलयकालीनजलेभ्यः भुवः पृथिव्या ऊत्यै अवनाय उद्धारणायेत्यर्थः॥ विसारकल्पितात् कमलासनात् ब्रह्मणः तन्नासाविवरादित्यर्थः॥ प्रभूतो निर्गतो यस्तेजोमयो बलमस्यास्तीति बलो वराहः अर्श आद्यच् बलीवराह इति जटाधरः तस्य विक्रमोदयः शक्तिरुत्पत्तेराविर्भावः उक्तञ्च स्वायम्भुव उवाच कुत्र प्रजास्स्थास्यन्ति पृथिवी तावत्प्रलयार्णवे मग्ना तस्याः धरणे यत्नं कुरु इति श्रुत्वा ब्रह्मा भगवन्तं ध्यातवान् ध्यायतस्तस्य नासाविवरात् अङ्गुष्ठप्रमाणो तेजोमयो वराहपोतः निरगात् स च आकाशस्थस्सन् क्षणमात्रेण पर्वतोपमो बभूव तं विष्णुं मत्वा ब्रह्मा तुष्टाव स च तेन स्तुत.

प्रलयार्णवजलमध्ये प्रविश्य दन्ताग्रेण पृथिवीमुद्धृत्य निजधारणशक्त्या संस्थाप्य अन्तर्हितो बभूवेति भागवते ॥ ६४ ॥

यद्वा ॥ अनन्ते आकाशे गोभूतेः भूसम्पत्तेः भूगोलस्य स्थितेर्वा विस्यतीति विसः प्रेरकः विसप्रेरणे इति धातोर्दैवादिकस्य इगुपधलक्षणः कः प्रवर्तक इत्यर्थः ॥ आकाशे दन्ताग्रोद्धृतवसुन्धर इत्यर्थः ॥ अरिरेव आरः प्रज्ञाद्यण् तस्मिन् हिरण्याक्षे इत्यर्थः ॥ कलितैः प्रकटितैः प्रभूततेजोबलविक्रमैः प्रचुरप्रभावशक्तिपराक्रमैरुदयऔन्नत्यं यस्य स हिरण्याक्षहन्ता वराहरूपी भगवानित्यर्थः ॥ उक्तञ्च भागवते 'हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा । हिरण्याक्षो धरोद्धारे बिभ्रता सौकरं वपु'रिति ॥ ६५ ॥

36. नृसिंहपक्षे ॥ अनन्ते आकाशमण्डले गोभूतेर्लोमसम्पत्तेः सटात्मिकाया इत्यर्थः ॥ विसारैः प्रसारैः विक्षेपैरिति यावत् कल्यः क्षयः सञ्जात एषामिति कलितानि इतच् विलोपितानीति यावत् प्रभूततेजांसिअनल्पज्योतींषि नक्षत्रादीनि येन सः सटाक्षेपक्षिप्तनक्षत्रसंहतिरित्यर्थः ॥ तथोक्तो यः बलेन स्वशक्त्या विक्रामति पराक्रमत इति बलविक्रमस्सिंहः विक्रमो सिंहः इति राजनिर्घण्टः तस्य तथाभूतस्य नृसिंहरूपिणो भगवत उदय आविर्भावः ॥ ६६ ॥

यद्वा अनन्तगोभूतीनां निखिलदेवानां विसः प्रेरकः शासक इत्यर्थः ॥ राजा हिरण्यकशिपुर्दिशं यां यां निषेवते । तस्यां तस्यां नमश्चक्रुर्देवता ऋषिभिस्सहेत्युक्तेः सर्वेऽपि देवा यदाज्ञावशवर्तिन इति भावः ॥ अथवा स्वात्मना सकलदेवानां प्रवर्तक इत्यर्थः ॥ तथा चोक्तं वह्निपुराणे । 'एवं प्रभावो दैत्योऽभूद्धिरण्यकशिपुः पुरा । स्वयमग्निश्च सूर्यश्च वायुरिन्द्रो जलं स्वयं । भूत्वा चकार राज्यं समन्वन्तरचतुर्दश । तस्यासीन्नरसिंहस्तु मृत्युर्विष्णुः पुरा किले'ति सचासौ अरिरेव आरः स्वार्थेऽण् हिरण्यकशिपुरित्यर्थः ॥ तस्मिन् कलितं प्रभूतं तेजोबलं प्रभावशक्तिर्येन सचासौ विक्रमोऽस्यास्तीति विक्रमस्सिंहः अर्श आद्यच् नृसिंहरूपो विष्णुरित्यर्थः ॥ तस्योदय आविर्भावः ॥ ६७ ॥

37. वामनपक्षे ॥ अनन्तमाकाशं गौः स्वर्गः भूः पृथिवी च तासु ऊतेः याचनात् आदानात् वृद्धेर्वा अवतेरनेकार्थता पूर्वमुक्ता याचनाद्यनन्तरमित्यर्थः ॥ विसारैः प्रसारणक्रियाभिः चरणानामित्यर्थः ॥ कलितं प्रकटितं प्रभूतं तेजः प्रभावः पराक्रमो वा येभ्यः तैः क्रमैः त्रिभिः चरणैरित्यर्थः ॥ पादविक्षेपैर्वा उदयऔन्नत्यं यस्य स त्रिविक्रम इत्यर्थः ॥ क्रमु पादविक्षेपे इत्यस्माद्धातोः करणे भावे वाघञ् बलिवञ्चनार्थं वामनरूपी भगवान् पादत्रयपरिमितां भूमिं याचयित्वा त्रिभिश्चरणैः भूव्योमस्वर्गान् विक्रमितवानिति पुराणम् ॥ ६८ ॥

यद्वा अनन्तस्य शेषसर्पस्य या गौर्भूमिः पातालपुरमित्यर्थः ॥ तत्र भूत्या स्थित्या स्थापनेनेत्यर्थः ॥ यद्वा अनन्ते अप्रान्ते आद्ये इति यावत् गोभुवौ स्वर्गमर्त्यौ यस्य तत् अतद्गुणसंविज्ञानबहुव्रीहिणा पातालमित्यर्थः ॥ तत्र ऊत्या अवनेन विसारः कलितो दुर्बलः कृतः प्रभूतं तेजोबलं यस्य स बलिनामासुरो यैस्तैर्विक्रमैस्त्रिभिः पादविक्षेपैरुदयो यस्य सः त्रिविक्रमरूपी भगवानित्यर्थः ॥ ६९ ॥

38. परशुरामपक्षे ॥ अनन्ते अनन्तिके स्वस्य समीपानवस्थितिदशायामित्यर्थः गोभूतेः धेनुसम्पत्तेः गोर्भूतिरुत्पत्तिर्यस्य तस्य वत्सस्य वा विसारणं विसारः अपहरणमित्यर्थः तस्माद्धेतोः कलितः

विरुद्धलक्षणया क्षयितः कल्पः क्षय इत्यमरः प्रभूतैर्भूयिष्ठैः तेजोबलविक्रमैर्वीर्यादिभिरौन्नत्यं यस्य स कार्तवीर्यो येन स परशुराम इत्यर्थः उक्तञ्च महाभारते 'न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः। यज्ञदानतपोयोगश्रुतवीर्यजयादिभि'रिति। यद्वा प्रभूतं तेजः प्रभावो यस्य सचासौ बलं चक्रं 'वरूथिनी-बलं चक्र'मित्यमरः लक्षितलक्षणया सुदर्शनचक्रं तस्यैव विक्रमेण विशिष्टशक्त्या उदयो अवतारः तद्रूपः कार्तवीर्यो येन सः परशुराम इत्यर्थः। 'अथेदानीं सम्प्रवक्ष्ये कार्तवीर्यस्य गोपितान्। यस्सुदर्शनचक्र-स्यावतारः क्षितिमण्डले'॥ इत्यादि मन्त्रशास्त्रं। एकदा रामविरहिताश्रमात् गोवत्सापहारापराधाद्रामेण निपातितः कार्तवीर्यः सवंश इति पुराणम्॥ ७०॥

यद्वा॥ गवि पृथिव्यां भूतिरैश्वर्यं येषां अनन्तानां तेषां पार्थिवानां विसाराय विबलाय दौर्ब-ल्यायेति यावत् विरूपस्थिरांशायवाकलितैः भूयिष्ठप्रभावशक्तिपराक्रमैः उदयो यस्य सः क्षत्रिय कुलनि-र्मूलनकर्ता परशुराम इत्यर्थः॥ ७१॥

39. अथ श्रीरामपक्षे अनन्तो लक्ष्मणः तस्य शेषावतारत्वात् गोः पृथिव्याभूतिरुत्पत्तिर्यस्याः सा भूनन्दिनी सीता च ताभ्यां सह विसारेषु विभिन्नविपिनेषु 'सारं विपिन'मिति कोशान्तरं कल्पितः प्रभूतानां पिशाचानामिव तेजो येषां तेषु बलेषु खरदूषणप्रमुखराक्षससैन्येषु विक्रमादुदयो यस्य स राम इत्यर्थः॥ ७२॥

यद्वा॥ अनन्ते स्वस्या निकटे गोभूतेः सीतायाः विसारकल्पिते विबलकल्पनेविषये चञ्चुचरण-घातादिनेति भावः प्रभूतं तेजः पराक्रमो यस्य तस्य बलस्य काकस्य विक्रमेण विकृतविधिना 'कल्पे विधिक्रमा'वित्यमरः उदय उद्गमनं उड्डीयपलायनं यस्मात् स राम इत्यर्थः एकदा वनाश्रमे रामः मांसलोभेन चञ्चुचरणाघातैः सीतां पीडयन्तं काकं चक्षुषा विकृतं कृतवानिति रामायणम् 'बलं नाकाकसीरिणो'रित्यमरः॥ ७३॥

अथवा॥ अनन्ते अनिकटे अतिदूरेस्थितेत्यर्थः या गोभूर्भूम्युद्भवा सीता तस्या ऊत्यै अवाप्तये विशेषेण सरतीति विसारो वायुः तस्मात्कल्पितं प्रभूतं प्रभवो जन्म यस्य भावेक्तः तस्य वायुपुत्रस्य हनूमत इत्यर्थः तेजसा पराक्रमेण बलविनि समुद्रे तन्मध्ये तत्पारप्रदेशे वा लङ्कायामित्यर्थः क्रमोगतिः उदयऔन्नत्यं च यस्मात् स राम इत्यर्थः यमाश्रित्य हनूमान् समुद्रलङ्घनादौ समर्थो बभूवेति भावः॥ ७४

पक्षान्तरे च॥ अनन्तगोभूतयो देवाः तेषां विस्यतीनि विसः प्रेरकः स्वसेवायां देवानां नियोजक इत्यर्थः तथाभूतो यो अरिरेव आरो रावणः तस्मिन् कल्पितं प्रभूतं तेजः पराक्रमो येन स तन्नाशक इत्यर्थः बले तन्नामासुरे विक्रामतीति बलविक्र इन्द्रः तस्य माया लक्ष्म्याः स्वर्गसम्पदइत्यर्थः उदयो यस्मात्स च यः रावणं सगोत्रं हत्वा इन्द्राय स्वर्गसम्पदं दत्तवानिति भावः॥ ७५॥

40. बलरामपक्षे॥ अनन्तश्शेषावतारः गोः सूर्याद्भूतिरुत्पत्तिर्यस्याः सा कालिन्दी तस्याः विसाराय हलाकर्षणेन निस्सारणाय कल्पितैः प्रकटितैः प्रचुरप्रभावादिभिरौन्नत्यं यस्य सः कालिन्दीभेदनो बलराम इत्यर्थः यथा च स कालिन्दीं हलाग्रेण भित्वा वृन्दावनं निस्सारयामास हरिवंशे द्रष्टव्यम्॥ ७६॥

यद्वा ॥ अनन्तेन श्रीकृष्णेन सह गवां सुरभीणां भूतिः सम्पत्तिर्यस्मिन् तस्मिन् विशिष्टे सारे विपिने 'सारं विपिन'मिति शब्दरत्नावली वृन्दावने इत्यर्थः कल्पिता मिलिताः ये प्रधाना भूताः कुमाराः 'भूतः कुमारेऽपी'ति मेदिनी । तेषु गोपकुमारेषु मध्ये तेजोबलविक्रमैः प्रभावादिभिरुदयो यस्य स बलदेव इत्यर्थः ॥ ७७ ॥

41. बौद्धपक्षे ॥ अनन्ता गोभूतिः शब्दसम्पत्तिर्यस्मिन् तस्मिन् वेदे विसारो अन्याय्य इति कल्पितः अविशुद्धेर्दूषित इत्यर्थः प्रभूतानां प्राणिनां तेजसां बीजानां तदा दीनामित्यर्थः अवलवउच्छेदोऽस्यस्मिन्नित्यवलवी अत इन् पशुबीजादिवधसाधनमित्यर्थः क्रमो यज्ञविधिर्येन स वेदनिन्दकबुद्धदेव इत्यर्थः तस्योदय आविर्भावः निन्दसि यज्ञविधेरहह श्रुतिजातं सदयहृदयदर्शितपशुघातमिति गीतगोविन्दे अविशुद्धिः सोमादि यागस्य पशुबीजादिवधसाधनतेति वाचस्पतिमिश्रः ॥ ७८ ॥

यद्वा ॥ अनन्तगोभूत्या अनेकवाचो युक्तया विसारकल्पितः असार इति निरूपितः सर्वं क्षणिकं क्षणिकमित्यादि रूपेण तुच्छीकृत इति यावत् प्रभूतस्य उत्पत्तिमतो भावस्य तेजसः अर्थक्रियाकारित्वरूपायाः सत्ताशक्तेश्च अवलविच्छेदकः क्रमोदयः क्रमपरिणामात्मकस्संसारो येन स बुद्धदेव इत्यर्थः बुद्धदेवेन हि सर्वं क्षणिकं क्षणिकं दुःखं दुःखं स्वलक्षणं स्वलक्षणं शून्यं शून्यं इति भावनाचतुष्टयमुपदिष्टं तत्रक्षणिकत्वं नीलादिक्षणानां सत्वेनानुमातव्यं यत् सत् तत् क्षणिकं यथा जलधर पटलं सन्तश्चामी भावा इति उक्तञ्च ज्ञानश्रिया 'यत् सत् तत् क्षणिकं यथा जलधरः सन्तश्च भावा अमी सत्ताशक्तिरिहार्थकर्मणिमितेः सिद्धेषु सिद्धानसा' इत्यादि ॥ ७९ ॥

42. अथ कल्किपक्षे ॥ अनन्तो विष्णुरूपः गौः स्वर्गएव भूः स्थानं येषां ते गोभुवो देवाः तेभ्य ऊतिः प्राप्तिर्यस्य स गोभूतिर्देवदत्तः तथा भूतो यः विशेषेण सारस्सरणं येन स यानभूतो घोटक इत्यर्थः तेन सह कल्पितः प्रकर्षेण भूतानामिव तेजो येषां तेषां पिशाचसदृशानां म्लेच्छानामित्यर्थः अवलव्युच्छेदीयः क्रमस्सञ्चारस्तेनोदयो यस्य स कल्कीत्यर्थः उक्तञ्च भागवते 'अश्वमाशुगमारुह्यदेवदत्तं जगत्पतिः । असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः । विचरन्नाशुनाक्षोण्यां हयेनाप्रतिमद्युतिः । नृपलिङ्गच्छन्दो दस्यून् कोटिशो निहनिष्यती'ति ॥ ८० ॥

यद्वा ॥ अनन्तानामनेकेषां गोभूतौ वेदे गवि पृथिव्यां भूत्या ऐश्वर्येण हेतुना वा विसारकल्पितमन्याय्यकल्पनं येषां तेषां प्रभूतानां प्राणिनां पापात्मनामित्यर्थः तेजोबलवीप्रभावोच्छेदीयः क्रमः सञ्चारः तस्मै उदयोऽवतारो यस्य स कल्किरूपो भगवानित्यर्थः ॥ ८१ ॥

43. एवं पुरुषदेवान् प्रस्तुत्य इदानीं 'गणेशजननी दुर्गा राधा लक्ष्मीस्सरस्वती । सावित्री च सृष्टिविधौ प्रकृतिः पञ्चधा स्मृता' ॥ इति देवीभागवतादौ पञ्चानामेव प्रकृतीनां प्राधान्यात् क्रमेण ताः प्रस्तूयन्ते ॥ तत्रादौ दुर्गापक्षे ॥ अनन्तानामपरिमितानां गोभूतीनां देवानां विसारेभ्यो विशिष्टस्थिरांशेभ्यः कल्पितं समुत्थितं यत् प्रभूतं तेजः तद्बलेन तद्रूपेण विक्रामतीति विक्रा सञ्चारिणी या, मा, मान्यते पूज्यते सर्वैरिति व्युत्पत्त्या लोकमाता दुर्गेत्यर्थः ॥ तस्या उदयआविर्भावः उक्तञ्च मार्कण्डेये 'अतुलं तत्र तत्तेजः सर्वदेव शरीरजं । एकस्थं तदभून्नारी व्याप्तलोकत्रयं त्विषे'त्यादि चण्डिकास्तोत्रे ॥ ८२ ॥

यद्वा ॥ अनन्तानां गोभूतीनां देवानां विसारकल्पिते विबलकल्पने प्रभूतं तेजः प्रभावो यस्य सचासौ अप्सु अलति पर्याप्नोतीति अवलो महिषः पचाद्यच् लुलापत्वात् कासारत्वाच्च 'लुलापो महिषो-वाहद्विषत्कासरसैरिभा' इत्यमरः ॥ यद्वा बलमस्यास्तीति बलः अर्श आद्यच् बली महिष इति जटाधरः तस्मिन् महिषासुरे विक्रमः शक्तिसम्पत्तिः सञ्चारो वा यस्यास्सा महिषमर्दिनी दुर्गेत्यर्थः ॥ तस्या उदयः ॥ ८३

अथवा ॥ अनन्ता नित्यत्वादिना तत्पदवाच्या अनन्ता पार्वतीति मेदिनी गोभूतिर्जलजः शङ्खः विशिष्टं सारं चक्रञ्च ताभ्यां कल्पिता शङ्खचक्रधरेत्यर्थः ॥ प्रभूतं तेजः पराक्रमो यस्य स प्रभूततेजाः सिंहः भीमविक्रमः, विक्रान्तः विक्रमीत्यादि सिंहपर्यायाणां शब्दरत्नावल्यादौ दृष्टत्वात् अवलो बलो वा महिषश्च तयोरुपरिविक्रामतीति विक्राच तथाभूताया, मा लोकमाता दुर्गा तस्या उदय इत्यर्थः ॥ एतेन 'चतुर्भुजां शङ्खचक्रधरां बालां सुरूपिणीं। उद्यत्त्रिशूल निर्भिन्नमहिषां सिंहवाहिनी'मिति ध्यानस्वरूपमुक्तं वेदि-तव्यम् ॥ अत्र सर्वत्र विशेष्यविशेषणसमासे भाषितपुंस्कत्वात् पुंवत्कर्मधारयेति स्त्रियां पुंवद्भावो बोध्यः एवमुत्तरत्रापि ॥ ८४ ॥

यद्वा ॥ अनन्तस्सर्पः गौर्वृषभः भूतिर्भस्म च तान्येव विशिष्टं सारं धनं कल्पितं यस्य तस्य हीनोप-करणस्यापि शिवस्येत्यर्थः ॥ प्रभूतं तेजो ययाहेतुना तस्या बलविक्रमाया महिषमर्दिन्या दुर्गाया उदय इत्यर्थः ॥ 'शिवश्शक्त्या युक्तो यदि भवति शक्तः प्रभवितु'मित्याद्यत्र प्रमाणम् ॥ ८५ ॥

44. राधापक्षे ॥ अनन्ते आकाशमण्डले नास्त्यन्तो नाशो यस्येति व्युत्पत्त्या अविनाशिनि वागवि गोलोके भूतिर्भवनं यस्य तस्मिन्विसारे विपरीताः सकाराकाररकारावाचकशब्दे यस्य तस्मिन् रासे इत्यर्थः ॥ कल्पितो निरूपितो यः प्रभुः श्रीकृष्णः तेनोताभ्यामालिङ्गिताभ्यां तेजोबलाभ्यां रुग्रूपाभ्यां विक्रीडत इति विक्रा, या, मा, लोकमाता राधा तस्या उदयआविर्भाव इत्यर्थः ॥ गोलोके राधाकृष्णयो रासक्रीडाया नित्यता ब्रह्मवैवर्तादाववगन्तव्या ॥ ८६ ॥

अथवा ॥ अनन्ता अपरिमिता गवां सुरभीणां भूतिस्सम्पत् यस्मिन् तस्मिन् विसारे विशिष्टविपिने वृन्दावने इत्यर्थः ॥ कल्पितं प्रभूतं तेजो दीप्तिर्यासां तास्तथाभूता अबला गोपस्त्रियो येन यस्माद्वा स श्रीकृष्ण इत्यर्थः ॥ तेनसह विक्रा वृन्दावने गोपिकापरिवेष्टितश्रीकृष्णेनसह विहारिणीत्यर्थः ॥ यामामाता राधिका तस्या उदय इत्यर्थः ॥ ८७ ॥

यद्वा ॥ अनन्ताय श्रीकृष्णाय तं प्रीणयितुमित्यर्थः ॥ गोः सूर्याद्भूतिरुत्पत्तिर्यस्याः सा गोभूति-र्यमुना तस्यां विसारेभ्यो नलिनेभ्यः कल्पिता अवतीर्णा तेषु स्थिता वा प्रभूत तेजोबलाभ्यां अतिशयित-लावण्यरूपाभ्यामुपलक्षिता सती विक्राविहारिणी विनिर्गता वा या, माराधिका तस्या उदय इत्यर्थः ॥ यथा च कालिन्दीपद्मषण्डात् राधायाः प्रादुर्भावः तस्मिन् स्थितिश्च तद्विस्तरं वासुदेवरहस्ये राधातन्त्रे पष्ठादिपटलेषु द्रष्टव्यम् ॥ ८८ ॥

अथवा ॥ अनन्तेन श्रीकृष्णेन सह गोभूतेर्यमुनायाः विसारेषु तत्तटविपिनेषु विशेषेण जलेषु वा कल्पिताभ्यां प्रसाधनादिना समुत्पादिताभ्यां प्रभूताभ्यामुचिताभ्यां लावण्यरूपाभ्यामुपलक्षीभूय विक्रा-विहारिणी या मा जगज्जननी राधिका तस्या उदयआश्रयमित्यर्थः ॥ ८९ ॥

45. लक्ष्मीपक्षे ॥ अनन्ता अपरिमिता गोभूतिस्स्वर्गसम्पत्तिः तस्या विसारो विगमः विशेषेण सारस्समागमश्च तयोरेकशेषः ताभ्यां कल्पितं क्षयितं सम्पादितं च कल्पितं च कल्पितमिति द्वन्द्वैकशेषे नपुंसकैकवचनं प्रभूतं प्रचुरं तेजः प्रभावो यस्य स तथाभूतो बलविक्रइन्द्रो यया सा तथोक्ता या मा लोकमाता लक्ष्मीः तस्या उदयआविर्भावः ॥ ९० ॥

अयमर्थः पृथग्वा समर्थनीयः अनन्तगोभूतेर परिमितस्वर्गसम्पत्तेः विसारेण विगमेन विनाशेनेति यावत् कल्पितं क्षयितं प्रभूतं तेजो यस्य स तथाभूतो बलविक्र इन्द्रो यया तस्या मायाः लक्ष्म्या उदय इत्येकोऽर्थः ॥ ९१ ॥

अनन्ताया गोभूतेस्स्वर्गसम्पत्तेः विशेषेण सरणं सारः समागमः प्राप्तिरित्यनर्थान्तरं तेन कल्पितं सम्पादितं प्रभूतं तेजो यस्य स तथाभूतो बलविक्र इन्द्रो यया तस्या मायाः उदय इत्यपरोऽर्थः अत्रोक्तार्थेषु दुर्वाससश्शापेन लक्ष्म्या विरहितो हतसर्वस्सम्पदिन्द्रः पुनः समुद्रमथनादाविर्भूतया तया प्राप्तसर्वस्सम्पच्चेति पौराणिकी कथा वेदितव्या ॥ ९२ ॥

अथवा ॥ अनन्तगोभूतेरपरिमितजलसम्पत्तेः समुद्रात् विसारेण संसरणेन आविर्भावेनेत्यर्थः कल्पितप्रभूततेजोबलः प्राप्तप्रचुरदीप्त्यतिशयः विक्रो गरुडसञ्चारी विष्णुर्यया तस्या मायाः उदयः ॥ ९३ ॥

यद्वा ॥ अनन्तस्य विष्णोः गवोर्नेत्रयोः भूतिस्सम्पद्रूपा विसारे पद्मे ताभ्यां पद्माभ्यां वा कल्पिता उपविष्टा युक्ता वा पद्मस्थितत्वात् पद्मकरत्वाच्च प्रभूतं तेजो दीप्तिर्यस्यास्सा च कान्त्या काञ्चनसन्निभेत्यादिध्यानमन्त्रानुरुन्धेयं प्रभूतानां प्राणिनां तेजो दीप्तिर्यस्या हेतोरिति वा सा तथोक्ता प्राणिनां सम्पद्रूपत्वादिति भावः बलविनः समुद्रात् क्रामति सञ्चरतीति बलविक्रा च क्षीराब्धितनयात्वात् उक्तरूपा या मा लक्ष्मीस्तस्या उदयः प्रादुर्भाव इत्यर्थः ॥ ९४ ॥

46. सरस्वतीपक्षे ॥ अनन्ते विष्णौ तत्समीप इत्यर्थः यद्वा अनन्ताय विष्णवे तं सम्भोक्तुमित्यर्थः गोभूतिर्वाक्सम्पत्तिः सैव विशिष्टस्सारः पाशकः द्यूतमितियावत् । 'सारः पाशक' इति शब्दरत्नावली तेन वाक्कलहरूपद्यूतविशेषेण कल्पितं क्षयितं प्रभूतं तेजोबलं प्रागल्भ्यशक्तिर्यस्यास्सा अतएव विरुध्य क्रोशति । अयि दुष्टे? इत्यादिरूपेणाह्वयति क्रुध्यतीति वा विक्राच कृश आह्वाने रोदने च क्रुध क्रोधे इत्यस्माद्वा धातोः अन्यत्रापि दृश्यत इति डः तथाभूता मा लक्ष्मीर्यया सा सरस्वतीत्यर्थः तस्या उदय आविर्भावः सरस्वत्या विष्णुपत्नीत्वमपि पुराणप्रसिद्धम् ॥ ९५ ॥

यद्वा ॥ अनन्तानां गवां वेदादिवचनानां भूतिर्वादनेनोत्पत्तिर्यस्मात्तत्तथाभूतं विशिष्टस्सारः कोणाख्यं धनुराद्याकार वीणादिवादनं तदेव सारः सारिः सारिकेत्यादिनामभिर्व्यवह्रियते तस्य कल्पितं कल्पनं भावे क्तः नियोजनमित्यर्थः तस्य प्रभूः प्रकृष्टा भूमिश्च अथवा विसारो मत्स्यः तत्कल्पः तत्सदृशः कच्छपः स सञ्जातोऽस्य विसारकल्पितः कच्छपाकाराकारितावयवविशेषः तस्य प्रभूस्स्थानं विशेषेण सारं जलं यस्मिन् तस्मिन् जलप्राये प्रदेशे कल्पितो निरूपितः कच्छपः तदाकार इत्यर्थः तस्य प्रकृष्टा भूस्स्थानमिति वार्थः सरस्वत्यास्तु कच्छपीति तद्वीणायास्तदाकारचिह्नितत्वात् तथाभूतं यत् ततं वीणावाद्यं "ततं वीणादिकं वाद्य"मित्यमरः तत् ईजेते प्राप्नुत इति ईजसौ ईज गति-

कुत्सनयोरिति धातोः सर्वधा तुभ्योऽसुन्नित्यसुन् प्रत्ययः बलं रूपं विक्रमः पराक्रमश्च तौ यस्यास्सा तथोक्ता यथोक्तवीणानुरूपरूपपराक्रमशालिनीत्यर्थः तस्यास्सरस्वत्या उदयः ॥ ९६ ॥

अथवा ॥ अनन्ता गोभूतिर्वाक्सम्पत्तिर्यस्यास्सा वागधिष्ठात्रीत्वात् विसारे पद्मे कल्पिता उपविष्टा च प्रभूततेजोबला प्रचुरप्रभावशक्तियुक्ता प्रचुरलावण्यरूपगुणा वा 'या कुन्देन्दुतुषारहार धवळा या श्वेतपद्मासने' त्यादि तद्ध्यानं यद्वा विसारकल्पितस्य कमलासनस्य ब्रह्मणः प्रभूतेषु उत्पत्तिमत्सु भूतभौतिकसृष्टिष्वित्यर्थः तेजोबलं प्रभावशक्तिर्यस्या हेतोः सायां वाक्शक्तिं समाश्रित्य वेदविद्ब्रह्मा जगन्निर्माणे शक्त इति भावः वौ पक्षिणि हंसे क्रामतीति विक्रा च या मा लोकमाता सरस्वती तस्या उदय इत्यर्थः सरस्वत्या हंसवाहनं "दिव्यैराभरणैर्विभूषिततनुं हंसाधिरूढां भजे" इति तद्ध्यानान्तरे उक्तं ब्रह्मशक्तित्वमपि सुप्रसिद्धम् ॥ ९७ ॥

यद्वा अनन्तगोभूत्या असीमवाक्सम्पत्त्या विसारा निर्धना अपि कल्पिता ये प्रभूता जनाः तेषां तेजोबलं प्रागल्भ्यशक्तिर्यस्या हेतोः सा तथोक्तां या मा सरस्वती तस्या उदय इत्यर्थः ॥ ९८ ॥

47. सावित्रीपक्षे ॥ अनन्ता अविनाशिनी गोभूतिः ज्योतीरूपा सम्पत् यस्मिन् ज्योतिषः किरणात्मकत्वात् तस्मिन् नित्ये ज्योतिर्मये सत्यलोकाख्ये ब्रह्मभुवने इत्यर्थः अनन्तगोभूतिरिति ब्रह्मणो वा विशेषणं नित्यज्योतिस्स्वरूप इति तदर्थः विसारकल्पितः कमलासनो यः प्रभुः लोकेशो ब्रह्मा तेन ऊताभ्यामालिङ्गिताभ्यां तेजोबलाभ्यां रूपाभ्यां सह विक्रीडते विक्रामतीति वा विक्रा सत्यलोके ब्रह्मसहचारिणीत्यर्थः तथाभूता यामा लोकमाता सावित्रीत्यर्थः तस्या उदय आविर्भाव इत्यर्थः ॥ ९९ ॥

यद्वा ॥ अनन्तगोभूतेः निखिलवाङ्निधानस्य वेदस्य विसारकल्पितं विस्तृतिकल्पनं यतः सा वेदमातृत्वात् यद्वा अनन्तमन्तरिक्षं भुवो रूपं गौस्स्वर्गः स्वस्स्वरूपं भूश्च तासां भूर्भुवस्स्वःस्वरूपाणां व्याहृतीनां ऊतिः संश्लेषः समष्टिरूपतेत्यर्थः ॥ विसारो विस्तृतिश्च व्यष्टिरूपतेत्यर्थः ॥ ताभ्यां कल्पिता समष्टिरूपेण ओङ्कारपदवाच्या व्याहृतिपदवाच्या वा व्यष्टिरूपेण भूरादिपदवाच्या सावित्र्यादिपदवाच्या वेत्यर्थः ॥ प्रभूततेजसा सत्यात्मब्रह्मतेजसा अवति दीप्यत इति प्रभूततेजोऽवा अवतेः पचाद्यच् "लवौ रवौ सूर्यमण्डले" इत्यर्थः ॥ रलयोरैक्यात् विक्रीडत इति विक्रा च या मा सावित्री तस्या उदय इत्यर्थः ॥ १००॥

अथवा ॥ अनन्ता अपरिच्छिन्नस्वरूपा गोस्सूर्यस्य भूतावुदये विसारे विगमे अस्तमये इत्यर्थः ॥ उपलक्षणान्मध्याह्ने च कल्पिता ध्येयत्वेन ध्यातृभिर्निरूपिता सन्ध्यात्रयस्वरूपेत्यर्थः ॥ सन्ध्यापदेन तदभिमानिनी देवतोच्यते सन्ध्यामुपासीतेत्यादि श्रुतेः प्रथमं भूतं भूतिरुत्पत्तिर्येषां ते प्रभूता अग्रजन्मनः तेषां ब्राह्मणानां तेजोबलं ब्राह्मं यस्या हेतोः सावौ हंसे क्रामतीति विक्राच या मा सावित्री तस्या उदय इत्यर्थः ॥ १०१ ॥

अथ सन्ध्यारूपाया एव तस्या गायत्री सावित्री सरस्वती रूपैर्भेदत्रयं क्रमेण व्याख्यायते यथा अनन्ते नित्ये सत्यलोकाख्ये गवि भूमौ ब्रह्मलोक इत्यर्थः ॥ भूतिस्स्थितिर्यस्यास्सा ब्रह्माणीं ब्रह्मदैवत्यां ब्रह्मलोकनिवासिनीमित्युक्तेः यद्वा अनन्ता नित्यस्वरूपा गवि सूर्यमण्डले भूतिस्स्थितिर्यस्यास्सा च

विसारकल्पितः कमलासनो ब्रह्मा तस्यैव प्रभूततेजोबलविक्रमा यस्याः सा तथोक्ता च ब्रह्मसमानदीप्ति रूपपराक्रमशालिनीत्यर्थः ॥ तस्यास्तदुपलक्षितायाः प्रातस्सन्ध्याधिष्ठात्र्याः गायत्रीरूपाया ब्रह्मोक्तेरित्यर्थः ॥ उदयआविर्भावः उक्तञ्च महाप्रयोगसारादौ गायत्रीमुपक्रम्य। 'कुमारीमृग्वेदयुतां ब्रह्मरूपां विचिन्तयेत्। हंसस्थितां कुशहस्तां सूर्यमण्डलसंस्थिता'मिति ॥ १०२ ॥

अन्यत्र अनन्तस्य विष्णोः गवि भूमौ वैकुण्ठे इत्यर्थः॥ भूतिस्स्थितिर्यस्यास्सा अनन्ता नित्या गोभूतिः सूर्यमण्डलमध्यस्था वा पूर्ववत् विपु पक्षिपु सारः श्रेष्ठो गरुडः तस्मिन् कल्पितो विष्णुः तस्यैव प्रभूततेजआदयो यस्याः सा तथोक्ता च विष्णुसमानतेजोरूपादिमतीत्यर्थः ॥ तस्यास्तदुपलक्षिताया मध्याह्नसन्ध्याधिष्ठात्र्याः सावित्रीरूपाया विष्णुशक्तेरुदयः उक्तञ्च तद्ध्याने "मध्याह्ने विष्णुरूपां च तार्क्ष्यस्थां पीतवाससीं। युवतीं च यजुर्वेदां सूर्यमण्डल संस्थिता"मित्यादि ॥ १०३ ॥

अपरत्र अनन्तगोभूतयो वासुकिवृषभस्थानि तान्येव विसारं न्यारय्यं वस्तु यस्य सोऽनन्त-गोभूतिविसारो रुद्रः तस्यैव कल्पिताः प्रभूततेजआदयो यस्याः सा तथोक्ता रुद्रसमानरूपा सायं-सन्ध्याधिष्ठात्री सरस्वतीरूपा रुद्रशक्तिरित्यर्थः ॥ तस्या उदयः उक्तञ्च "सायाह्ने शिवरूपां च वृद्धां वृषभवाहिनीं। सूर्यमण्डलमध्यस्थां सामवेदसमायुता"मिति ॥ १०४ ॥

अथवा ॥ अनन्तो विष्णुः गवि वृषे भूतिस्स्थितिर्यस्य स गोभूतिर्वृषवाहनो रुद्रः विसारकल्पितः पद्मासनो ब्रह्मा च तेषामेव प्रभूतैस्तेज आदिभिः सावित्रीगायत्रीसरस्वतीभेदभिन्नैरित्यर्थः ॥ विक्रा विहारिणी या मा माता परब्रह्मशक्तिः तस्या उदयइत्यर्थः ॥ अत्रोक्तव्याख्यात्रये सावित्र्या रुद्ररूपत्वं सरस्वत्या विष्णुरूपत्वञ्च स्मृत्यन्तरसम्मतमिति तथैव वा व्याख्येयं वङ्गोत्कलशिष्टसम्मतपक्षएवास्माभि-स्समर्थितः किन्त्वत्रापि केचिद्यजुश्शाखिनः सरस्वतीं शुभ्रवर्णादित्वेन सावित्रीं कृष्णवर्णादित्वेन वर्णयन्ति। ऋग्वेदिनः सावित्रीं रुद्ररूपिणीं वर्णयन्ति तत्र शाखाभेदेन सर्वमेव सप्रमाणं प्रत्येतव्यम् ॥ १०५॥

48. अथ षट्चक्रदेवताः प्रस्तूयन्ते ॥

तत्रादौ कुण्डलिनीमुपक्रम्य व्याख्यायते यथा अनन्तं नित्यमपरिच्छिन्नस्वरूपं वा अतिसूक्ष्मत्वात् दुर्लक्ष्यत्वात् केवलं ज्ञानगम्यत्वाच्चेति भावः गोः पृथिव्याः भूतिस्स्थितिर्यस्मिन् तथाभूतं यत् विसारं मूलाधारपद्मं चतुर्दलपद्ममित्यर्थः ॥ तस्मिन् कल्पितो निरूपितो यः प्रभुः स्वयम्भुलिङ्गरूपः तत्रऊतमा-लिङ्गितं सार्धत्रिवलयाकारेण संश्लिष्टमित्यर्थः ॥ यत्तेजः तद्बलेन तद्रूपेण ज्योतीरूपेणेत्यर्थः ॥ विक्रा विहारिणी या मा लोकजननी कुण्डलिनीशक्तिरित्यर्थः ॥ तस्या उदयआविर्भावः उक्तञ्च तन्त्रसारे 'ध्यायेत्कुण्डलिनीं सूक्ष्मां मूलाधारनिवासिनीं। तामिष्टदेवतारूपां सार्धत्रिवलयान्वितां। कोटि-सौदामिनीभासां स्वयम्भुलिङ्गवेष्टिनी'मित्यादि ॥ १०६ ॥

49 तत्रैवाधारचक्रे देवतान्तरपक्षे ॥ अनन्ते अतिसूक्ष्मत्वादिगुणयुक्ते अनन्ता इति देवानां वा विशेषणं गोभूतिविसारे भूपुरपद्मे कल्पिताः योगज्ञैर्निरूपिताः प्रभूतं तेजो दीप्तिः बलं रूपं सामर्थ्यं वा विक्रमस्सञ्चारश्च ते येषान्ते डाकिनी ब्रह्मादयः तेषामुदयएकत्वेनाविर्भावः एवमुत्तरत्रापि अत्र चक्रे

अधिष्ठात्री डाकिनी ब्रह्मशक्तिः अधिष्ठाता ब्रह्मा मतान्तरे गणेशः खङ्गीश वारुण्यादयो दळदेवताः इत्यादि तद्विस्तरः तत्वचिन्तामणिसमुच्चयादिषु द्रष्टव्यः ॥ १०७ ॥

50. अथ स्वाधिष्ठाने ॥ अनन्ते अनन्तानां वा पूर्ववत् गोर्जलस्य भूतिर्यस्मिन् तस्मिन् विसारे षड्दले स्वाधिष्ठानाख्ये लिङ्गपद्मे कल्पितप्रभूततेजोबलविक्रमाणां राकिनी विष्णवादीनामुदय इति पूर्ववत् अत्र चक्रे राकिनी विष्ण्वोरधिष्ठातृत्वं छ गलण्डकपर्दिन्यादयो दलदेवता बोध्याः ॥ १०८ ॥

51. अथ मणिपुरे अनन्ते अनन्तानां वा गोः जलस्य भूरुत्पत्तिस्थानं गोर्जलाद्भवतीति वा गोभूरग्निः अग्नेर्जलप्रभवत्वे जलोत्पत्तिकत्वे च प्रमाणं पूर्वमुक्तं तस्याग्नेरूतिराश्लेषः द्युतिः प्राप्तिर्वा यस्मिन् तस्मिन् विसारे नाभिपद्मे दशदले मणिपुरचक्रे इत्यर्थः॥ अन्यत्पूर्ववत् अत्र लाकिनीरुद्रावधिष्ठातारौ दारुकरूपिण्यादयो दलदेवता ज्ञातव्याः ॥ १०९ ॥

52. अथानाहते अनन्ते अनन्तानां वा गोस्सूर्यस्य भूतिस्स्थितिर्यस्मन् सूर्यस्येव वा भूतिस्सम्पत् यस्य तस्मिन् ॥ विसारे हृदयपद्मे द्वादशदळे अनाहतचक्रे इत्यर्थः द्वादशदलपद्मस्य सूर्यात्मकत्वमागमप्रसिद्धं । अन्यत्पूर्ववत् अत्राधिष्ठातारौ काकिनीश्वरौ क्रोधीशमहाकाल्यादयो दलदेवताः ॥ ११० ॥

53. अथ विशुद्धे ॥ अनन्तमाकाशरूपाया गौर्भूमिः तस्याभूतिस्स्थितिर्यस्मिन् तस्मिन् विसारे कण्ठपद्मे षोडशदले विशुद्धचक्रे इत्यर्थः अत्र शाकिनीरुदाशिवौ मुख्यौ श्रीकण्ठपूर्णोदर्यादयो दलदेवताः अन्यत्पूर्ववत् ॥ १११ ॥

54. अथाज्ञाचक्रे ॥ अनन्ते नित्यत्वादिगुणयुक्ते गवोर्नेत्रयोः तदुपरिभागे भ्रूमध्ये इत्यर्थः ऊतिः स्थितिर्यस्य तस्मिन् विसारे पद्मे यद्वा अनन्ते अविनाशिन्यपरिच्छिन्नस्वरूपे परब्रह्मणि तत्साक्षात्कारे विषये इत्यर्थः गोर्नेत्रस्येव भूतिस्सम्पद्यस्य तस्मिन् ब्रह्मसाक्षात्कारद्वारभूते इत्यर्थः तदेव ब्रह्मद्वारमित्यागमं अथवा अनन्तो हकारः अनन्ता क्षकारश्च शुक्रश्चाथहकारोंऽशः प्राणस्सान्तश्शिवो वियत् । अकुलो नकुलीशश्च हंसः शून्यश्च हाकिनी । अनन्तो नकुली जीवः परमात्मा ललाट ज इति क्षकारमुपक्रम्य मुखं कव्यवहानन्ता कालजिह्वागणेश्वर इति च वर्णाभिधानं तयोः पुमान् स्त्रियेत्येकशेषे अनन्तौ हक्षवर्णौ तयोः गोभूतिर्भूरुत्पत्तिर्यस्मिन् तस्मिन्विसारे हक्षबीजाश्रये भ्रूमध्ये द्विदलकमले आज्ञाचक्रे इत्यर्थः अत्र हाकिनीशिवौ प्रधानौ लकुलीशमहालक्ष्मादयो दलदेवताः । अन्यदुक्तवत् ॥ ११२ ॥

55. अथाज्ञाचक्रोपरि प्रणवस्वरूपं प्रस्तूयते अनन्तगोभूतिरपरिमितवाक्सम्पत्तिर्वेदः तस्य विशेषेण सारः स्थिरांशरूपः प्रणवः आदिबीजं वेदसारो वेदबीजमतःपरमित्यादिप्रणवबीजाभिधानं तन्त्रे तेन प्रणवरूपेण कल्पितं यत् प्रभूतं तेजः तद्बलेन तद्रूपेण विक्रमःसञ्चारो यस्य तस्योदयः प्रणवात्मकनित्यज्योतीरूपेण प्रकाशमानस्य परब्रह्मण आविर्भावः ॥ ११३ ॥

56. अथ शान्ताकारः प्रस्तूयते । अनन्तो विष्णुः तेन अकारः गोभूतिर्वृषवाहनो महेश्वरः तेन उकारः विसारकल्पितः पद्मासनो ब्रह्मा तेन मकारः तथाचोक्तं 'अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः । मकारेणोच्यते ब्रह्मा प्रणवेन त्रयो मता' इति ॥ तेषामकारोकार मकाराणां समाहार ओङ्कारः

तस्मिन् प्रभूतः तदुपरि प्राप्तो बिन्दुः तत्र तेजोनादात्मकं तस्मिन् बलं शक्त्यात्मकं तदुपरि विक्रमस्सञ्चारो यस्य वेः पक्षिण इव क्रमस्सञ्चारो यस्य स हंसरूप इतिवार्थः हंसशब्दो जीववाचकः परमवाचकोऽपीत्यागमं शक्त्युपरि विरतक्रमः शान्ताकारो वा तदर्थः तथाभूतो यः परमात्मा तदुदय इत्यर्थः अत्र क्रमेणोक्ता अकारोकारमकारबिन्दुनादशक्तिशान्ताख्या ओङ्कारस्य सप्तावयवा योगशास्त्रेषु प्रसिद्धा वेदितव्याः ॥ ११४ ॥

57. अथ सहस्रारं प्रस्तूयते ॥ अनन्ता अविनाशिनी गोभूतिर्ज्योतिस्सम्पत्तिः स्वर्गसम्पत्तिर्वा यस्मिन् तस्मिन्विसारे शिरस्स्थाधोमुखसहस्रदलकमले इत्यर्थः कल्पितं निरूपितं यत्प्रभूतं तेजः परब्रह्मात्मकं तद्बलेन तद्रूपेण तच्छक्त्यात्मना वा विक्रामति विक्रीडत इति वा विक्रायामामातापरां वा तस्या उदयः परब्रह्मात्मकतेजश्शक्त्या सहविक्रमस्सञ्चारो यस्य परशिवस्य तदुदयो वा तत्तेजश्शक्त्या सञ्चारो येषां दलदेवतानां तदुदय इति वा समर्थनीयं सहस्रदले निखिलदेवतानां स्थितत्वमागमप्रसिद्धम् ॥ ११५ ॥

॥ इति शम् ॥



1 जीयाच्छ्रीजगदीश्वरो जगदिदं यः पाति मूर्त्यैकया
यो जार्जाद्यभिधानभागपरया तद्वत्तया भारतम् ।
यश्चापीह तृतीयया जयपुरं भर्तुं तयैव स्वयं
सोऽयं सम्प्रति राजते नरवरः श्रीविक्रमाख्याङ्कितः ।

2 भूनन्दाद्रिशशाङ्कसम्मितशके कृष्णे चतुर्थ्यां शुचौ
सूर्याह्ने वसुदैवतोडुनि रवौ युग्मे कविज्ञान्विते ।
साहीन्दौ मकरे कुजे मृगपतौ कर्केऽप्यगौ कौर्प्यगे
शौरौ लग्नयुते गुरौ क्रियगते यः प्रादुरासीत् क्षितौ ॥

3 काश्यालोकपदव्यतिष्ठितिवशाल्लोके प्रतिष्ठां गते
शीकाकोल इति प्रशस्तनगरे गङ्गाममध्याङ्किते ।
यस्मात्पर्वतपेण्ठनामकमधिष्ठानं द्विजानां कलौ
कल्क्याविर्भवनोद्भवामचकलच्छ्रीशम्भलस्य प्रभाम् ॥

4 गोत्रोत्पन्नविमाननप्रमथितं घूर्णाविनिर्णीतभू-
भागं स्वं जनकं परापहृतसर्वस्वं नदीनं तदा ।
यो जातो निजराजचिह्नकलितो देवः कलानां निधि-
र्दृष्टोऽसौ विदधे प्रमोदनसुधाकल्लोललोलत्तनुम् ॥

---

1 जार्जः पञ्चमजार्जः अत्रादिपदेन अष्टमएड्वादेः परिग्रहः ॥

2 १७९१ परिमिते शके तदनुसारेण १८६९ परिमिते क्रिष्ठाब्दे गौणाषाढबहुळचतुर्थ्यामस्य जन्मेत्यादिकं बोध्यम् ॥

3 पर्वतपेण्ठेति पर्वतालपेटा इति प्रसिद्धं ब्राह्मणशासनम् ॥

4 गोत्रेति कुलं मन्थाचलश्च स्वं जनकं कृष्णचन्द्रदेवाख्यं क्षीरसमुद्रं च नदीनो निर्भीकः नदीनामिनश्च राजा नृपश्चन्द्रश्च कला नृत्यादिकाः षोडशभागाश्च ज्येष्ठे भ्रातरि रामचन्द्रदेवे सिंहासनमधिरूढे वैमात्रेयभ्रातृतया तदवमानितोऽयं कृष्णचन्द्रदेवः पर्वतपेण्ठे निवसतिस्मेत्यादि पूर्वमुक्तं वेदितव्यम् ॥

5 विश्लिष्टं विधिना स्वनिष्क्रमवशादाक्रम्य सिंहासनं
शक्रोऽयं निजविक्रमेण भविता भूमौ हि दिव्यद्वपुः ।
इत्यालोच्य कुलक्रमाधिगतया नामक्रियोपक्रमे
चक्रे विक्रमदेव इत्यभिधया यं तत्पिता साङ्कितम् ॥

6 सोऽयं स्फीतवपुः क्रमादनुदिनं कृष्णान्तचन्द्रः स्वयं
स्वं तेजोविभवं व्यवर्धयदमुं रेखोदरान्निस्सृतम् ।
अप्याप्तो नगरीपदाढ्यकटकं यो वंशधारातटो-
पान्ते स्पष्टयति स्म यद्विलसनैस्तं चन्द्रभागाश्रिया ॥

7 प्रारम्भाद्धि विनोपदेशमपि यं प्राक्कर्मबीजाश्रयं
प्रापद्यन्त खलं कपोतकुलवद्विद्यास्समस्ता अपि ।
शास्त्रीयाखिलसाम्प्रदायिककथातत्वस्य लेशोऽर्पित-
स्तच्चित्ते विततिं किमाप न जले तैलस्य बिन्दुर्यथा ॥

8 आदौ दत्तकपुत्रतामुपगतः श्रीमल्लदुर्गेशितुः
प्रीभीकौन्सिलसद्विचारणदशा पश्चात्ततोऽपि च्युतः ।
यो मातापितृवञ्चितोऽल्पसमये वृत्त्याविहीनोऽपि सन्
सत्कार्याच्चलति स्म नाचलइव स्वं बाहुवीर्यं श्रयन् ॥

---

5 विक्रमेण विश्लिष्टस्याक्रमणात् दिव्यद्वपुष्ट्वाच्च विक्रमदेवनामास्य सार्थकमिति भावः ॥

6 कृष्णान्तचन्द्रः कृष्णचन्द्रदेवः कृष्णपक्षान्ते चन्द्रश्च तेजोविभवं रेतः प्रभवं कान्तिसम्पत्तिश्च रेखा तन्नाम्नी देवी कृष्णचन्द्रदेवस्य पत्नी चान्द्री लेखा च ॥

7 वृद्धा युवानः शिशवः कपोता खले यथामी युगपत्पतन्तीति न्यायात् पूर्वजन्माभ्यस्तास्सर्वा अपि विद्याः प्रापद्यन्तेत्यर्थः एतेनास्य ग्रहणधारणपठनपटुत्वं ऊहापोहवत्वञ्च सूचितम् ॥

8 अस्य दशमेवर्षे मातुः पञ्चदशे वर्षे पितुश्च लोकान्तरगतिर्वेदितव्या बाल्यसमयएवायं मल्लदुर्गाधिपस्य (माडगुल इति प्रसिद्धनगराधिपतेः) कृष्णभूपतेः दत्तपुत्रत्वं गतोऽपि तस्मात्परिभ्रष्ट इत्याद्यन्यत्र विस्तरः ॥

9 सत्संसेवनसत्कथाश्रवणसद्विद्यार्जनैकव्रती
य: स्थित्वा सुचिरं विशाखपटणे मान्योऽब्रिटीशानुगैः ।
वाण्या संस्कृतया परिष्कृततनूरौढ्याप्ररूढिं गत-
स्त्रैलिङ्ग्यात्र च लिङ्गितो मुदमगादाङ्ग्लाविदन्निङ्गितम् ॥

10 योपि स्वीयधिया जडीकृतचिराचारक्रियावत्स्थली-
प्रोद्भूताखिलनव्यनीतियवसान् कृत्वा स्वयं गर्भसात् ।
चिक्रीडे पुरुषर्षभोऽमितगुणो वाङ्नैचिकीप्रस्फुर-
द्गोष्ठीषु प्रणदन्मुहुस्तत इतो भ्राम्यन्कुतो वाप्यभीः ॥

11 वारं वारमनिष्टचिन्तितवतो भ्रातृव्यभावाश्रया-
दाबाल्याज्जरयाभिसन्धिततनोरास्कन्दनाक्लेदिनः ।
यस्याचिन्त्यचरित्रविक्रमविभोरुद्वाह आभाविते
श्रीकृष्णस्य हि रुक्मिणीपरिणयस्वान्तं समारोहति ॥

12 बन्धुव्यस्तपितृद्विजाश्रयकुटीजातं सरित्पारभू-
त्रातं लब्धसमुन्नतिं परपुरे तं वीक्ष्य पृथ्वीपतिम् ।
कः कंसार्दिततातवन्दिगृहजं कालिन्दिकान्यत्तटी-
गुप्तं साधितगौरवं मधुपुरे न द्वारके शं स्मरेत् ॥

---

10 जडीकृतेति मूकीकृता जलीकृता च ॥

11 भ्रातृव्यभावो भ्रातृजाभिप्रायः वैरञ्च तदाश्रयात् प्रकृते वैमात्रेयभ्रातृजाशयानुयायिनः कस्माच्चित् वैरपक्षात् ॥ जरयावार्द्धकावस्थया जरानाम्नी काचिद्राक्षसी जरासन्धस्य माता तया ॥

12 बन्धुः स्ववैमालेय भ्राता रामचन्द्रदेवो जयपुराधीश्वरः तेन व्यस्तः पिता कृष्णचन्द्रदेवो यस्यां तस्यां द्विजाश्रयकुट्यां शासनस्थ क्षुद्रगृहे जातं सरित् वंशधारानदी परपुरे विशाखपत्तनादौ ॥

13 साकारास्थिरलक्षणैर्ननु निराकारात्मनो या मही
राधा तत्परपूर्ववर्णविलसद्धामापहाराद्ध्रुवम् ।
सैषा राजमणेः समाद्भुततमा राज्ञीति हीराह्वया
धत्ते राजसधर्मिणी कुलशिरोऽलङ्कारहीरश्रियम् ॥

14 अस्यागर्भपटस्फुटा नरमणेस्तेजः प्रशस्तिच्छटां
बिभ्राणाभ्रमकृत्सुवर्णविकसद्रेखेति तन्नामिका ।
तातस्य स्वसृमातृनाम गुणयुग्यादेहलीदीपिका
सौभाग्यं सुभगा तनोति नितरां पित्रोः कुलोद्दीपिका ॥

15 प्राक्प्रह्लादनकृत्सुरेश्वरभुवः सा सौरभासन्निभा
लक्ष्मी सत्पदपूजितामजनयत्पद्मावतीं पद्मिनीम् ।
तत्पश्चादभवत्प्रतापजननी यस्मिंश्च दुर्मार्गिणां
त्राणाय श्रवणेन्द्रियस्य विषयो नारायणस्सारितः ॥

16 तार्तीयीकमपूरयत्स्ववपुषा यं वैधवांशं च सा
भूमावीश्वरशेखरोयमुदितो दिष्ट्या समृद्धिं गतः ।

---

13 निराकरः निराकारसिंहनामा राज्ञ्याः पिता आकारशून्यश्च महीपृथिवी तद्गता महनीया वा राधा गोलोकवासिनी गोपिका विशेषः विद्युद्वा वर्णोरूपमक्षरं च धाम तद्रूपाक्षरद्वयं तेजश्च हीति विस्मये ॥ राजत इति हीरा तन्नाम्नी राज्ञः पट्टमहिषी ॥

14. तन्नामिका सुवर्णरेखा नाम्नी तातस्य राज्ञः स्वसृनाम सुवर्णदेवी मातृनाम रेखादेवी ॥

15. सुरेश्वरस्तन्नामा राजपुत्र्याः श्वशुर इन्द्रश्च तस्य भूः इच्छानामकदुर्गं पूर्वा दिक्च । राजपुत्र्याः प्रथमगर्भोत्पन्नाया दुहितुः लक्ष्मीः पद्मावती चेति नामद्वयं तच्चरमजः प्रतापनारायणनामा । अत्र दुर्मार्गिणामित्यत्र दुर्मार्गशब्दो विपथपर्यायः । व्यध्वोदुरध्वो विपथ इत्यादि कोशात् ॥ ततो मत्व-र्थीये प्रत्यये न कापि क्षतिः सुकृतीत्यादिवत् यद्वा एकदेशीत्यादिप्रयोगात् साधुत्वम् ॥

16. विधुर्विष्णुश्चन्द्रमाश्च । तत्सम्बन्धी वैधवः ईश्वरः शिवः स्वामी च मातृवंशो मातामह-वंशः गोकुलञ्च अयं हि व्रजेन्द्रनारायणनामा राज्ञा विक्रमेण स्ववंशरक्षार्थं पुत्रिकापुत्रत्वेन स्वीकृतोपि पुनर्दत्तकत्वेन परिगृहीत इति परत्र बोध्यम् ॥

सम्भाव्यस्सहिमातृवंशविततौ यातो नरापत्यतां
तत्कृष्णप्रतिमो व्रजेन्द्रपदयुङ्नारायणाख्योऽभवत् ॥

17 शाके वह्निशिखा शराद्रिकुमिते ज्येष्ठे द्वितीयातिथौ
शुभ्रे शुभ्ररुचोदिने नरमणेर्दत्तात्मजत्वं गतः ।
यो राजद्युवराजराजिषु धराखण्डे नभोमण्डले
बिभ्राड्भावलिषुव्यभाद्विधुरिव श्रीरामकृष्णाभिधः ॥

18 इत्थं पुत्रकलत्र नप्तृसहितो द्वात्रिंशतार्कल्पिते
सोपानैः क्षितिपासने विलसितः श्रीविक्रमार्कश्रिया ।
यश्शङ्खारिगदाम्बजैर्भगवतो व्यस्तं करस्थैस्तनो-
र्भेदानामिह सूर्यवंशजनुषामुद्भामयत्यन्त्यताम् ॥

19 हन्तास्माकमिहोत्कले जनिमतामान्ध्रोद्भवानां तथा
सद्विद्याभ्यसनार्जितोन्नतिकथा शून्यात्मनां सर्वथा ।
मन्ये प्राक्तनपुण्यमेव फलितं यद्विश्वविद्यालया-
ध्यक्षस्थानमितोऽयमान्ध्रविषये स क्ष्माधवो विक्रमः ॥

20 पूतापूततमं गभीरहृदया गाम्भीर्यसीमातिगं
तत्वज्ञानकथावगाहनपरा संसेवितं तत्परैः ।

17. शाकेति 1857 परिमिते शके तदनुसारेण 1935 परिमिते क्रिस्ताब्दे जून्मासस्य तृतीय दिवसेऽस्य दत्तकपरिग्रहविधिना राज्ञा परिग्रहणं च कृतमिति बोध्यम् ॥

18. जयपुरस्य पूर्वराजधानी नन्दपुरे आसीत् । तत्र द्वात्रिंशत्सोपानकल्पितं सिंहासनं प्रसिद्धम् ॥ विष्णोः शङ्खचक्रगदापद्मैः केशवादिमूर्तिभेदाः चतुर्विंशतिप्रकाराः सुप्रसिद्धाः तत्रान्तिमः कृष्णः ॥

19. एतस्य राजसिंहासनारोहणोत्तरकालमेव आन्ध्रविश्वविद्यालयाधिकृतत्वमपि प्राप्तमिति बोध्यम् ॥

20. भारतीतीर्थइति विशाखपत्तनप्रतिष्ठापितपण्डितसभाविशेषः स च प्रतिवर्षं वसन्तसमये भवति । तत्रार्यं महाराजः सभापतित्वेन निरूपित इति बोध्यम् ॥

दानध्यानपरोपकारनिरतैर्जुष्टा च तेषूत्कटं
सत्तीर्थं पतिरूपतो वृतवती यं भारती तीर्थभूः ॥

21 सानेनैव नभस्थलीव विधुना तारावलीकल्पिता
वन्या पल्लवितद्रुमौघवितता मान्येव भूमीभृता ।
उत्फुल्ला वकुलेन पुष्पनिवहैर्वाटीव वासन्तिका
विद्वद्राजियुतात्र राजकविना रेजे वसन्तोत्सवे ॥

22 पादस्पर्शविकासितैः सुमनसां वारैः स्वकीयैर्यथा
चन्द्रं कैरविणी रविं कमलिनी सौभाग्यदं स्वात्मनः ।
नारीतल्लजमप्यशोकवनिका लोकस्य पूजाश्रया
पूजार्हैरपि पूजनीयमपि सा तैस्तं तथाऽपूजयत् ॥

23 पात्रौघान्तरसंस्कृतोर्चनभुवं शङ्खो विशेषार्घ्यभाक्
दीप्रो वा शतवर्तिमध्यकलितः कर्पूरपुञ्जो यथा ।
मुक्ताहारविराजितश्च तरलो वक्षोजभूमिं स्त्रियाः
सोयं पण्डितमण्डलीविलसितोऽप्येनां तथाऽमण्डयत् ॥

24 तिग्मांशुर्हिमगुश्च दिक्ततिमिव व्याप्तां स्वकीयांशुभिः
कीर्णां ध्मातधनञ्जयो रसवतीं स्वीयैस्स्फुलिङ्गैरिव ।
पूर्णां पर्णपुटीं स्फुटाब्जमुकुलस्स्वैर्वा परागैश्च तां
युक्तां स्वानुगतैरभासयदयं तीक्ष्णैरतीक्ष्णैरपि ॥

---

21. सा भारतीतीर्थभूः ॥

22. पादो रश्मिः चरणं च सुमनसः पुष्पाणि पण्डिताश्च ॥

25 वाचोयुक्तिसमर्थवाक्पतिवचो विन्याससंसेविनी
तर्कात्साम्यसमर्थयत्कविगिरां सम्पर्कसन्यासिनी ।
नासत्यप्रथिता च या वसुमती या यत्र नाकोन्नतिः
सा तेनैव दधौ बुधाधिपतिना धन्या सुधर्मा श्रियम् ॥

26 यद्वत्कीर्तनमण्डली परिवृतो मार्दङ्गिकस्तालिकै-
र्यद्वन्नाट्यभुवं नटैरभिमतः सत्सूत्रधारोऽपि वा ।
ऋत्विग्भिः परिपूजितोऽप्यथ यथा वेदिं समिद्धोऽनलः
तां नालङ्कृतवान् स किं विविधवाग्विद्भिस्समाराधितः ॥

27 या रम्भाधिकचातुरीविलसितैर्विद्याधरैश्शोभिनी
विज्ञानाश्रितविश्वकर्मकलितप्रावीण्यविद्योतिनी ।
या चाप्यादरभूमिका सुकृतिनां प्राप्या न दुष्कर्मणां
सम्प्राप्यैव च देवराट् श्रियमधाद्धन्यस्सुधर्मां स ताम् ॥

28 यामासाद्य नृपोऽभ्यपेचि विबुधैस्साहित्यसम्राट्पदे
यं भर्तारमुपेत्य यापि विदुषां संसत्सु साम्राज्यभाक् ।
या सूते स्म च मादृशानपि महोपाध्यायनामादिकान्
तां तीर्थान्वितभारतीपरिषदं वन्दे विदां मातरम् ॥

---

25. वाक्पतिः वाग्मी बृहस्पतिश्च कविः काव्यरचयिता शुक्रश्च नासत्येति असत्यं वितथं नासत्यौ स्वर्वैद्यौ वसवो देवभेदाः वसूनि धनानि च नाकेत्यत्र अकं दुःखं नाकः स्वर्गश्च बुधाधिपतिः पण्डिताधिपतिः सुराधिपतिश्च ॥

27. या रम्भेति आरम्भो रम्भाख्याप्सरोविशेषश्च विद्याधराः मन्त्रयन्त्रादि विद्यानां धराः देवयोनिविशेषाश्च विश्वकर्म निखिलकर्म विश्वकर्मा देवशिल्पी च देवराट् देवश्चासौ राट् इन्द्रश्च ॥

28. 1933 परिमिते क्रिष्टाब्दे उपाधिप्राप्तिर्वेदितव्या ॥

29 येनान्ध्रौद्रहितैषिणात्र नितरां वैदेशिकाहिस्फुर-
दुर्भाषाविषमूर्च्छितामरनुता विद्यानवद्यापि सा ।
निस्तन्द्रं तरसा नरेन्द्रपरिषच्चन्द्रेण सम्मन्त्रिता
प्राणैर्युज्यत इत्यमन्दकृतिनं तञ्चापि वन्दामहे ॥

30 यो विद्याभवने विशाखपटणे तीर्थेशितुः स्पर्द्धया
वार्द्धेस्तत्सविधेः स्वकं प्रकटयन् तीर्थाधिपत्यं तथा ।
दूरागन्तुकदूरदर्शिमहितस्फूर्जेद्वचोवीचिभि-
र्गर्जन्नुच्चतरं स्म तर्जयति तं तद्घोषमामोषयन् ॥

31 यस्यान्तर्निहितस्सदा मधुरिपुर्योजातलक्ष्मीस्स्वयं
सङ्कल्पं परिकल्पयन् श्रितवतां कल्पद्रुभावाश्रयात् ।
क्षीरोदं हसतः सुधामधुरिमोद्गारैर्गिरां सद्यश-
श्चन्द्रंदीपयतोऽस्य संसदि बुधश्रेण्यां गुणान् किं स्तुमः ॥

32 भाषावारविलासिनी विटमतिप्रज्ञं ब्रिटीशाधिपैः
संयोज्य प्रथमं श्रुतान्वितममुं प्रीत्या डिलेट् सत्पदे ।
अस्मै यद्विरुदं व्यतारि च महाराजेति राजार्हत
हित्वाऽन्यत्र यथार्थतां स्थितमभूदत्रैव सार्थं हि तत् ॥

33 उन्मीलन्नुदये क्रमादनुचरन्नित्यं सहस्रैः करै-
र्गृह्णन् यस्य गुरुप्रभावविभवाल्लेशं दिनार्द्धे रविः ।

---

29. अमरनुता विद्या संस्कृतविद्या नरेन्द्रा राजानः विषवैद्याश्च अत्र जयपुरे आङ्ग्लविद्याप्राबल्यात् संस्कृतभाषा लुप्तप्राया आसीत् ॥ तदवलोक्यायं महाराजः एकां संस्कृतविद्याशालां स्थापितवान् ॥

31 कल्पद्रोर्भावः स्वभावो जन्मच बुधानां पण्डितानां देवानाञ्च श्रेणयो यस्यां संसदि ॥

32 (१९३५) एतत् परिमिताङ्ग्लाब्दादौ एतस्य महाराज डिलिट्ट् इति पदद्वयप्राप्तिर्बोध्या ॥

33 सहस्रैरिति बहुवचनं नाडीनां सहस्रत्वेऽपि रश्मीनामनेकसहस्रत्वात् यद्वा हसन्ति प्रकाशन्ते निरर्थकमिति हस्राः 'हसधातोः स्फरितञ्चीत्यादिना रक् तैः स रविः ॥

तज्ज्वालाकुलितो विसृज्य च तथा तं पश्चिमाम्भोनिधौ
मग्नश्शान्तवपुर्व्यवस्यति पुनस्तद्वत्प्रभाते लघुः ।

34 सर्वत्रैव सदा विकासि विमला क्षीणावदातद्युते-
र्यत्कीर्तेस्तुलनालवं जिगमिषुस्स्वाङ्कस्य निर्मुक्तये ।
लावं लावमयं निजानवयवान् सञ्जायते निर्लवः
पक्षान्ते पुनरेधितो नवनवं धत्ते वपुश्चन्द्रमाः ॥

35 जिष्णुश्चित्रगतिः परासुनयनेऽखिन्नोप्यलक्ष्याकृतिः
स्तोतव्यस्थितिराहवेषु सदयो योऽवर्णवादिक्षयी ।
धर्माह्लादिसुधानिधानवचनो दाने सुरद्रुर्गुणा-
धानो वीरवरो दिगीश्वरवपुः सोऽयं नृपो विक्रमः ॥

36 वेदानामिव मन्त्रयन्त्रितहृदामोङ्कारवन्मन्त्रिणा-
माद्यो राजमणेः प्रधानसचिवः श्रीरामकृष्णाभिधः ।
यद्बुद्ध्या जगतीतले किमपि नासाध्यं यदग्रे पुन-
र्हीणस्स्याद्धिषणोऽपि तस्य कृतिनो वाच्याः किमन्ये गुणाः ॥

37 जामातास्य सुहृत्तमो विजयते स्वेच्छानुरूपस्सुधी-
रिच्छादुर्गनरेशवंशनलिनप्रोद्भासि भासां निधिः ।
सद्विद्यानिलयोऽतिवादविवदन्मत्तेभसिंहोद्यम-
श्श्रीविद्याधरसिंह इत्यभिहितो देवः सदेवोपमः ॥

35 अत्र पद्ये क्रमेण शोभाविलासेत्यादिनोक्ता अष्टौ पौरुषगुणाः इन्द्रानिलेत्यादिनोक्तानां अष्टानां दिक्पालानां धर्मः चतुःप्रकारवीरगुणाश्च उक्ता वेदितव्याः ॥

37 इच्छा दुर्गमिति उत्कले सिंहभूमौ प्रसिद्धम् ॥

38 सन्दिग्धेषु यथार्थवादविदुरः श्रीकृष्णजाताधिक-
प्रेमा भीमपराक्रमोऽर्जुनरुचीराजक्रियानाकुलः ।
सन्मन्त्रैस्सहदेववद्वितनुते योऽजातशत्रोर्नृप-
स्यास्य क्ष्मावलयेऽत्र निर्मलतरं यौधिष्ठिरं सद्यशः ॥

39 नानारत्नविचित्रचारुरुचिभिः शक्रायुधं द्योतयन्
चञ्चत्काञ्चनचालनैश्च चपला मालां तनौ खेलयन् ।
दारिद्र्यानलदग्धयाचकवनीमाप्लावयन् सन्ततं
यत्कोशो द्रविणानि तद्रणझणत्कारस्वनैर्वर्षति ॥

40 त्यक्तायव्ययनिर्णयावधितया शाल्यादिकैकैकया
यज्ज्ञात्यापि समुद्रमान्द्रसिकतामानं समानम्भवेत् ।
तैरुत्तुङ्गसुमेरुशृङ्गसदृशागारोदरापूरितै-
र्धन्यो धान्यधनैर्जनो जनपतेरस्मान्न चान्यः क्वचित् ॥

41 श्रेणीबद्धतयायतास्तृतवपुः कान्तिप्रवाहैः पृथक्
तन्वानाननु जह्नुभानुतनुजायुग्मश्रियं यत्नतः ।
ग्रामारण्यतटाश्रया बहुपया यद्गोमहिष्यावली
सङ्गत्य क्वचिदेव योजनशतं धत्ते प्रयागभ्रमम् ॥

42 पूर्वं सर्वभुजोपभुक्तककुभं लिङ्गत्कलिङ्गं स्पृशन्
गौतम्यामवगाह्य पुण्यजनभूप्रान्तेऽस्य देशो महान् ।

---

38 विदुरो ज्ञाता कौरवमन्त्री च भीमो भयानकः पाण्डवद्वितीयश्च अर्जुनो विशदः पाण्डवमध्यमश्च अनाकुल इत्यत्र नकुलएव नाकुलः पाण्डवचतुर्थश्च ॥

41 जह्नुभानुतनुजायुग्मं गङ्गा यमुनाद्वयं पयः क्षीरमम्बु च ॥

42 सर्वभुक् अग्निः क्षेत्रं पुरुषोत्तम क्षेत्रं पूर्वाग्नेयादौ विजयनगरादयः नैर्ऋत्यां गोदावरी पश्चिमे बस्तरमहाराज्यं वायव्योत्तरयोः मध्यप्रदेशान्तर्गतरायपुर। खडियालयादयः ऐशान्यां पारलाखेमण्डि। बृहत्खेमण्डिप्रभृतयः ॥ एतन्मध्यवर्ति जयपुरमहाराज्यमिति बोध्यम् ॥

पश्चात्प्रावृतबस्तराञ्चलवपुर्मध्यप्रदेशोत्तरा-
सङ्गीशस्य दिशोत्कले भगवतः क्षेत्रोन्मुखं धावति ॥

43 साहस्रैरपि यत्त्रयोदशमितैः क्रोशार्धखण्डैः स्फुट-
स्तत्रानेकवसुन्धरासुसहितो रत्नाकराणां शतैः ।
शश्वल्लक्ष्यसरित्सपक्षशिखरित्रातात्प्रशस्यश्चत-
त्प्रांशुत्वात् क्षितिमूर्ध्निभात्युदधितो हस्तैस्सहस्राधिकैः ॥

44 यश्चाष्टादशसङ्ख्यमुख्यनगरी शाखा पुराणां श्रिया
द्वीपाष्टादशकं जिगीषतितरां सम्पद्वराणां क्रमात् ।
वास्तव्यैर्नियुताधिकैरपि नरैर्भाषाशतैस्संस्तुते
राज्ये प्राज्यतरे वरे नरवरो यस्मिंश्च साम्राज्यभाक् ॥

45 पूर्वे दुर्गमपर्वतो गुरुतरः पश्चान्महासागरो
मध्ये राजति नामतो जयपुरी यद्राजधानी शुभा ।
दूराकृष्टहिमाद्रिसिन्धुजठरास्तीर्णस्फुरद्भारत-
क्ष्मासर्वस्वसमर्पिका नयनयोर्या घूर्णनादन्तिके ॥

46 तत्रान्तर्जितवैजयन्तभवनं प्राकारशोभाकरं
सिंहद्वारसुशोभितं च नृपतेरावासदुर्गद्वयम् ।
साक्षाद्यस्य च रक्षिणी पृथगिह प्रासादमध्यासिता
दुर्गा दुर्गतिहा तथा भगवती सौभाग्यदा सर्वदा ॥

43 रत्नाकरः रत्नखनिः समुद्रश्च सपक्षः सहायी पक्षसहितश्च जयपुरराज्यस्य परिमाणं त्रयोदश-सहस्रपरिमितक्रोशार्धखण्डैः (मैलुइति प्रसिद्धैः) सम्मितं औन्नत्ये समुद्रसमस्थलात् सहस्राधिकहस्तपरि-मितम् ॥ पञ्चदशशतफुट् इत्यत उपरीति बोध्यम् ॥

44 जयपुरराज्यान्तर्गतानि नवरङ्गपुर कोटपारि । रायगड । गुणपुर । सिंहपुरादीनि अष्टादश-शाखा नगराणि वेदितव्यानि अत्र जनसङ्ख्या (१०००००००) एतदुपरिबोध्या ॥

47 दिङ्मातङ्गजिगीषया दिशिदिशि भ्राम्यत्करोत्क्षेपणा-
च्छन्नोर्ध्वायनयत्प्रभिन्नगजताभित्तिप्रतिष्टम्भनात् ।
पूर्वास्ताद्रिसुमेरुसागरवियत्प्रोल्लङ्घने विघ्निता
रुद्धाधःक्षितिमुल्लिखन्ति हि खुरैर्यद्वाजिनां राजयः ॥

48 सप्ताश्रित्य तुरङ्गमानपि घटी षष्ट्यैकवारं भुवं
भ्राम्यन्नेव कथं तथोच्चपदवीभागेकचक्रो रथः ।
इत्यन्तर्ज्वलितानलाकुलतया धूमान्वमन्तः स्वनै-
र्धावन्त्युड्डयनेच्छया स्वयमितो यन्त्रात्मयत्स्यन्दनाः ॥

49 अस्माभिर्नृपकिङ्करैरपि कृतं नैवालकालुण्ठनं
शीर्षादाहरणं मणेः फणिपतेर्नापीति यत्पत्तिभिः ।
नासाधस्स्थितवीरकेशनिचयो व्यस्तं द्विधादुर्यशः
स्वं मत्वोच्छ्वसितैः प्रकम्प्य च करैरुन्मृज्यते सन्ततम् ॥

50 यत्पौरास्सुरसन्निभाः सुमनससन्तानलक्ष्मीस्फुर-
त्सौधामेयरसोपभोगविलसद्रम्भोरुसम्भाविताः ।
सिद्धाः सद्धरिनामकीर्तनविधौ तद्भावबद्धादरा
नृत्यादावपि किन्नरीकृतरसा गन्धर्वविद्याधराः ॥

51 काव्ये भाव्यधियो यदीयकवयो नासत्यकृत्यागदे
वैद्या यस्य च विश्वकर्मनिपुणाः शिल्पे पुनः शिल्पिनः ।

50. सुमनसः पण्डिताः देवाश्च सन्तानेतिपुत्रपौत्रादिपरम्परा । देववृक्षविशेषश्च । सौधं राजसदनं सौधो सुधासम्बन्धी च रम्भा कदलीवृक्षः अप्सरोविशेषश्च ऊरुस्सक्थि उरु महच्च सिद्धाः प्रसिद्धाः देवयोनिविशेषाश्च किन्नरा देवयोनिविशेषाः कुत्सितनराश्च रसा पृथिवी रसोऽनुरागश्च गन्धर्वविद्याधरा. गान्धर्वविद्यानिपुणाः देवयोनिविशेषाश्च ॥

51. काव्यं कविकर्म काव्यो दैत्यगुरुश्च नासत्यकृत्यं सत्यकर्म स्ववैद्यकर्म च विश्वकर्म निखिलकर्म विश्वकर्मा देवशिल्पी च गुरुरुपदेशकः बृहस्पतिश्च सोऽहं रामनाथनन्दशर्मा पण्डितः कविः बुधश्च ॥

श्रौते कर्मणि तान्त्रिके च गुरवो यस्यैव ते शास्त्रिण-
स्तस्य श्रीक्षितिमण्डलामरपतेस्सोऽहं सभापण्डितः ॥

52 के. सी. आयिपदाङ्कितक्षितिपतेः श्रीविक्रमस्याग्रहात्
प्रारब्धा तनुजस्य तस्य समये संवर्धिता मत्कृतिः ।
सेयं विक्रमदेववर्मनृपतेः साहित्यसम्राट्पदो-
पेतस्यावसरे तदादरवशात्सम्पूर्य मुद्रापिता ॥

53 शब्दं केचिदुदाहरन्ति सुधियस्तद्ब्रह्मरूपं परे
शब्दार्थौ तदिदं वचो युगमनादेयं जडत्वात्तयोः ।
या सूते निजसत्तया तदुभया भिन्नं समस्तं जगत्
सा स्वांशस्तुतिरूपयास्तु सुहिताकृत्यानया चिन्मयी ॥

इति श्रीमहोपाध्याय, श्रीजयपुरसंस्थानसभापण्डित,
विद्याभूषणोपाधिक, श्रीरामनाथनन्दशर्मणा विरचितं
श्रीजयपुरसूर्यवंश्यावलिनामकं काव्यं
समाप्तम् ॥

॥ शुभं भूयात् ॥

---

52. तस्य तनुजस्य रामचन्द्रदेवस्य ॥

V. Ramaswamy Sastrulu & Sons, at 'Vavilla' Press, Madras.—1938.

# ERRATA.

## ॥ शुद्धिपत्रिका ॥

| | Page. पृष्ठसंख्या | Line. पङ्क्तिः | Error. अशुद्धम् | Correction. शुद्धम् |
|---|---|---|---|---|
| Introduction | 1 | 15 | Adores. | Adorns. |
| मूलम् | १ | १ | राज्यवंशावळिः | राजवंश्यावळिः |
| व्याख्यानम् | ७ | १२ | पुरुपीत्तम | पुरुषोत्तम |
| मूलम् | १५ | ७ | तारकामन्त्र | तारकमन्त्र |
| व्याख्यानम् | १६ | ३ | अनेर्धमञ्जरी | अनेकार्थमञ्जरी |
| ,, | १८ | १६ | बभुव | बभूव |
| मूलम् | २० | ४ | वभूव | बभूव |
| ,, | २१ | ३ | वनोल्लवणा | वनोल्लवणा |
| व्याख्यानम् | २२ | २१ | रश्मिन्यादि | रश्विन्यादि |
| मूलम् | २३ | २ | निवन्धनात् | निबन्धनात् |
| व्याख्यानम् | २६ | २१ | द्रुष्ट | द्रष्ट |
| ,, | २७ | ८ | विष्णौ | विष्णौ |
| ,, | २८ | २ | शीर्षसश्च | शीर्षसश्च |
| ,, | ३० | ७ | ग्रस्मम् | ग्रस्तम् |
| ,, | ३१ | २१ | अस्मिल्लद् | अस्माल्लिद् |
| ,, | ३७ | १२ | गुणबत्वेन | गुणवत्वेन |
| ,, | ३८ | १७ | तस्माद्भनोः | तस्माद्भानोः |
| ,, | ४५ | २१ | मिहिशे | मिहिरो |
| ,, | ,, | २४ | मन्येन्ते | मन्यन्ते |
| ,, | ,, | २६ | भाप्याध्यधनार्थम् | भाष्याध्ययनार्थम् |
| ,, | ,, | २७ | राजाभावेन | राज्याभावेन |
| ,, | ,, | २९ | पुत्रकेचित् | पुत्तइति केचित् |
| ,, | ४६ | ९ | दर्शिनात् | दर्शनात् |
| ,, | ,, | १२ | दर्गे | दुर्गे |
| ,, | ,, | १८ | अङ्ग | आंग्ल |
| ,, | ,, | २१ | कैन | कैर्न |

| | Page.<br>पृष्ठसंख्या | Line.<br>पङ्क्तिः | Error.<br>अशुद्धम् | Correction.<br>शुद्धम् |
|---|---|---|---|---|
| व्याख्यानम् | ४६ | २४ | नेच्च | नेच्छ |
| ,, | ४७ | १८ | सबत्र | सर्वत्र |
| ,, | ४८ | ५ | कमणि | कर्मणि |
| मूलम् | ५१ | ५ | कुलर्यै | कुलार्यै |
| व्याख्यानम् | ५७ | २२ | अजय | अज |
| मूलम् | ६१ | ६ | रूपर्निर्दि | रूपनिर्दि |
| ,, | ११० | १ | लोकनष्टकृ | लोकनकृष्ट |
| व्याख्यानम् | १३० | १० | अमर्चयत् | अमर्दयत् |
| ,, | १३४ | ७ | अशक्थ | अशक्य |
| मूलम् | १५१ | २ | धनुंषि | धनूंषि |
| व्याख्यानम् | ,, | ९ | कपालो | कपोलो |
| मूलम् | १६२ | २ | विजहै | विजहौ |
| ,, | १८४ | ६ | लोष्ठ | लोष्ट |
| ,, | २४४ | ९ | अम्बजै | अम्बुजै |

